## अथ स्नातकधर्मप्रकरणम् ६

एवं श्रौत-स्मार्तानि कर्माण्यभिधायेदानीं गृहस्थस्य स्नानादारभ्य ब्राह्म... श्यकर्तव्यानि विधि-प्रतिषेधात्मकानि मानससंकल्परूपाणि स्नातकव्रतान्याह

**न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः।**
**न विरुद्धप्रसङ्गेन संतोषी च भवेत्सदा ॥ १२९ ॥**

ब्राह्मणस्य प्रतिग्रहादयोऽर्थप्राप्त्युपाया दर्शिताः तत्र विशेष उच्यते—**स्वा... यविरोधिनमर्थम**प्रतिषिद्धमपि **नेहेत** नान्विच्छेत् । **न यतस्त...** यतः कुतश्चिदविदिताचारान्न । **विरुद्धप्रसङ्गेन** विरुद्धमयाज्ययाजनादि... नृत्यगीतादिः । विरुद्धं च प्रसङ्गश्च विरुद्धप्रसङ्गं तेन । नार्थमीहेतेति संब... नञ आवृत्तिः प्रत्येकं पर्युदासार्था । सर्वत्राप्यस्मिन्स्नातकप्रकरणे नञ्शब्दः... पर्युदासार्थ एव । किंचिदर्थालाभेऽपि **संतोषी** परितृप्तो **भवेत्**। चक... यतश्च 'संतोषं परमास्थाय सुखार्थी संयतो भवेत्' (४।१२) इति मनुस्मर...

कुतस्तर्हि धनमन्विच्छेदित आह—

**राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा।**
**दम्भिहैतुकपाखण्डिबकवृत्तींश्च वर्जयेत् ॥ १३० ॥**

**क्षुधा सीदन्** पीड्यमानः स्नातकः **राज्ञो** विदितवृत्तान्तात्, **अन्तेवा...** वक्ष्यमाणलक्षणात्, **याज्यात्** याजनार्हाच्च, **धनमाददीत**। 'क्षुधा सीदन्'... नेन विभागादिप्राप्तकुटुम्बपोषणपर्याप्तधनो न कुतश्चिदर्थमन्विच्छेदिति ग... किंच **दम्भिहैतुका**दीन् सर्वकार्येषु **वर्जयेत्**। चकाराद्विकर्मस्थबैडालव्रति... ठान्। यथाह मनुः (४।३०)—'पाखण्डिनो विकर्मस्थान्बैडालव्रतिकान्... हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥' इति। लोकरञ्जनार्थमेव कर्म... दम्भी, युक्तिबलेन सर्वत्र संशयकारी हैतुकः, त्रैविद्यविरुद्धपरिगृहीता... **पाखण्डिनः**। बकवदस्य वर्तनमिति **बकवृत्तिः**। यथाह मनुः (४।१९... 'अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च ब... रुदाहृतः ॥' इति। प्रतिषिद्धसेविनो विकर्मस्थाः। बिडालो मार्जारस्तस्य... स्वभावो यस्यासौ बैडालव्रतिकः। तस्य लक्षणमाह मनुः (४।१९५)—धर्म... ध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः। बैडालव्रतिको ज्ञेयो हिंस्रः सर्वा... धकः ॥' इति। शठः=सर्वत्र वक्रः[1]। एतैः संसर्गनिषेधादेव[2] स्वयमेवं... भवेदिति गम्यते ॥ १३० ॥

टिप्प०—1 केचित्तु—'वक्र' इति कार्यसमर्थोऽपि व्याजेन कार्यत्यागी... 2 अनेन किंचित्कालं संसर्गो यत्र कार्ये जायते तत्रैवैतेषां वर्जनं भिक्षादानं... र्भवत्येवेति न प्रागुक्तविरोधः।

पाठा०—१ कुतश्चिद्धनमन्वि क. २ वृत्तिकशठान् क. ग. ३ नैष्कृति...

**शुक्लाम्बरधरो नीचकेशश्मश्रुनखः शुचिः ।**
**न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः ॥ १३१ ॥**

किंच, शुक्ले धौते अम्बरे वाससी धरतीति[1] **शुक्लाम्बरधरः** । केशाश्च श्मश्रूणि नखाश्च केशश्मश्रुनखम्, **नीचं** निकृत्तं **केशश्मश्रुनखं** यस्यासौ तथोक्तः । शुचिरन्तर्बहिश्च स्नानानुलेपनधूपस्रगादिभिः सुगन्धी च भवेत् । यथाह तमः (९।२)—'स्नातको नित्यं शुचिः सुगन्धिः स्नानशीलः' इति । सुगन्धि-विधानादेव निर्गन्धमाल्यस्य निषेधः । तथा च गोभिलः—'नागन्धां स्रजं धारयेदन्यत्र हिरण्यरत्नस्रजः' इति । सदा स्नातक एवंभूतो भवेत् । एतच्च सति विभवे; 'न जीर्णमलवद्वासा भवेच्च विभवे सति' (मनु. ४।३४) इति स्मरणात् । न च **भार्यादर्शने** तस्यां पुरतोऽवस्थितायाम**श्नीयात्**; अवीर्यवदपत्योत्पत्ति-प्रसङ्गात् । तथा च श्रुतिः—'जायाया अन्ते नाश्नीयादवीर्यवदपत्यं भवति' इति । अतस्तया सह भोजनं दूरादेव निरस्तम् । **न चैकवासाः, न संस्थितः** 'अश्नी-यात्' इति संबध्यते ॥ १३१ ॥

**न संशयं प्रपद्येत नाकस्मादप्रियं वदेत् ।**
**नाहितं नानृतं चैव न स्तेनः स्यान्न वार्धुषी ॥ १३२ ॥**

किंच, कदाचिदपि **संशयं** प्राणविपत्तिसंशयावहं कर्म **न प्रपद्येत** न कुर्यात् । यथा व्याघ्रचौराद्युपहतदेशाक्रमणादि । **अकस्मा**न्निष्कारणं किंचिदपि[2] पुरुषं **अप्रियं** उद्वेगकरं वाक्यं **न वदेत्** । **न चाहितं, नानृतं** वा प्रियमपि, अहितकारात् असभ्यं बीभत्सकरं च, अकस्मान्न वदेदिति संबध्यते । एतच्च परिहासादि-व्यतिरेकेण; 'गुरुणापि समं हास्यं कर्तव्यं कुटिलं विना' इति स्मरणात् । **न स्तेनः** अन्यदीयस्यादत्तस्य ग्रहीता **न स्यात्** । **न वार्धुषी स्यात्** । प्रति-षिद्धवृद्धयुपजीवी वार्धुषी ॥ १३२ ॥

**दाक्षायणी ब्रह्मसूत्री वेणुमान्सकमण्डलुः ।**
**कुर्यात्प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन् ॥ १३३ ॥**

किंच, दाक्षायणं सुवर्णम्, तदस्यास्तीति[3] **दाक्षायणी** । ब्रह्मसूत्रं यज्ञोपवीतं तदस्यास्तीति **ब्रह्मसूत्री, वैणवयष्टिमान्, कमण्डलुमान्**, 'स्यात्' इति सर्वत्र संबन्धनीयम् । अत्र च ब्रह्मचारिप्रकरणोक्तस्यापि यज्ञोपवीतस्य पुनर्वचनं द्वितीयप्राप्त्यर्थम् । यथाह वसिष्ठः—'स्नातकानां तु नित्यं स्यादन्तर्वासस्तथोत्तरम् ।

**टिप्प०—1** 'धारयति' इति पाठे निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' इति बोध्या ।

**पाठा०—१** संस्थित उत्थितः. २ कंचिदपि पुरुषं स्त्रियमप्रियं क. ३ तद्वान्; तद्धारणात् क.

यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुः ॥' इति । अत्र च दाक्षायणीति न्याभिधानेऽपि कुण्डलधारणमेव कार्यम्; 'वैष्णवीं धारयेद्यष्टिं सोदकं च लुम् । यज्ञोपवीतं वेदं[1] च शुभे रौक्मे च कुण्डले ॥' (४।३६) इति मनुस्म तथा **देवं** देवप्रतिमाम्, **मृदं** तीर्थादुद्धृतां, **गां, ब्राह्मणं, वनस्पतिं** त्यादिकं **प्रदक्षिणं कुर्यात्** । एतान्दक्षिणतः कृत्वा प्रव्रजेदित्यर्थः । एवं ष्पथादीनपि 'मृदं गां देवतां विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि प्रज्ञातांश्च वनस्पतीन् ॥' (४।३९) इति मनुस्मरणात् ॥ १३३ ॥

**न तु मेहेन्नदीछायावर्त्मगोष्ठाम्बुभस्मसु ।**
**न प्रत्यग्न्यर्कगोसोमसंध्याम्बुस्त्रीद्विजन्मनः ॥ १३४ ॥**

**नद्यादिषु न मेहेत्** न मूत्रपुरीषोत्सर्गं कुर्यात्, एवं श्मशानादा यथाह शङ्खः—'न गोमयकृष्टोप्तशाद्वलचितिश्मशानवल्मीकवर्त्मखलगोष्ठबिल पुलिनेषु मेहेत्; भूताधारत्वात्' इति । तथाऽग्न्यादीन्प्रति अग्न्यादीनामभिं मेहेत्, नाप्येतान्पश्यन्। यथाह गौतमः (९।१२)—'न वाय्वग्निविप्रादि देवताश्च प्रतिपश्यन्वा मूत्रपुरीषामेध्यान्युदस्येत्, न देवताः प्रति पादौ येत्' इति । एतद्देशव्यतिरेकेण भूमिमयज्ञियैस्तृणैरन्तर्धाय मूत्रपुरीषे कुर्या यथाह वसिष्ठः—'परिवेष्टितशिरा भूमिमयज्ञियैस्तृणैरन्तर्धाय मूत्रपुरीषे इति ॥ १३४ ॥

**नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनाम् ।**
**न च मूत्रं पुरीषं वा नाशुची राहुतारकाः ॥ १३५ ॥**

**नैवार्कमीक्षेतेति** यद्यप्यत्र सामान्येनोक्तं, तथाप्युदयास्तमयराहुग्र प्रतिबिम्बमध्याह्नवर्तिन एवादित्यस्यावेक्षणं निषिध्यते, न सर्वदा । यथोक्तं (४।३७)—'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन । नोपसृष्टं न वा मध्यं नभसो गतम् ॥' इति । उपभोगादन्यत्र **नग्नां स्त्रियं नेक्षेत** । 'न स्त्रियमीक्षेतान्यत्र मैथुनात्' इत्याश्वलायनः । **संसृष्टमैथुनां** कृतोपभो उपभोगान्ते नग्नामपि नेक्षेत । चकाराद्भोजनादिकमाचरन्तीम् । तथा म (४।४३)—'नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीम् । क्षुवतीं जृम्भ च न चासीनां यथासुखम् ॥ नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृताम् । न

टिप्प०—1 वेदं=दर्भमुष्टिम्, 'ऐष्टिकवेदप्रकृतिं कुशमयीं मुष्टिम्'–इति यणः । 2 यथोक्तं **महाभारते**–'प्रत्यादित्यं प्रत्यनस्तं प्रतिगां च प्रतिद्विजम् । ये च पथिषु ते भवन्ति गतायुषः' इति । 3 अमेध्यग्रहणेनैव सिद्धे मूत्रपुरीषयो क्तिस्तयोरतिशयेन वर्जनार्थम्, अन्यथा दोषाधिक्यापत्तिः–इति **हरदत्तः** । स्त्रीजातिपरम्; न केवलं भार्यापरम्–इति **हरदत्तः** ।

पाठा०—१ एवं देवं क; देवतार्चां. २ प्रदक्षिणतः ख. ३ प्रत्य क. ४ श्मशानवल्मीक क. ५ नैतान् प्रति ख. ६ मेहनं कार्यं क.

प्रसवन्तीं च श्रेयस्कामो द्विजोत्तमः ॥' इति । **मूत्रपुरीषे** च **न** पश्येत्। तथा **अशुचिः** सन् **राहुतारकाश्च न पश्येत्**। चकारादुदके स्वप्रतिबिम्बं न पश्येत्; 'न चोदके निरीक्षेत स्वं रूपमिति धारणा' (मनु. ४।३८) इति वचनात् ॥ १३५ ॥

**अयं मे वज्र इत्येवं सर्वं मन्त्रमुदीरयेत् ।**
**वर्षत्यप्रावृतो गच्छेत्स्वपेत्प्रत्यक्शिरा न च ॥ १३६ ॥**

वर्षति सति 'अयं मे वज्रः पाप्मानमपहन्तु' इति मन्त्रमुच्चारयेत् । वर्षति अप्रावृतोऽनाच्छादितो न गच्छेन्न धावेत्। 'न प्रधावेच्च वर्षति' इति प्रतिषेधात्; न च प्रत्यक्शिराः स्वप्यात् । चकारान्नग्नो न **शयीत**। एकश्च शून्यगृहे नच नग्नः शयीतेति । 'नैकः सुप्याच्छून्यगेहे' (४।५७) मनुस्मरणात् ॥ १३६ ॥

**ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत् ।**
**पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत् ॥ १३७ ॥**

**ष्ठीवन**मुद्गिरणम्, **असृक्** रक्तं, **शकृत्** पुरीषं, शेषं प्रसिद्धम्, एतान्य**प्सु** न **निक्षिपेत्**। एवं तुषादीनपि। यथाह शङ्खः—'तुषकेशपुरीषभस्मास्थिश्लेष्म-नखलोमान्यप्सु न निक्षिपेन्न पादेन पाणिना वा जलमभिहन्यात्' इति । **अग्नौ पादौ न प्रतापयेत्**। **नाप्यग्निं लङ्घयेत्** । **च**कारात् ष्ठीवनादीन्यग्नौ न निक्षिपेत्। मुखोपधमनादि चाग्नेर्न कुर्यात्। तथा च मनुः (४।५३)—'नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम् । नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् ॥ अधस्तान्नोपदध्याच्च न चैनमभिलङ्घयेत् । न चैनं पादतः कुर्यान्न प्राणिबाधमाचरेत् ॥' इति ॥ १३७ ॥

**जलं पिबेन्नाञ्जलिना न शयानं प्रबोधयेत् ।**
**नाक्षैः क्रीडेन्न धर्मघ्नैर्व्याधितैर्वा न संविशेत् ॥ १३८ ॥**

**जलमञ्जलिना** संहताभ्यां हस्ताभ्यां **न** पिबेत् । 'जल'ग्रहणं पेयमात्रोपलक्षणम्। विद्यादिभिरात्मनोऽधिकं **शयानं न प्रबोधये**न्नोत्थापयेत्। 'श्रेयांसं न प्रबोधयेत्' इति विशेषस्मरणात् । **अक्षा**दिभिर्न **क्रीडेत्** । **धर्मघ्नैः** कुक्कुटलम्भनादिभिर्न क्रीडेत् । **व्याधितै**र्ज्वराद्यभिभूतैः सहैकत्र **न संविशेन्न** शयीत ॥ १३८ ॥

---

**टिप्प०—1** इदं तु स्वीयगृहविषयम्, तथा चोक्तम्—'स्वगृहे प्राक्शिराः शेते आयुष्यं दक्षिणाशिराः । प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक्शिराः' इति न पूर्वापरविरोधः । 2 पटाद्याच्छादिततापने न दोष इति **मेधातिथिः**। 3 क्षीरादेरप्रतिषेधः—इति **मेधातिथिः**। 4 एतेन 'इदं ते युक्तम्, इदमयुक्तमित्युपदेशादिना न प्रबोधयेत्' इति **मेधातिथिव्याख्यानमपास्तम्**।

---

**पाठा०—१** अपहनत् A. २ च्छादितो न इयात् क. ३ मनुलङ्घयेत् T. ४ मतिलङ्घयेत् ग. ५ प्राणाबाध ख.

**विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम् ।**
**केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् ॥ १३९ ॥**

जनपदग्रामकुलाचार**विरुद्धं कर्म वर्जयेत्**। प्रेत[1]धूमं, बाहुभ्यां **तरणं** च, वर्जयेदिति संवद्ध्यते। **केशादिषु च संस्थितिं वर्जयेत्**। ...रादस्थिकार्पासामेध्येषु च ॥ १३९ ॥

**नाचक्षीत धयन्तीं गां नाद्वारेण विशेत्क्वचित् ।**
**न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः ॥ १४० ॥**

परस्य क्षीरादि पि[1]बन्तीं गां परस्मै **नाचक्षीत** नच निवर्तयेत्। अद्वा...कापथेन **क्वचिदपि** नगरे ग्रामे मन्दिरे वा न **प्रविशेत्**। नच क्षुद्र... **शास्त्रातिक्रमकारिणो राज्ञः** सकाशात्**प्रतिगृह्णीयात्** ॥ १४० ॥

**प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः ।**
**दुष्टा दशगुणं पूर्वात्पूर्वादेते यथाक्रमम् ॥ १४१ ॥**

**प्रति[2]ग्रहे** साध्ये सून्यादयः पञ्च पूर्वस्मात्पूर्वस्मात्परः परो **दशगुणं**... सूना प्राणिहिंसा साऽस्यास्तीति **सूनी** प्राणिहिंसापरः। **चक्री** तैलिकः। ... सुराविक्रयी। **वेश्या** पण्यस्त्री। **नराधिपोऽ**नन्तरोक्तः ॥ १४१ ॥

अथाध्ययनधर्मानाह—

**अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।**
**हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥ १४२ ॥**

अधीयन्त इत्य**ध्याया** वेदाः, तेषा**मुपाकर्म** उपक्रममोषधीनां प्रादुर्भावे, **श्रावण**मासस्य पौर्णमास्यां, **श्रवण**नक्षत्रयुते वा दिने, **हस्तेन**... **पञ्चम्यां** वा, स्वगृह्योक्तविधिना कुर्यात्। यदा तु श्रावणे मासि **ओषध**... प्रादुर्भवन्ति, तदा भाद्रपदे मासि श्रवणनक्षत्रे कुर्यात्। तत ऊर्ध्वं सा... मासान्वेदानधीयीत। तथा च मनुः (४।९५)—'श्रावण्यां प्रौष्ठपद्यां वा... कृत्य यथाविधि। युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान् ॥' इति ॥

उत्सर्जनकालः—

**पौषमासस्य रोहिण्यामष्टकायामथापि वा ।**
**जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः ॥ १४३ ॥**

**टिप्प०**—1 प्रेतधूमो नाम बालातपः। **मनुस्तु** संगवकालातप इत्याह। ... तु शरदि पुनः संधुक्षणात् आदित्यस्य बाल्यतया तदातपो बालातप इत्याहुः।

**पाठा०**—१ क्षीरादि धयन्तीं गां क. २ प्रतिग्रहेषु साध्येषु ख.

पौषमासस्य रोहिण्यामष्टकायां[1] वा ग्रामाद्बहिर्जलसमीपे[2] छन्दसां नां स्वगृह्योक्तविधिनोत्सर्गं कुर्यात् । यदा पुनर्भाद्रपदे मासि उपाकर्म माघशुक्लप्रथमदिवसे उत्सर्गं कुर्यात् । यथोक्तं मनुना ( ४।९६ )—'पुष्ये न्दसां कुर्याद्बहिरुत्सर्जनं द्विजः । माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽ- ॥' इति । तदनन्तरं पक्षिणीमहोरात्रं[4] वा विरम्य शुक्लपक्षेषु वेदान् कृष्ण- ङ्गान्यधीयीत । यथाह मनुः ( ४।९७ )—'यथाशास्त्रं तु कृत्वैवमुत्सर्गं सां बहिः । विरमेत्पक्षिणीं रात्रिं यद्वाऽप्येकमहर्निशम् ॥ अत ऊर्ध्वं तु सि शुक्लेषु नियतः पठेत् । वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेत् ॥ ॥ १४३ ॥

अनध्यायानाह—

> त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।
> उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा ॥ १४४ ॥

उक्तेन मार्गेणाधीयानस्य द्विजस्य शिष्यर्त्विग्गुरुबन्धुषु प्रेतेषु मृतेषु त्र्यह- ध्यायस्त्रीनहोरात्रानध्ययनं वर्जयेत् । उपाकर्मणि उत्सर्गाख्ये च कर्मणि त्र्यहमनध्यायः । उत्सर्गे तु मनूक्तपक्षिण्यहोरात्राभ्यां सहास्य विकल्पः । शाखाश्रोत्रिये स्वशाखाध्यायिनि च प्रेते त्र्यहमनध्यायः ॥ १४४ ॥

> संध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ।
> समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥ १४५ ॥

संध्यायां मेघध्वनौ, निर्घाते आकाशे उत्पातध्वनौ, भूमिचलने, उल्का- प्रादुर्भावे, मन्त्रस्य ब्राह्मणस्य वा समाप्तौ, आरण्यकाध्ययने च द्युनिशमहो- मनध्यायः ॥ १४५ ॥

> पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ।
> ऋतुसंधिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च ॥ १४६ ॥

पञ्चदश्याममावास्यायां पौर्णमास्यां चतुर्दश्यामष्टम्यां राहुसूतके चन्द्र- उपरागे च द्युनिशमनध्यायः । यत्तु—'त्र्यहं न कीर्तयेद्ब्रह्म राज्ञो राहोश्च सूतके' ( मनु० ४।११० ) इति तद्ग्रस्तास्तविषयम् । ऋतुसंधिगतासु च प्रतिपत्सु

---

टिप्प०—1 कृष्णाष्टम्याम् । 2 मेधातिथिस्तु—अनावृतदेशे इत्याह । 3 अर्ध- मेषु मासेषु गतेषु यत्पुष्यनक्षत्रं तत्रेत्यर्थः । 'पौषे' इति युक्तो मनुपाठः । 4 'द्वाव- व रात्रिश्च पक्षिणीत्यभिधीयते' इति वचनात् । बन्धवोऽत्र त्वसपिण्डाः; सपिण्डेषु हाविधानात्—अप० ।

श्राद्धिकभोजने तत्प्रतिग्रहे च द्युनिशमनध्यायः । एतच्चैकोद्दिष्ट
विषयम्; तत्र तु त्रिरात्रम् मनुः ( ४।११० )—'प्रतिगृह्य द्विजो विद्वाने
केतनम् । त्र्यहं न कीर्तयेद्ब्रह्म' इति स्मरणात् ॥ १४६ ॥

**पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः ।**
**कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ॥ १४७**

अध्येतृणां **पश्वादिभिरन्तरागमने कृते** शक्रध्वजस्यावरोपणे ।
**उच्छ्रायदिवसे चाहोरात्रमनध्यायः** । द्युनिशमिति प्रकृते पुनः 'अ
ग्रहणं संध्यागर्जितनिर्घातभूकम्पोल्कानिपातेष्वाकालिकत्वज्ञापनार्थम्; '
कनिर्घातभूकम्पराहुदर्शनोल्काः' ( १६।२२ ) इति गौतमवचनात् ।
कालादारभ्यापरेद्युर्यावत्स एव कालस्तावत्काल अकालः, तत्र भव आ
ऽनध्यायः । एतच्च प्रातःसंध्यास्तनिते । सायंसंध्यास्तनिते तु रात्रिमेव
संध्यास्तनिते तु रात्रिः, प्रातःसंध्यास्तनितेऽहोरात्रम्' इति हारीतस्
यत्पुनर्गौतमेनोक्तं ( ११७९ ) 'श्वनकुलसर्पमण्डूकमार्जाराणामन्तरागमने
वासो विप्रवासश्च' इति तत्प्रथमाध्ययनविषयमेव ॥ १४७ ॥

**श्वक्रोष्टृगर्दभोलूकसामबाणार्तनिःस्वने ।**
**अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥ १४८**

**श्वा** कुक्कुरः, **क्रोष्टा** सृगालः, **गर्दभो** रासभः, **उलूको** घूकः, देव
सामानि, **बाणो** वंशः, **आर्तो** दुःखितः, एषां श्वादीनां **निःस्वने** त
मनध्यायः । एवं वीणादिनिःस्वनेऽपि ।—'वेणुवीणाभेरीमृदङ्गगन्त्र्यार्त
( १६।७ ) इति गौतमवचनात् । गन्त्री शकटम् । **अमेध्यादीनां** सं
तावत्कालिकोऽनध्यायः ॥ १४८ ॥

**देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे ।**
**भुक्त्वार्द्रपाणिरम्भोन्तरर्धरात्रेऽतिमारुते ॥ १४९**

**अशुचौ देशेऽशुचावात्मनि च** । तथा **विद्युत्स्तनितसंप्लवे**
विद्योतमानायां विद्युति, स्तनितसंप्लवे प्रहरद्वयं पुनः पुनर्मेघघोषे ताव
ऽनध्यायः । **भुक्त्वार्द्रपाणिर्**नाधीयीत । जलमध्ये च । **अर्धरात्रे** महा
मध्यमप्रहरद्वये, **अतिमारुते**ऽहन्यपि तावत्कालं नाधीयीत ॥ १४९ ॥

**टिप्प०**—1 अत्र 'एकोद्दिष्टशब्देन नवश्राद्धमुच्यते—इति **मेधातिथिः** ।
रोपणं=निखातः, उच्छ्रायः=उत्खातः । 3 महानिशायाः कालस्तत्कर्तव्याक
**बौधायनेन**—'महानिशा तु विज्ञेया मध्यं मध्यमयामयोः । तस्यां स्नानं
स्वाध्यायं पितृतर्पणम्' इति ।

**पाठा०**—१ उत्सवदिवसे. २ संध्यामहोरात्रं ख. ३ मार्जाराणां
४ ध्ययनविषय एव ख.

**पांसुप्रवर्षे दिग्दाहे संध्यानीहारभीतिषु ।**
**धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥ १५० ॥**

औत्पातिके **रजोवर्षे, दिग्दाहे** यत्र ज्वलिता इव दिशो दृश्यन्ते । **संध्योः, नीहारे** धूमिकायां, **भीतिषु** चौरराजादिकृतासु तावत्कालमनध्यायः । **धावतः** त्वरितं गच्छतोऽनध्यायः । **पूतिगन्धे** कुत्सितगन्धे अमेध्यमद्यादिरोधे । **शिष्टे च** श्रोत्रियादौ **गृहं** प्राप्ते तदनुज्ञावध्यनध्यायः ॥ १५० ॥

**खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे ।**
**सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः ॥ १५१ ॥**

**यानं** रथादि, इरिणमूषरं मरुभूमिर्वा, **खरादीनामारोहणे** तावत्कालमनध्यायः । एवं 'श्वक्रोष्टृगर्दभ–'इत्यस्मादारभ्य सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्निमित्तसमकालान्विदुरनध्यायविधिज्ञाः । '**विदुः**' इत्यनेन स्मृत्यन्तरोक्तानपि संगृह्णाति । यथाह मनुः ( ४।११२ )—'शयानः प्रौढपादश्च कृत्वा वसक्थिकाम् । नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च ॥' इत्यादि ॥१५१॥

एवमनध्यायानुक्त्वा प्रकृतानि स्नातकव्रतान्याह—

**देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः ।**
**नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनादि च ॥ १५२ ॥**

**देवानां** देवार्चानामृ**त्विक्स्नातकाचार्यराज्ञां परस्त्रियाश्च छायां नाक्रामेन्ना**धितिष्ठेन्न लङ्घयेद्बुद्धिपूर्वम् । यथाह मनुः (४।१३०)—'देवतानां राज्ञः स्नातकाचार्ययोस्तथा । नाक्रामेत्कामतश्छायां बभ्रुणो दीक्षितस्य च ॥' । बभ्रुणो नकुलवर्णस्य यस्य कस्यचिद्गोरन्यस्य वा श्यामादेः; 'बभ्रुण' इति सकलिङ्गनिर्देशात् । **रक्तादीनि च नाधितिष्ठेत्** । 'आदि'ग्रहणात्स्नानोदकादेर्ग्रहणम् । (मनु.४।१३२)—'उद्वर्तनमपस्नानं विण्मूत्रे रक्तमेव च । श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत कामतः ॥' इति ॥ १५२ ॥

**विप्राहिक्षत्रियात्मानो नावज्ञेयाः कदाचन ।**
**आ मृत्योः श्रियमाकाङ्क्षेन्न कंचिन्मर्मणि स्पृशेत् १५३**

**विप्रो** बहुश्रुतो ब्राह्मणः, **अहिः** सर्पः, **क्षत्रियो** नृपतिः, एते कदाचिदपि

---

**टिप्प०**—1 आसनारूढपाद इत्यर्थः । 2 बभ्रुः कपिलो वर्णः, तद्गुणयुक्तम्—यत्र गौः कपिला सोमलता वा । उभयोः 'बभ्रु'शब्देन प्रयोगदर्शनात्—**मेधा०** । बभ्रुणः कपिलस्य । यज्ञे दीक्षितस्यावभृथस्नानात्पूर्व—इति **कुल्लूकः** । 3 अपस्नानमुपयुक्तस्नानोदकम्—इति **मेधातिथिः** ।

---

**पाठा०**—१ पांसुवर्षे दिशां दाहे **क.** पांसुवर्षे च दिग्दाहे **ग.** २ गृहमागते **क.** ३ ऊखरं **क.** ४ रध्ययन **क.** रध्यापन **ग.** ५ कृतावसक्थिक ऊरुभ्यामवनिं गतः. ६ सोमादेः **ग.**

नावमन्तव्याः। **आत्मा** च स्वयं नावमन्तव्यः । **आमृत्योर्या**वज्जीवं ... **च्छेत्** । **न कंचित्** पुरुषं **मर्माणि स्पृशेत्** कस्यचिदपि मर्म न प्रकाशयेत् ॥ १५३ ॥

**दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत् ।**
**श्रुतिस्मृत्युदितं सम्यङ्नित्यमाचारमाचरेत् ॥ १५४ ॥**

भोजनाद्युच्छिष्टं **विण्मूत्रे पाद**प्रक्षालनोदकं च गृहाद्दूरा**त्**... **जेत्**। श्रौतं स्मार्तं चाचारं नित्यं सम्यगनुतिष्ठेत् ॥ १५४ ॥

**गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत् ।**
**न निन्दाताडने कुर्यात्पुत्रं शिष्यं च ताडयेत् ॥ १५५ ॥**

**गां ब्राह्मणमग्निं अन्न**मदनीयं, विशेषतः पक्वमशुचि**र्न स्पृशेत्** ... त्वनुच्छिष्टोऽपि[1] । यदा पुनः प्रमादात्स्पृशति तदा आचमनोत्तर... 'स्पृष्ट्वैतानशुचिर्नित्यमद्भिः प्राणानुपस्पृशेत् । गात्राणि चैव सर्वाणि नाभिं पाणितलेन तु ॥' इति ( ४।१४३ ) मनूक्तं कार्यम् । एवं प्राणादीनुपस्पृशेत् ... चिदपि **निन्दाताडने न कुर्यात्**। एतच्चानपकारिणि। मनुः(४।१६७)- ... मानस्योत्पाद्य ब्राह्मणस्यासृगङ्गतः । दुःखं सुमहदाप्नोति प्रेत्याप्राज्ञतया ... इति। **पुत्रशिष्यौ** शिक्षार्थमेव[2] **ताडयेत्** । **च**काराद्दासादीनपि । ... रज्ज्वादिनोत्तमाङ्गव्यतिरेकेण कार्यम्; 'शिष्यशिष्टिरवधेनाशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्यामन्येन[3] घ्नन् राज्ञा शास्यते' (२।४२,३।४) इति गौतमवचनात्। '... त्तस्तु शरीरस्य नोत्तमाङ्गे[4] कथंचन' इति ( ८।३०० ) मनुवचनात् ॥ १५५ ॥

**कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत् ।**
**अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ॥ १५६ ॥**

**कर्मणा** कायेन यथाशक्ति **धर्ममनुतिष्ठेत्** तमेव **मनसा** ध्यायेत् ... च वदेत्। **धर्मं** विहित**मपि लोकविद्विष्टं** लोकाभिशस्तिजननं[5] मधुपर्के गोवधादिकं **नाचरेत्**। यस्मादस्वर्ग्यमग्नीषोमीयवत्[3] स्वर्गसाधनं न भवति ॥ १५६ ॥

**मातृपित्रतिथिभ्रातृजामिसंबन्धिमातुलैः ।**
**वृद्धबालातुराचार्यवैद्यसंश्रितबान्धवैः ॥ १५७ ॥**
**ऋत्विक्पुरोहितापत्यभार्यादाससनाभिभिः ।**
**विवादं वर्जयित्वा तु सर्वाँल्लोकाञ्जयेद्गृही ॥ १५८ ॥**

**माता** जननी, **पिता** जनकः, **अतिथि**रध्वनीनः, **भ्रातरो** ...

---

**टिप्प०**—1 न स्पृशेत् इत्यूहनीयम् । 2 विवादान्तरप्रसङ्गे तावपि न ता... इति बाल०। 3 उभयभिन्नेन स्थूलाभ्यां ताभ्यां चेत्यर्थः—बाल०। 4 कण्ठत... इति भावः । 5 अभिशस्तिः=निन्दा ।

---

**पाठा०**—१ रवधेन बाधनाशक्तौ ख. २ धर्म्यम्. ३ मग्निष्टोमीय...

पि। **जामयो** विद्यमानभर्तृकाः स्त्रियः[1], **संबन्धिनो** वैवाह्याः, **मातुलो** तुर्भ्राता, **वृद्धः** सप्तत्युत्तरवयस्कः, **बाल** आ षोडशाद्वर्षात्, **आतुरो** रोगी, चार्य उपनेता, **वैद्यो** विद्वान् भिषग्वा, **संश्रितः**[2] उपजीवी, **बान्धवाः** तृपक्ष्या मातृपक्ष्याश्च, मातुलस्य पृथगुपादानमादरार्थम्। **ऋत्विग्**याजकः, रोहितः शान्त्यादेः कर्ता, **अपत्यं** पुत्रादि, **भार्या** सहधर्मचारिणी, **दासः** ंकरः, **सनाभयः** सोदराः, भ्रातृभ्यः पृथगुपादानं[3]जामिभगिनीप्राप्त्यर्थम्। र्मात्रादिभिः सह वाक्कलहं परित्यज्य **सर्वान्**प्राजापत्यादीन् **लोका**-प्नोति[4] ॥ १५७–१५८ ॥

**पञ्च पिण्डाननुद्धृत्य न स्नायात्परवारिषु।**
**स्नायान्नदीदेवखातह्रदप्रस्रवणेषु च ॥ १५९ ॥**

**परवारिषु** परसंबन्धिषु सर्वसत्त्वोद्देशेनात्यक्तेषु तडागादिषु **पञ्च पिण्डान**-**द्धृत्य न स्नायात्**। अनेनात्मीयोत्सृष्टाभ्यनुज्ञातेषु पिण्डोद्धारमन्तरापि[5] स्नानम-नुज्ञातम्। नद्यादिषु कथं तर्हीत्याह—**स्नायान्नदी**ति। साक्षात्परम्परया वा मुद्रगाः स्रवन्त्यो **नद्यः**, **देवखातं** देवनिर्मितं पुष्करादि, उदकप्रवाहाभि-तकृतसजलो महानिम्नप्रदेशो **ह्रदः**, पर्वताद्युच्चप्रदेशात्प्रसृतमुदकं **प्रस्रवणम्**, षु पञ्चपिण्डानुद्धरणेनैव **स्नायात्**। एतच्च नित्यस्नानविषयं सति संभवे **मनुः** (४।२०३)—'नदीषु देवखातेषु तडागेषु सरःसु च। स्नानं समाचरेन्नित्यं प्रस्रवणेषु च ॥' इति 'नित्य'ग्रहणात्। शौचाद्यर्थं तु यथासंभवं परवारिषु ण्डानुद्धरणे सर्वस्य निषेधः ॥ १५९ ॥

**परशय्यासनोद्यानगृहयानानि वर्जयेत्।**
**अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि ॥ १६० ॥**

**शय्या** कशिपुः, **आसनं** पीठादि, **उद्यान**माम्रादिवनम्। **गृहं** प्रसिद्धम्, **नं** रथादि, **परसंबन्धी**न्येतान्य**दत्तान्य**ननुज्ञातानि **वर्जयेत्** नोपभुञ्जीत। भोज्यान्नान्याह—**अग्निहीनस्ये**ति। **अग्निहीनस्य** श्रौतस्मार्ताग्न्यधिकारर-स्य शूद्रस्य प्रतिलोमजस्य च अधिकारवतोऽप्यग्निरहितस्या**न्नमनापदि न**

**टिप्प०**—1 स्त्रियः भगिन्यः, भिन्नोदर्योऽपि–इति **बाल०**। 2 संश्रितः= श्रितः उपजीवी–**अप०**। 3 अविद्यमानभर्तृका इत्यर्थः। 4 यच्चोक्तं **मनुना** (४।१७९–१८५) 'ऋत्विक्पुरोहिताचार्यैर्मातुलातिथिसंश्रितैः। बालवृद्धातुरैर्वैद्यैर्ज्ञाति-न्धिबान्धवैः ॥ मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भार्यया। दुहित्रा दासवर्गेण विवादं समाचरेत् ॥ एतैर्विवादान् संत्यज्य सर्वपापैः प्रमुच्यते। एतैर्जितैश्च जयति सर्वा-ल्लोकानिमान्गृही ॥' इति। 5 तथाकरणेऽभ्युदय एव, अकरणे तु दोषो नेत्यपेरर्थः। च **हेमाद्रिः**—सर्वार्थमुत्सृष्टेषु परकीयत्वाभावादनुद्धरणे न दोषः–इति **बाल०**। अविधिनोत्सृष्टाग्नेश्च–इति **अप०**।

**पाठा०**—१ मन्तरेणापि क.

भुञ्जीत, न प्रतिगृह्णीयाच्च । 'तस्मात्प्रशस्तानां स्वकर्मशुद्धजातीनां ब्राह्मणो प्रतिगृह्णीयाच्च' ( १७।१,२ ) इति गौतमवचनात् ॥ १६० ॥

**कदर्यबद्धचौराणां क्लीबरङ्गावतारिणाम् ।**
**वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणाम् ॥ १६१**

**कदर्यो** लुब्धः; 'आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् । लो पितरौ भृत्यान्स कदर्य इति स्मृतः ॥' (देवल.) इत्युक्तः । निगडादिना वाचा संनिरुद्धश्च, **चौरो** ब्राह्मणसुवर्णव्यतिरिक्तपरस्वापहारी, नपुंसकः, **रङ्गावतारी** नटचारणमल्लादिः, वेणुच्छेदजीवी, **वैणः** अभि पतनीयैः कर्मभिर्युक्तः, **वार्धुष्यो** निषिद्धवृद्ध्युपजीवी, **गणिका** पण्यस्त्री, **दीक्षी** बहुयाजकः । एतेषामन्नं नाश्नीयादित्यनुवर्तते ॥ १६१ ॥

**चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम् ।**
**क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥ १६**

**चिकित्सको** भिषग्वृत्त्युपजीवी, **आतुरो** महारोगोपसृष्टः; 'वातव्या रीकुष्ठमेहोदरभगन्दराः । अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्रकीर्तिताः' इति । कुपितः, **पुंश्चली** व्यभिचारिणी, **मत्तो** विद्यादिना गर्वितः, **विद्विट्** **क्रूरो** दृढाभ्यन्तरकोपः, वाक्कायव्यापारेणोद्वेजक **उग्रः**, **पतितो** ब्रह्म **व्रात्यः** पतितसावित्रीकः, **दाम्भिको** वञ्चकः, **उच्छिष्टभोजी** परभु ताशी, एतेषां चिकित्सकादीनामन्नं नाश्नीयात् ॥ १६२ ॥

**अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् ।**
**शस्त्रविक्रयिकर्मारतन्तुवायश्ववृत्तिनाम् ॥ १६३ ॥**

**अवीरा स्त्री** स्वतन्त्रा,-व्यभिचारमन्तरेणापि । पतिपुत्ररहितेत्यर्थः । **कारः** सुवर्णस्य विकारान्तरकृत्, **स्त्रीजितः** सर्वत्र स्त्रीवशवर्ती, **ग्राम** ग्रामस्य शान्त्यादिकर्ता, बहूनामुपनेता वा । **शस्त्रविक्रयी** शस्त्रविक्रयी **कर्मारो** लोहकारः तक्षादिश्च, **तन्तुवायः** सूचिशिल्पोपजीवी । श्ववृ त्तेनं जीवनमस्यास्तीति **श्ववृत्ती**, एतेषामन्नं नाश्नीयात् ॥ १६३ ॥

**टिप्प०**—1 क्वचित्तु 'वृद्धान्' इत्यपि पाठः । 2 नटगायकव्यतिरिक्तोऽपि यो गच्छति कुतुकात् सः—इति **मेधा०** । 3 वीणावादनजीवी—इति **माधवः** जीवनः इति **मेधा०** । 4 'यस्तु निन्देत्परं जीवं प्रशंसत्यात्मनो गुणान् । पिकः—इति **विष्णुः** । 5 गणः संघः, भ्रात्रादीनामविभक्तानां न गणव्यप **बाल०** । गणः सङ्घः, तदन्नमन्यस्याभोज्यम् । दीक्षी दिक्षितः, तस्य च प्राक् होमादभोज्यान्नता—**अप०** ।

**पाठा०**—१ वृत्त्युपजीवी क.

नृशंसराजरजककृतघ्नवधजीविनाम् ।
चैलधावसुराजीवसहोपपतिवेश्मनाम् ॥ १६४ ॥
पिशुनानृतिनोश्चैव तथा चाक्रिकवन्दिनाम् ।
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ॥ १६५ ॥

**नृशंसो** निर्दयः, **राजा** भूपतिः, तत्साहचर्यात्पुरोहितश्च । यथाह शङ्खः—'...तावगीतरुदिताक्रन्दितावघुष्टक्षुधितपरिभुक्तविस्मितोन्मत्तावधूतराजपुरोहिता... नि वर्जयेत्' इति । **रजको** वस्त्रादीनां नीलादिरागकारकः, **कृतघ्न** उपकृ... स्य हन्ता **वधजीवी** प्राणिनां वधेन वर्तकः, **चैलधावो** वस्त्रनिर्णेजन... क्, **सुराजीवो** मद्यविक्रयजीवी, उपपतिर्जारः । सहोपपतिना वेश्म यस्यासौ सहोपपतिवेश्मा । **पिशुनः** परदोषस्य ख्यापकः, **अनृती** मिथ्यावादी, चाक्रिकस्तैलिकः, शाकटिकश्चेत्येके । 'अभिशस्तः पतितश्चाक्रिकस्तैलिक' इति ...नाभिधानात् । **वन्दिनः** स्तावकाः, **सोमविक्रयी** सोमलताया विक्रेता, एषामन्नं न भोक्तव्यम् । सर्वे चैते कदर्यादयो द्विजा एव कदर्यत्वादिदोषदुष्टा अभोज्यान्नाः । इतरेषां प्राप्त्यभावात्प्राप्तिपूर्वकत्वाच्च निषेधस्य ॥ १६४–१६५ ॥

'अग्निहीनस्य नान्नमद्यादनापदि' ( आचार. १६० ) इत्यत्र शूद्रस्याभोज्यान्नमुक्तं, तत्र प्रतिप्रसवमाह—

शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः ।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥ १६६ ॥

**दासा** गर्भदासादयः । **गोपालो** गवां पालनेन यो जीवति । **कुलमित्रं** पितृपितामहादिक्रमायातः । **अर्धसीरी** हलपर्यायसीरोपलक्षितकृषिफलभागग्राही । ...पितो गृहव्यापारकारयिता, नापितश्च । **यश्च** वाङ्मनःकायकर्मभिरात्मानं निवेदयति तवाहमिति । एते दासादयः शूद्राणां मध्ये भोज्यान्नाः । चकारात्कुम्भकारश्च ; 'गोपनापितकुम्भकारकुलमित्रार्धिकनिवेदितात्मानो भोज्यान्नाः' इति ...नात् ॥ १६६ ॥

इति स्नातकधर्मप्रकरणम् ।

---

## अथ भक्ष्याभक्ष्यप्रकरणम् ७

'न स्वाध्यायविरोध्यर्थम्' ( आचार. १२९ ) इत्यत आरभ्य ब्राह्मणस्य ...तकव्रतान्यभिधायेदानीं द्विजातिधर्मानाह—

अनर्चितं वृथामांसं केशकीटसमन्वितम् ।
शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम् ॥ १६७ ॥

पाठा०—१ नीलयादिरागकरः क. २ प्रतिषेधस्य क. ३ गवां पालकः ...वां पालनेन ख. ४ कर्मस्थायी क.

**उदक्यास्पृष्टसंघुष्टं पर्यायान्नं च वर्जयेत् ।**
**गोघ्रातं शकुनोच्छिष्टं पदा स्पृष्टं च कामतः ॥ १**

**अनर्चितं** अर्चार्हाय यदवज्ञया दीयते । **वृथामांसं** वक्ष्यमाणप्रा... दिव्यतिरेकेण देवाद्यर्चनावशिष्टं च यन्न भवति आत्मार्थमेव यत्साधितम्। ... कीटादिभिश्च **समन्वितं** संयुक्तम् । यत्स्वयमनम्लं केवलं काल... द्रव्यान्तरसंसर्गकालपरिवासाभ्यां वाम्लीभवति **तच्छुक्तं** दध्यादिव्यतिरे... प्रापीयसोऽन्नमश्नीयान्न द्विःपक्वं, न शुक्तं, न पर्युषितं, अन्यत्र रागखाण्डवचु... गुडगोधूमयवपिष्टविकारेभ्यः' इति शङ्खस्मरणात् । **पर्युषितं** रात्र्यन्त... **उच्छिष्टं** भुक्तोज्झितम्, **श्वस्पृष्टं** शुना स्पृष्टम्, **पतितेक्षितं** पतित... रीक्षितम्, **उदक्या** रजस्वला तया **स्पृष्टम्**, 'उदक्या'ग्रहणं चण्डा... लक्षणार्थम्; 'अमेध्यपतितचण्डालपुल्कसरजस्वलाकुनखिकुष्ठिसंस्पृष्टान्नं ... इति शङ्खस्मरणात् । 'को भुङ्क्ते ?' इति यदाघुष्य दीयते तत्**संघुष्टान्नम्**। ... संबन्ध्यन्यव्यपदेशेन यद्दीयते तत्**पर्यायान्नम्**, यथा—'ब्राह्मणान्नं द... शूद्रान्नं ब्राह्मणो ददत् । उभावेतावभोज्यान्नौ भुक्त्वा चान्द्रायणं चरेत्॥' ... **'पर्याचान्तम्'** इति पाठे परिगतमाचान्तं गण्डूषग्रहणं यस्मिन् तत्पर्या... तन्न भोक्तव्यम् । एतदुक्तं भवति—गण्डूषग्रहणादूर्ध्वं आचमनात्प्राक् न ... मिति । **'पार्श्वाचान्तम्'** इति पाठे एकस्यां पङ्क्तौ पार्श्वस्थे आचान्ते न ... भस्मोदकादिविच्छेदेन विना । 'वर्जयेत्' इति प्रत्येकं संबध्यते । तथा **गो...** गवा घ्रातम् । **शकुनोच्छिष्टं** शकुनेन काकादिना भुक्तमास्वादितम् । ... **स्पृष्टं** बुद्धिपूर्वं पादेन स्पृष्टं **वर्जयेत्** ॥ १६७–१६८ ॥

पर्युषितस्य प्रतिप्रसवमाह—

**अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् ।**
**अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥ १६९ ॥**

अन्नमदनीयं **पर्युषितं** घृतादिस्नेह**संयुक्तं चिर**काल**संस्थि**... **भोज्यम्** । **गोधूमयवगोरसविक्रियाः** मण्डकसक्तुकिलाटकूर्चि... **अस्नेहा अपि** चिरकालसंस्थिता भोज्याः, यदि विकारान्तरमनापन्नाः; ... धानाकरम्भसक्तुयावकतैलपायसशाकानि शुक्तानि वर्जयेत्' ( १४।३७ ) **वसिष्ठस्मरणात्** ॥ १६९ ॥

**टिप्प०**—1 उदयास्तमयान्तरितं पर्युषितम्—इति **हरदत्तः** । 2 अत्र ... मुक्तं **बृहस्पतिना**—'अप्येकपङ्क्तौ नाश्नीयाद्ब्राह्मणैः स्वजनैरपि । को हि जा... कस्य प्रच्छन्नं पातकं भवेत्', 'एकपंक्त्युपविष्टानां दुष्कृतं तद्दुरात्मनाम् ।' इति।

**पाठा०**—१ सक्तुपाचकतैल. ख.

**संधिन्यनिर्दशावत्सागोपयः परिवर्जयेत् ।**
**औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम् ॥ १७० ॥**

गौः या वृषेण संधीयते सा **संधिनी**। 'वशां वन्ध्यां विजानीयाद्वृषाक्रान्तां संधिनीम्' इति त्रिकाण्डीस्मरणात्। या चैकां वेलामतिक्रम्य दुह्यते, या च कालान्तरेण संधीयते सा संधिनी। प्रसूता सत्यनतिक्रान्तदशाहा **अनिर्दशा,** मृतवत्सा **अवत्सा,** संधिनी च अनिर्दशा च अवत्सा च संधिन्यनिर्दशावत्सा-स्ताश्च **गावश्च** तासां **पयः** क्षीरं **परिवर्जयेत्**। 'संधिनी'ग्रहणं संधिनीयमल-वोरुपलक्षणार्थम्। यथाह गौतमः (१७।२५)—'स्यन्दिनीयमसूसंधिनीनां' इति। स्रवत्पयःस्तनी स्यन्दिनी, यमलसूर्यमलप्रसविनी, एवमजामहिष्योश्चा-र्दशयोः पयो वर्जयेत्; 'गोमहिष्यजानामनिर्दशानाम्' (१४।३५) इति वसिष्ठ-स्मरणात्। पयोग्रहणात्तद्विकाराणामपि दध्यादीनां निषेधः। नहि मांसनिषेधे द्विकाराणामनिषेधो युक्तः। विकारनिषेधे तु प्रकृतेरनिषेधो युक्तः। पयोनिषे-धाच्छकृन्मूत्रादेरनिषेधः। उष्ट्राज्जातम**औष्ट्रं** पयोमूत्रादि। एकशफा वडवादयः, तत्प्रभवं **ऐकशफम्**। स्त्रीभवं **स्त्रैणम्**। 'स्त्री'ग्रहणमजाव्यतिरिक्तसकलद्विस्तनी-मुपलक्षणार्थम्।—'सर्वासां द्विस्तनीनां क्षीरमभोज्यमजावर्ज्यम्' इति शङ्ख-स्मरणात्। अरण्ये भवा आरण्यकास्तदीय**मारण्यकं** क्षीरं माहिषव्यतिरेकेण। 'आरण्यानां च सर्वेषां मृगाणां माहिषं विना' (मनु. ५।९) इति वचनात्। अविर्जात**माविकम्**। 'वर्जयेत्' इति प्रत्येकमभिसंबध्यते। औष्ट्रमित्यादिविकार-प्रत्ययनिर्देशात्तद्विकारमात्रस्य पयोमूत्रादेः सर्वदा निषेधः; 'नित्यमाविकमपेयमौष्ट्र-मैकशफं च' (१७।२४) इति गौतमस्मरणात् ॥ १७० ॥

**देवतार्थं हविः शिग्रुं लोहितान्व्रश्चनांस्तथा ।**
**अनुपाकृतमांसानि विड्जानि कवकानि च ॥ १७१ ॥**

**देवतार्थं** बल्युपहारनिमित्तं साधितम्। **हविः** हवनार्थं सिद्धं प्राक् होमात्। **शिग्रुः** सोभाञ्जनः, **लोहितान्** वृक्षनिर्यासान्। **व्रश्चन**प्रभवान् वृक्षच्छेदन-जातानलोहितानपि। यथाह मनुः—(५।६) । 'लोहितान्वृक्षनिर्यासान्व्रश्चन-प्रभवांस्तथा' इति। 'लोहित'ग्रहणात् हिङ्गुकर्पूरादीनामनिषेधः। **अनुपाकृत-मांसानि** यज्ञेऽहुतस्य पशोर्मांसानि, **विड्जानि** मनुष्यादिजग्धबीजपुरी-षोत्पन्नानि तन्दुलीयकप्रभृतीनि च, **कवकानि** छत्राकाणि, 'वर्जयेत्' इति प्रत्येकमभिसंबध्यते ॥ १७१ ॥

**टिप्प०**—1 अत एवाह **हारीतः**—'सन्धिनी वृषस्यन्ती तस्याः पयो न पिबेद्द्रवतीति। या गर्भिणी सति दुग्धे सा संधिनीति—**हरदत्तः**। 2 मृतवत्सात्वादित्या-शयः। 3 तदग्रे तु श्रुतिविहितमेवेति तत्त्वम्।

**पाठा०**—१ रनिषेधो युक्तः ख. २ व्यतिरिक्तम् क. ३ शोभाञ्जनः क. ४ पुरीषस्थाने उत्पन्नानि क.

**क्रव्यादपक्षिदात्यूहशुकप्रतुदटिट्टिभान् ।**
**सारसैकशफान्हंसान्सर्वांश्च ग्रामवासिनः ॥ १७२ ॥**

**क्रव्यादा** आममांसादनशीलाः, **पक्षिणो** गृध्रादयः, **दात्यूह** **शुकः** कीरः । चञ्च्वा प्रतुद्य भक्षयन्तीति **प्रतुदाः** श्येनादयः, **टिट्टिभ** ब्दानुकारी, **सारसो** लक्ष्मणः[1], **एकशफा** अश्वादयः, **हंसाः** प्र **ग्रामवासिनः** पारावतप्रभृतयः, एतान्क्रव्यादादीन्वर्जयेत् ॥ १७२ ॥

**कोयष्टिप्लवचक्राह्वबलाकाबकविष्किरान् ।**
**वृथाकृसरसंयावपायसाऽपूपशष्कुलीः ॥ १७३ ॥**

**कोयष्टिः** क्रौञ्चः, **प्लवो** जलकुक्कुटः, **चक्राह्वश्चक्रवाकः, बला** प्रसिद्धौ, नखैर्विकीर्य भक्षयन्तीति विष्किराश्चकोरादय एव गृह्यन्ते; ला रादीनां भक्ष्यत्वात्, ग्रामकुक्कुटस्य ग्रामवासित्वादेव निषेधाच्च । एतान्कोय न्वर्जयेत् । **वृथा**[2] देवताद्युद्देशमन्तरेण साधिताः कृसरसंयावपायसा ष्कुलीर्वर्जयेत् । **कृसरं** तिलमुद्गसिद्धं ओदनः । **संयावः**[3] क्षीरगुडघृ उत्करिकाख्यः पाकविशेषः । **पायसं** पयसा शृतमन्नम् । **अपूपो** गोधूमविकारः । **शष्कुली** स्नेहपक्वो गोधूमविकारः । 'न पचेदन्नमात्म कृसरादीनां निषेधे सिद्धे पुनरभिधानं प्रायश्चित्तगौरवार्थम् ॥ १७३ ॥

**कलविङ्कं सकाकोलं कुररं रज्जुदालकम् ।**
**जालपादान्खञ्जरीटानज्ञातांश्च मृगद्विजान् ॥ १७**

**कलविङ्को** ग्रामचटकः, ग्रामनिवासित्वेन प्रतिषेधे सिद्धे सत्युभय त्पुनर्वचनम् । **काकोलो** द्रोणकाकः[4], **कुरर** उत्क्रोशः, **रज्जुदाल** कुट्टकः, **जालपादो** जालाकारपादाः, अजालपादा अपि हंसाः सन्तीति पुनर्वचनम् । **खञ्जरीटः** खञ्जनः, जातितो ये **अज्ञाता मृगाः प** एतान्कलविङ्कादीन्वर्जयेत् ॥ १७४ ॥

**चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च ।**
**मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् ॥ १**

**चाषाः** किकीदिवयः **रक्तपादाः** कादम्बप्रभृतयः, सूनिना त्य [5]घातस्थानभवं मांसं भक्ष्याणामपि, **वल्लूरं** शुष्कमांसम्, **मत्स्या** मीनाः श्चाषादीन्वर्जयेत् । चकारान्नालिकाशणछत्राककुसुम्भादीन्; 'नालिका ककुसुम्भालाबुविड्वान् । कुम्भीक[3]न्दुकवृन्ताककोविदारांश्च वर्जयेत् ॥' इ

---

**टिप्प०**—1 लक्ष्मणः= दीर्घगलजङ्घो नीलाङ्गः पक्षी । 2 केवलं स्वात्मक इत्याशयः । 3 अयं भाषायां 'लापशी' इति नाम्ना प्रसिद्धः । 4 अयं 'डों इति महाराष्ट्रभाषायां प्रसिद्धः । 5 सूना वधस्थानं, तत्र भवं सौनमित्याशयः ।

---

**पाठा०**—१ तिलमुद्गमिश्र ओदनः क. २ उभयपरत्वात् ख. ३ क

कालप्ररूढानि पुष्पाणि च फलानि च । विकारवच्च यत्किंचित्प्रयत्नेन विवर्जयेत् ॥' तथा वटप्लक्षाश्वत्थकपित्थनीपमातुलिङ्गफलानि वर्जयेत्' इति स्मरणात् । एता- संधिनीक्षीरप्रभृतीननुक्रान्तान्कामतो भक्षयित्वा त्रिरात्रमुपवसेत् । अका- तस्त्वहोरात्रम् । 'शेषेषूपवसेदहः' (५।२०) इति मनुस्मरणात् । यत्पुनः ङ्खेनोक्तम्—'बलबलाकाहंसप्लवचक्रवाककारण्डवगृहचटककपोतपारावतपाण्डुशु- सारिकासारसटिट्टिभोलूककङ्करक्तपादचाषभासवायसकोकिलशाङ्खलिकुक्कुटहारीत- क्षणे द्वादशरात्रमनाहारः, पिबेद्गोमूत्रयावकम्' इति तद्बहुकालाभ्यासे मतिपूर्वे मत्तभक्षणे वा वेदितव्यम् ॥ १७५ ॥

**पलाण्डुं विड्वराहं च छत्राकं ग्रामकुक्कुटम् ।**
**लशुनं गृञ्जनं चैव जग्ध्वा चान्द्रायणं चरेत् ॥ १७६ ॥**

**पलाण्डुः** स्थूलकन्दनालो लशुनानुकारी, **विड्वराहो** ग्रामसूकरः, **छत्राकं** ·छत्रम्, **ग्रामकुक्कुटः** प्रसिद्धः, **लशुनं** रसोनं सूक्ष्मश्वेतकन्दनालम् । **गृञ्जनं** शुनानुकारिलोहितसूक्ष्मकन्दम्, एतानि षट् सकृत्कामतो **जग्ध्वा** भक्षयित्वा **चान्द्रायणं** वक्ष्यमाणलक्षणं **चरेत्** । ग्रामकुक्कुट-छत्राकयोः पूर्वप्रतिषेधितयोरि- भिधानं पलाण्ड्वादिसमानप्रायश्चित्तार्थम् । मतिपूर्वं चिरतराभ्यासे तु 'छत्राकं ड्वराहं च लशुनं ग्रामकुक्कुटम् । पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्द्विजः' ते (५।१९) मनूक्तम् । अमतिपूर्वाभ्यासे—'अमत्यैतानि षड् जग्ध्वा कृच्छ्रं न्तपनं चरेत्' (५।१९) तृतीयाध्याये, वक्ष्यमाणं 'यतिचान्द्रायणं वापि' द्रष्टव्यम् । अमतिपूर्वाभ्यासे तु शङ्खोक्तं—'लशुनपलाण्डुगृञ्जनविड्वराहग्राम- कुटकुम्भीकभक्षणे द्वादशरात्रं पयः पिबेत्' इति ॥ १७६ ॥

**भक्ष्याः पञ्चनखाः सेधागोधाकच्छपशल्लकाः ।**[3]
**शशश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः ॥ १७७ ॥**
**तथा पाठीनराजीवसशल्काश्च द्विजातिभिः ।**

**सेधा**[1] श्वावित्, **गोधा** कृकलासानुकारिणी महती, **कच्छपः** कूर्मः, ल्लकः शल्की, **शशः** प्रसिद्धः, पञ्चनखादीनां श्वमार्जारवानरादीनां मध्ये एते धादयो भक्ष्याः । चकारात्खड्गोऽपि । यथाह गौतमः (१७।२७)—'पञ्चनखाः शशल्लकश्वाविद्गोधाखड्गकच्छपाः' इति । यथाह मनुरपि (५।१८)—'श्वाविधं ल्लकं गोधां खड्गकूर्मशशांस्तथा । भक्ष्यान्पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः ॥' इति । पुनर्वसिष्ठेन 'खड्गे तु विवदन्ति' (१४।४७) इत्यभक्ष्यत्वमुक्तं, तच्छ्राद्धादन्यत्र; ड्गमांसैर्भवेद्दत्तमक्षय्यं पितृकर्मणि' इति श्राद्धे फलश्रुतिदर्शनात् । तथा **म- त्स्यानां** मध्ये सिंहतुण्डादयो भक्ष्याः । **सिंहतुण्डः** सिंहमुखः, **रोहितो**

**टिप्प०**—1 स च श्वभक्षको व्याघ्रविशेषः, गोधा वल्लीसदृशः प्राणिविशेषः—अप० ।

**पाठा०**—१ दधित्थ क. २ प्रतिषिद्धयो क. ३ शल्यकाः क. ४ शालुकः ल्ली. ५ शल्यकं.

लोहितवर्णः, **पाठीन**श्चन्द्रकाख्यः, **राजीवः** पद्मवर्णः, सह शल्कैः शुल्क वर्तत इति **सशल्कः**। एते च सिंहतुण्डादयो नियुक्ता एव **भक्ष्याः**। रोहितावाद्यौ नियुक्तौ हव्यकव्ययोः। राजीवाः सिंहतुण्डाश्च सशल्काश्चैव सर्वशः इति ( ५।१६ ) मनुस्मरणात्। '**द्विजाति**'ग्रहणं शूद्रव्युदासार्थम् ॥ १७

'अनर्चितं वृथामांसम्' (आ. १६७) इत्यारभ्य द्विजातिधर्मानुक्त्वे चातुर्वर्ण्यधर्मानाह—

**अतः शृणुध्वं मांसस्य विधिं भक्षणवर्जने ॥ १७८॥**

**मांसस्य** प्रोक्षितादेर्**भक्षणे** तद्व्यतिरिक्तस्य वा निषिद्धस्य **वर्जने** प्रोक्षिता तिरेकेण मांसं न भक्षयामीत्येवं संकल्परूपेण **विधिं** सामश्रवःप्रभृतयः हे मु **शृणुध्वम्** ॥ १७८ ॥

तत्र भक्षणे विधिं दर्शयति—

**प्राणात्यये तथा श्राद्धे प्रोक्षिते द्विजकाम्यया ।**
**देवान्पितॄन्समभ्यर्च्य खादन्मांसं न दोषभाक् ॥ १७**

अन्नाभावेन व्याध्यभिभवेन वा मांसभक्षणमन्तरेण यदा **प्राण** भवति, तदा मांसं नियमेन भक्षयेत्। 'सर्वत एवात्मानं गोपायेत्' त्मरक्षाविधानात्। 'तस्मादु ह न पुरायुषः स्वःकामी प्रेयात्' इति मरणनिषे **तथा श्राद्धे** मांसं निमन्त्रितो नियमेन भक्षयेत्; अभक्षणे दोषश्रवणात्, विधि नियुक्तस्तु यो मांसं नात्ति मानवः। स प्रेत्य पशुतां याति संभवानेक तिम् ॥' ( ५।३५ )-इति मनुस्मरणात्। प्रोक्षणाख्यश्रौतसंस्कारसंस्कृतस्य र्यागार्थस्याग्नीषोमीयादेर्हुतावशिष्टं मांसं **प्रोक्षितं** तद्भक्षयेत्; अभक्षणे या ष्पत्तेः। **द्विजकाम्यया** ब्राह्मणभोजनार्थं **देवपित्रर्थं** च यत्साधितं तेन **भ्यर्च्य**विशिष्टं **भक्षयन्न दोषभाग्**भवति। एवं भृत्यभरणावशिष्टमपि; ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः। भृत्यानां चैव वृत्त्यर्थमगस्त्यो ह्याचरत् इति ( ५।२२ ) मनुस्मरणात्। 'न दोषभाक्' इति दोषाभावमात्रं वदता व्याद्यर्चनावशिष्टस्याभ्यनुज्ञामात्रं न प्रोक्षितादिवन्नियम इति दर्शितम्। प्रतिषिद्धानामपि शशादीनां प्राणात्ययव्यतिरेकेणाभक्ष्यत्वावगमात् शूद्रस्यापि प्रतिबद्धः सर्वविधिनिषेधाधिकारोऽवगम्यते ॥ १७९ ॥

इदानीं प्रोक्षिताव्यतिरिक्तस्य वृथामांसमित्यनेन प्रतिषिद्धस्य भक्षणे नि वादमाह—

**वसेत्स नरके घोरे दिनानि पशुरोमभिः ।**
**संमितानि दुराचारो यो हन्त्यविधिना पशून् ॥ १८**

**अविधिना** देवताद्युद्देशमन्तरेण **यः पशून्हन्ति स** तस्य पशो

पाठा०—१ नियुक्तस्यैव क. २ चातुर्वर्ण्यं प्रत्याह क. ३ तस्मादिह ४ अभक्षणाद्यागा ख. ५ ह्याचरत्तथा ख.

लोमाणि तावन्ति **दिनानि घोरे नरके वसेत्**। 'हन्ति' इत्यष्टविधोऽपि घातको गृह्यते। यथाह मनुः (५।५१) 'अनुमन्ता विशसिता निहन्ता क्रयविक्रयी। संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः॥' इति॥ १८०॥

इदानीं वर्जने विधिमाह—

**सर्वान्कामानवाप्नोति हयमेधफलं तथा।**
**गृहेऽपि निवसन्विप्रो मुनिर्मांसविवर्जनात्॥ १८१॥**

यः प्रोक्षितादिव्यतिरेकेण मया मांसं न भक्षितव्यमिति सत्यसंकल्पो भवति स **सर्वान्कामान्** तत्साधने प्रवृत्तो निर्विघ्नं **प्राप्नोति**; विशुद्धाशयत्वात्। यथाह मनुः (५।४७)—'यद्ध्यायते यत्कुरुते रतिं बध्नाति यत्र च। तदवाप्नोत्यविघ्नेन यो हिनस्ति न किंचन॥' इति। एतच्चानुषङ्गिकं फलम्। मुख्यं फलमाह—**हयमेधफलं तथे**ति। एतच्च सांवत्सरिकसंकल्पस्य; 'वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः। मांसानि च न खादेद्यस्तयोः पुण्यफलं समम्॥' इति (५।५३) मनुस्मरणात्। **तथा गृहेऽपि निवसन्** ब्राह्मणादिश्चातुर्वर्णिको **मुनि**वन्माननीयो भवति; मांसत्यागात्। एतच्च न प्रतिषिद्धमांसविषयम्, नापि प्रोक्षितादिविषयम्, किंतु पारिशेष्याद[1]तिथ्याद्यर्चनावशिष्टाभ्यनुज्ञातविषयमिति १८१

इति भक्ष्याभक्ष्यप्रकरणम्।

---

## अथ द्रव्यशुद्धिप्रकरणम् ८

इदानीं द्रव्यशुद्धिमाह—

**सौवर्णराजताब्जानामूर्ध्वपात्रग्रहाश्मनाम्।**
**शाकरज्जुमूलफलवासोविदलचर्मणाम्॥ १८२॥**
**पात्राणां चमसानां च वारिणा शुद्धिरिष्यते।**
**चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा॥ १८३॥**

**सौवर्णं** सुवर्णकृतम्, **राजतं** रजतकृतम्, **अब्जं**[2] मुक्ताफलशङ्खशुक्त्यादि, **ऊर्ध्वपात्रं** यज्ञियोलूखलादि; ग्रहादिसाहचर्यात्। **ग्रहाः** षोडशि[3]प्रभृतयः, **अश्मा** दृषदादिः, **शाकं** वास्तुका[4]दि, **रज्जुः** बल्वजादिनिर्मिता, **मूलम्** आर्द्रकादि, **फलम्** आम्रादि, **वासो** वस्त्रम्, **विदलं** वैणवादि, **चर्म** अजादीनाम्,

टिप्प०—1 ते च घातका यमेनोक्ताः—'अनुमन्ता विशस्ता च निहन्ता क्रयविक्रयी। घातकाः सर्व एवैते संस्कर्ता षष्ठ उच्यते॥' इति। अन्यत्र तु—'घातकाः षट् समाख्याता भोक्ता तत्र तु सप्तमः। षण्णां तेषां सकाशात्तु उपभोक्ताऽतिरिच्यते॥' इत्युक्ताः। 2 जलजमिति भावः। 3 षोडशी यज्ञियपात्रविशेषः। 4 इदं बथुवेति भाषायाम्।

पाठा०—१ परिशेषात् ख.

'विदल-चर्मणो'ग्रहणं तद्विकाराणां छत्रवरत्रादीनामुपलक्षणार्थम् । पा प्रोक्षणीपात्रप्रभृतीनि, **चमसा** होतृचमसादयः, एतेषां सौवर्णादीनां ले नामुच्छिष्टस्पर्शमात्रे **वारिणा** प्रक्षालनेन **शुद्धिः, चरुश्चरुस्थाली, स्रु** प्रसिद्धौ, **सस्नेहानि पात्राणि** प्राशित्रहरणादीनि, एतानि च ले **न्युष्णेन वारिणा शुद्ध्यन्ति;** 'निर्लेपं काञ्चनं भाण्डमद्भिरेव विशु अब्जमश्ममयं चैव राजतं चानुपस्कृतम् ॥' इति ( ५।११२ ) मनुस्मृ अनुपस्कृतमखातपूरितम्[1] । सलेपानां तु—'तैजसानां मणीनां च सर्वस्याश्म च । भस्मनाऽद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः ॥' इति ( ५।१११ ) द्रष्टव्यम् । मृद्भस्मनोरेककार्यत्वाद्विकल्पः । आपस्तु समुच्चीयन्ते । काको पघाते तु—'कृष्णशकुनिमुखावमृष्टं[1] पात्रं निर्लिखेत्, श्वापदमुखावमृष्टं प्रयुञ्जीत' ( गौ. सू. १७।४ ) इति द्रष्टव्यम् । एतच्च मार्जारादन्यत्र; 'मा दर्वी च मारुतश्च सदा शुचिः ।' इति मनुस्मरणात् ॥ १८२–१८३ ॥

यज्ञपात्रादीनां प्रोक्षणेन शुद्धिः—

**स्फ्यशूर्पाऽजिनधान्यानां मुसलोलूखलाऽनसाम् ।**
**प्रोक्षणं संहतानां च बहूनां धान्यवाससाम् ॥ १८**

**स्फ्यो** वज्रो यज्ञाङ्गम्, **अनः** शकटम्, शेषं प्रसिद्धम्, एते वारिणा शुद्धिः । पुनः 'अजिन'ग्रहणं यज्ञाङ्गाजिनप्राप्त्यर्थम् । **संहताना** द्विद्रव्यारब्धावयविनां[2] **बहूनां धान्यानां वाससां च** । 'वासो'ग्रहणमु नामुपलक्षणार्थम् । उक्तशुद्धीनां धान्यवासःप्रभृतीनां बहूनां च राशी प्रोक्षणेनैव शुद्धिः । बहुत्वं च स्पृष्टापेक्षया । एतदुक्तं भवति—यदा वस्त्रादीनि वा राशीकृतानि तत्र चण्डालादिस्पृष्टान्यल्पानि बहूनि चास्पृष्टा स्पृष्टानामुक्तैव शुद्धिरितरेषां **प्रोक्षणमि**ति । तथा च स्मृत्यन्तरम्— धान्यादिराशीनामेकदेशस्य दूषणे । तावन्मात्रं समुद्धृत्य शेषं प्रोक्षणम इति । यदा पुनः स्पृष्टानां बहुत्वं अस्पृष्टानां चाल्पत्वं तदा सर्वेषामेव क्षा यथाह मनुः ( ५।११८ )—'अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवा प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते ॥' इति । स्पृष्टानामस्पृ समत्वेऽपि प्रोक्षणमेव । बहूनां प्रोक्षणविधानेनाल्पानां क्षालने सिद्धे पुन क्षालनवचनस्य समेषु क्षालननिवृत्त्यर्थत्वात्[3] । इयत्स्पृष्टमियदस्पृष्टमित्य क्षालनमेव । पाक्षिकस्यापि दोषस्य परिहर्तव्यत्वात् अनेकपुरुषोद्धार्यमा[4] धान्यवासःप्रभृतीनां स्पृष्टानामस्पृष्टानां च प्रोक्षणमेवेति निबन्धकृतः ॥ १

---

**टिप्प०—1** अत्यन्तानुपहतमिति पक्षान्तरतया–**मेधा०** ।

---

**पाठा०—१** मुखावघृष्टं **ख. २** द्रव्याणां बहूनां **ख. ३** क्षालन निवृ. **ख. ४** अनेकपुरुषैर्धार्य.

निर्लेपानां स्पर्शमात्रदुष्टानां शुद्धिमुक्त्वेदानीं सलेपानां शुद्धिमाह—

**तक्षणं दारुशृङ्गास्थ्नां गोवालैः फलसंभुवाम् ।**
**मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि ॥ १८५ ॥**

**दारूणां** मेषमहिषादि**शृङ्गाणां** करिवाराहशङ्खाद्य**स्थ्नाम्** । 'अस्थि'ग्रहणेन तानामपि ग्रहणम् । उच्छिष्टस्नेहादिभिर्लिप्तानां मृद्भस्मोदकादिभिरनपगतलेपाम् । मनुः (५।१२६)—'यावन्नापैत्यमेध्याक्ताद्गन्धो लेपश्च तत्कृतः । वन्मृद्वारि चादेयं सर्वासु द्रव्यशुद्धिषु ॥' इति सामान्यतः शुद्धिविधानात् । **क्षणं** तावन्मात्रावयवापनयनं शुद्धिः । **फलसंभुवां** बिल्वालाबुनालिकेरादिफलसंभूतानां पात्राणां **गोवालै**रुद्घर्षणाच्छुद्धिः । **यज्ञपात्राणां** स्रुक्स्रुवादीनां **यज्ञकर्मणि** प्रयुज्यमानानां दक्षिणेन हस्तेन दर्भैर्दशापवित्रेण वा यथाशास्त्रं ाङ्गतया **मार्जनं** कर्तव्यम् । एतच्च श्रौतमुदाहरणमन्येषामपि सौवर्णादीनां त्राणां स्मार्तलौकिककर्मसु कृतशौचानामेवाङ्गत्वमिति दर्शयितुम् । यज्ञाङ्गानां ः कृतशौचानामिदं दशापवित्रादिभिर्मार्जनं संस्कारार्थमिति शेषः ॥ १८५ ॥

इदानीं सलेपानामेव केषांचिल्लेपापकर्षणे विशेषहेतूनाह[1]—

**सोषरोदकगोमूत्रैः शुध्यत्याविककौशिकम् ।**
**सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा ॥ १८६ ॥**

**ऊषरमृत्तिकासहितेन गोमूत्रेणोदकेन** वा लेपापेक्षया । **आविकम्**ल्यम्, **कौशिकं** कोशप्रभवं तसरीपट्टादि प्रक्षालितं शुद्ध्यति । 'उदकगोमूत्रैः' बहुवचनं पश्चादप्युदकप्राप्त्यर्थम् । **अंशुपट्टं** वल्कलतन्तुकृतम्, **सश्रीफ**बिल्वफलसहितैः, **कुतपः** पार्वतीयछागरोमनिर्मितकम्बलः, **अरिष्ट**[1]**सहितै**कगोमूत्रैः, **शुध्यती**त्यनुवर्तते । एतच्चोच्छिष्टस्नेहादियोगे सति वेदितव्यम् । पोपघाते तु प्रोक्षणादि; क्षालनासहत्वात्, सर्वत्र द्रव्याविनाशेनैव शुद्धेरिष्टत् । तथा च देवलः—'ऊर्णाकौशेयकुतपपट्टक्षौमदुकूल[2]जाः । अल्पशौचान्त्येते शोषणप्रोक्षणादिभिः ॥' इत्यभिधायाह—'तान्येवामेध्ययुक्तानि क्षालच्छोधनैः स्वकैः । धान्यकल्कैस्तु फलजै रसैः क्षारानुगैरपि ॥' इति क्षौमव शाणस्य समानयोनित्वात् । ऊर्णादिग्रहणं तदारब्धतूलिकादिप्राप्त्यर्थम् । अतस्यालोपघातेनैव क्षालनं कार्यम् । अमेध्यलेपादन्यत्र—'तूलिकामुप[3]धानं च परक्ताम्बरं तथा । शोषयित्वातपे किंचित्करैः संमार्जयेन्मुहुः ॥ पश्चाच्च वारिणा क्ष्य विनियुञ्जीत कर्मणि । तान्यप्यतिमलिष्ठानि यथावत्परिशोधयेत् ॥' इति

टिप्प०—1 'रिठा' इति महाराष्ट्रभाषाप्रसिद्धः । 2 दुकूलं=सूक्ष्मस्निग्धकार्पासतुनिर्मितः पटः । 3 उपधानं='उशी' इति भाषाप्रसिद्धम् ।

पाठा०—१ हेतुलक्षणेनाह क. २ सोषैरुदक (=ऊषमृत्तिकासहितैः) A. अरिष्टफलसहितैः ख. अरिष्टसहितैः फेनकसहितैः क. ४ योगत्वात् ख.

देवलस्मरणात् । पुष्परक्तानि कुङ्कुमकुसुम्भादिरक्तानि । 'पुष्परक्त'ग्रहणमनेक... हरिद्रादिरक्तस्य क्षालनासहस्य प्राप्त्यर्थम्, न मञ्जिष्ठादेः; तस्य क्षालनसहत्वात्... शङ्खेनाप्युक्तम्—'रागद्रव्याणि प्रोक्षितानि शुचीनि' इति ॥ १८६ ॥

**सगौरसर्षपैः क्षौमं पुनःपाकान्महीमयम् ।**
**कारुहस्तः शुचिः पण्यं भैक्षं योषिन्मुखं तथा ॥ १८७ ॥**

**गौरसर्षपसहितैरु**दकगोमूत्रैः **क्षौमं** क्षुमा अतसी तत्सूत्रनिर्मितं शुद्धयति । **पुनःपाकेन** च **मृन्मयं** घटादि । एतच्चोच्छिष्टस्नेहलेपे वेदि... मनुः ( ५।१२३ )—'मद्यैर्मूत्रैः पुरीषैश्च श्लेष्मपूयाश्रुशोणितैः । संस्पृष्टं... शुद्धयेत पुनःपाकेन मृन्मयम् ॥' इति स्मरणात् । चण्डालाद्युपघाते तु त्याग... यथाह पराशरः—'चण्डालाद्यैस्तु संस्पृष्टं धान्यं वस्त्रमथापि वा । प्र... शुध्येत परित्यागान्महीमयम् ॥' इति । **कारवो** रजकचैलधावकसूपकारा... **हस्तः** सदा शुचिः । शुचित्वं तत्साध्ये कर्मणि । वस्त्रधावनादौ सूतका... वेऽपि । तथा च स्मृत्यन्तरम्—'कारवः शिल्पिनो वैद्या दासीदासास्त... राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिताः ॥' इति । **पण्यं** पणार्हं यवव्रीह्यादि । अनेकक्रेतृजनकरपरिघट्टितमप्यप्रयतं न भवति । सूतकादि... च वणिजाम् । भिक्षाणां समूहो **भैक्षं** तद्ब्रह्मचार्यादिहस्तगतं अनाचान्त... नादिनाऽशुचिरथ्याक्रमणादिना निमित्तेनापि न दुष्यति । **तथा योषि**... संभोगकाले **शुचि** । 'स्त्रियश्च रतिसंसर्गे' इति स्मरणात् ॥ १८७ ॥

इदानीं भूशुद्धिमाह—

**भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा ।**
**सेकादुल्लेखनाल्लेपाद्गृहं मार्जनलेपनात् ॥ १८८ ॥**

मार्जन्यां पांसुतृणादीनां प्रोत्सारणं **मार्जनम्** । **दाह**स्तृणकाष्ठाद्यैः । यावता कालेन लेपादिक्षयो भवति तावान् । **गोक्रमणं** गवां पादपरि... **सेकः** क्षीरगोमूत्रगोमयवारिभिः प्रवर्षणं वा, **उल्लेखनं** तक्षणं खननं वा, ... गोमयादिभिः, एतैः समस्तैर्व्यस्तैर्वा मार्जनादिभिरमेध्या दुष्टा मलिना ... शुद्धयति । तथा च देवलः—'यत्र प्रसूयते नारी म्रियते दह्यतेऽपि वा । ... लाध्युषितं यत्र यत्र विष्ठादिसंहतिः ॥ एवं कश्मलभूयिष्ठा भूरमेध्या प्र... श्वसूकरखरोष्ट्रादिसंस्पृष्टा दुष्टतां व्रजेत् ॥ अङ्गारतुषकेशास्थिभस्माद्यैर्मलिना ... इत्यमेध्या दुष्टा मलिनेति शोध्यभूमेस्त्रैविध्यमभिधाय शुद्धिविभागं दर्श... 'पञ्चधा वा चतुर्धा वा भूरमेध्यापि शुद्धयति । दुष्टान्विता त्रिधा द्वेधा...

**टिप्प०**—1 उपघातः=स्पर्शः । 2 रजकः 'रंगारी' इति, चैलधावकः ... च भाषायाम् । 3 अत्र बहुवचनान्तद्वन्द्वः, तथा च तेषां तत्र स्वकर्माविच्छेदः...

**पाठा०**—१ पुनःपाकेन A. २ मद्यमूत्रपुरीषैर्वा ष्ठीवनैः पूयशो... ३ संगतिः ख. ४ विशुध्यति क.

लिनैकधा ॥' इति । यत्र मनुष्या दह्यन्ते यत्र चाण्डालैरध्युषितं तत्र[1] पञ्चभिर्द-
कालगोक्रमणसेकोल्लेखनैः । शुद्धिः यत्र मनुष्या जायन्ते यत्र च म्रियन्ते यत्र
त्यन्तं विष्ठादिसंहतिः तासां दाहवर्जितैस्तैरेव चतुर्भिः । श्वसूकरखरैश्चिरकाल-
ध्युषितायाः गोक्रमणसेकोल्लेखनैस्त्रिभिः । उष्ट्रग्रामकुक्कुटादिभिश्चिरकालमधिवासि-
याः सेकोल्लेखनाभ्यां शुद्धिः । अङ्गारतुषकेशादिभिश्चिरकालमधिवासिताया
ल्लेखनेन शुद्धिः । मार्जनानुलेपने तु सर्वत्र समुच्चीयेते । एवं गृहं मार्जनलेपनाभ्यां
द्ध्यति । गृहस्य पृथगुपादानं संमार्जनलेपनयोः प्रतिदिवसं प्राप्त्यर्थम् ॥१८८॥

**गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते ।**
**सलिलं भस्म मृद्वाऽपि प्रक्षेप्तव्यं विशुद्धये ॥ १८९ ॥**

**गोघ्राते** गोनिःश्वासोपहतेऽन्ने अदनीयमात्रे । **तथा केशमक्षिका[1]कीट-
षिते** । 'केश'ग्रहणं लोमादिप्राप्त्यर्थम् । **कीटाः** पिपीलिकादयः । **उदकं भस्म
मृद्वा** यथासंभवं प्रक्षेप्तव्यं शुद्ध्यर्थम् । यत्तु गौतमेनोक्तम् (१७।८-९)—'नित्यम-
भोज्यं केशकीटावपन्नम्' इति तत्केशकीटादिभिः सह यत्पक्वं तद्विषयम् ॥१८९॥

**त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः ।**
**भस्माद्भिः कांस्यलोहानां शुद्धिः प्लावो द्रवस्य च[2] ॥ १९० ॥**

**त्रपु**प्रभृतीनि प्रसिद्धानि, तेषां **क्षारोदकेनाम्लोदकेन[3] वारिणा** चोपघाता-
पेक्षया समस्तैर्व्यस्तैर्वा शुद्धिः कार्या । **कांस्यलोहानां भस्मोदकेन** । 'ताम्र'-
ग्रहणाद्रीतिकावृत्तिलोहयोर्ग्रहणम्; एकयोनित्वात् । एतच्च ताम्रादीनामम्लोदका-
दिभिः शुद्ध्यभिधानं न नियमार्थम् । 'मलसंयोगजं तज्जं यस्य येनोपहन्यते ।
तस्य तच्छोधनं प्रोक्तं सामान्यं द्रव्यशुद्धिकृत् ॥' इत्यविशेषेण स्मरणात् । अतो
ताम्रादेरुच्छिष्टोदकादिलेपस्यान्येनापगमसंभवे नियमेनाम्लोदकादिना[4] शुद्धिः
कार्या । अत एव मनुना सामान्येनोक्तम्—(५।११४) 'ताम्रायःकांस्यरैत्यानां[2]
त्रपुणः सीसकस्य च । शौचं यथार्हं कर्तव्यं क्षाराम्लोदकवारिभिः ॥' इति ।
यत्तु—'भस्मना शुद्ध्यते कांस्यं ताम्रमम्लेन शुद्ध्यति' इति, तत्ताम्रादेः शौचस्य
परां काष्ठां प्रतिपादयितुं नान्यस्य निषेधाय । यदा तूपघातातिशयस्तदाम्लोद-
कादीनामावृत्तिः; 'गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च । शुद्ध्यन्ति
दशभिः क्षारैः श्वकाकोपहतानि च ॥' (आपस्तंब.) इति स्मरणात् । (दशक्षारा[5]-
नाह—'तिलमुष्ककशिग्रूणां कोकिलाक्षपलाशयोः । काकजङ्घा तथावज्ञचिञ्चाश्वत्थ-
स्य च ॥ एभिस्तु दशभिः क्षारैः शुद्धिर्भवति कांस्यके ॥') **शुद्धिः प्लावो[3]
द्रवस्य** त्विति । **द्रवस्य** द्रवद्रव्यस्य घृतादेः प्रस्थप्रमाणाधिकस्य श्वकाकाद्युप-
हतस्य अमेध्य[6]संस्पृष्टस्य च **प्लावः** प्लावनं समानजातीयेन द्रवद्रव्येण भाण्डस्याभि-

---

**टिप्प०**—1 मक्षिका=नीलमक्षिका, कीटः=अमेध्यस्पर्शी. 2 रैत्यं=पित्तलम् । 3 प्लावः=अद्भिस्तदाधारभाण्डस्य बहिरवसेकपर्यन्तं पूरणम्–अप० ।

---

**पाठा०**—१ तस्याः पञ्चका; तयोः पञ्च ख. २ तु. ३ दकवारिणा क. ४ दकादिभिः क. ५ इदं क. पुस्तकेऽधिकम्. ६ अमेध्यद्रव्य क.

पूरणं यावन्निःसरणं शुद्धिरित्यनुवर्तते । ततोऽल्पस्य त्यागः । बहुल्पत्वं
कालाद्यपेक्षयापि वेदितव्यम् । यथाह बौधायनः—'देशं कालं तथा
द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत् ॥' इति ।
हृतस्य तूत्पवनम् । यथाह मनुः ( ५।११५ )—'द्रवाणां चैव सर्वेषां शुद्धि
स्मृतम्' इति । उत्पवनं चात्र वस्त्रान्तरिते पात्रे प्रक्षेपः । अन्यथा
गमस्यासंभवात् । शूद्रभाण्डस्थितस्य तु मधूदकादेः पात्रान्तरानयनाच्छुद्धि
'मधूदके पयस्तद्विकाराश्च पात्रात्पात्रान्तरानयने शुद्धाः' इति बौधायनस्य
मधुघृतादेर्वर्णापसदहस्तात्प्राप्तस्य पात्रान्तरानयनं पुनः पचनं च कार्यम्।
शङ्खः—'अभ्यवहार्याणां घृतेनाभिघारितानां पुनः पवनमेवं स्नेहानां स्नेहवत्
इति ॥ १९० ॥

एवं सौवर्णराजतादीनामेतत्प्रकरणप्रतिपादितानां सर्वेषामुच्छिष्टस्नेह
शुद्धिमुक्त्वेदानीं तेषामेवामेध्योपहतानां शुद्धिमाह—

**अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धादिकर्षणात् ।**
**वाक्शस्तमम्बुनिर्णिक्तमज्ञातं च सदा शुचि ॥ १**

**अमेध्याः** शरीरजा मला वसाशुक्रादयः; 'वसा शुक्रमसृङ्मज्जामूत्र
विण्नखाः । श्लेष्मा-श्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥' (५।१३६)
'मानुषास्थि शवं विष्ठा रेतो मूत्रार्तवं वसा । स्वेदादोऽश्रु दूषिका श्लेष्म मद्यं
मुच्यते ॥' इति । अमेध्यादयो मला मनुदेवलादिभिः प्रतिपादिताः तैर
लिप्तममेध्याक्तं तस्य मृदा तोयेन च शुद्धिः कर्तव्या गन्धापकर्षणात्
ग्रहणाल्लेपस्यापि ग्रहणम् । यथाह गौतमः ( १।४२ )—'लेपगन्धापकर्षे
ममेध्यलिप्तस्य' इति । सर्वशुद्धिषु च प्रथमं मृत्तोयैरेव लेपगन्धापकर्षणं
यदि गन्धादि मृत्तोयैर्न गच्छति तदान्येन; 'अशक्तावन्येन मृदद्भिः पूर्वं
(१।४३) इति गौतमस्मरणात् । वसादिग्रहणं च सर्वेषाममेध्यत्वं प्रतिपा
समानोपघाताय—'मद्यैर्मूत्रपुरीषैश्च श्लेष्मपूयाश्रुशोणितैः । संस्पृष्टं नैव
पुनःपाकेन मृन्मयम् ॥' (मनु० ५।१२३) इत्युपघाते विशेषाभिधानात्—'
चैवमेषां देहाच्चैव मलाश्च्युताः' इति वचनाद्देहच्युतानामेव न स्वस्थानाव
पुरुषस्य नाभेरूर्ध्वं करव्यतिरिक्ताङ्गानामन्यामेध्यस्पर्शे स्नानम् । यथाह दे
'मानुषास्थि वसां विष्ठामार्तवं मूत्ररेतसी । मज्जानं शोणितं स्पृष्ट्वा परस्य
चरेत् ॥' इति—'तान्येव स्वानि संस्पृश्य प्रक्षाल्याचम्य शुद्ध्यति' इति ।
'ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते । तत्र स्नानमधस्तात्तु प्रक्षा
शुद्ध्यति ॥' इति । कृतेऽपि यथोक्तशौचे मनसोऽपरितोषाद्यत्र शुद्धिसंदे

टिप्प०—1 कर्णविट्=कर्णमलः । 2 दूषिका=नेत्रमलः । 3 उपघातः

पाठा०—१ तथात्मानं ख. २ घृतादेर्हीनवर्णा क. ३ पचनं क
४ गंधापकर्षणेन क. ५ ज्ञानां मला क.

क्शस्तं शुचि। शुद्धमेतदस्त्विवति ब्राह्मणवचनेन शुद्धं भवतीत्यर्थः। अम्बु-र्णिक्तं यत्र प्रतिपादिता शुद्धिर्नास्ति तस्य प्रक्षालनेन शुद्धिः। प्रक्षालनासहस्य णेन। अज्ञातं च सदा यत्काकाद्युपहतमुपयुक्तं न कदाचिदपि ज्ञायते शुचि। तदुपयोगाददृष्टदोषो नास्तीत्यर्थः। नन्वेतद्विरुद्ध्यते; 'संवत्सरस्यै-पि चरेत्कृच्छ्रं द्विजोत्तमः। अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः॥' इत्य-दोषेऽपि प्रायश्चित्तप्रतिपादनात्। नैतत्, प्रायश्चित्तस्य जरिश्वविषयत्वात्, भावस्य चान्योपयोगिविषयत्वात्॥ १९१॥

**शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम्।**
**तथा मांसं श्वचण्डालक्रव्यादादिनिपातितम्॥ १९२॥**

महीगतं भूमिस्थमुदकं एकगवीतृप्तिजननसमर्थं चण्डालादिभिरस्पृष्टं कृतिस्थं रूपरसगन्धस्पर्शान्तरमनापन्नं शुचि आचमनादियोग्यं भवति। हीगतम्' इत्यशुचिभूगतस्य शुचित्वनिषेधार्थं नत्वान्तरिक्षोदकस्य शुद्धत्वव्या-यर्थम्। नाप्युद्धृतस्य—'उद्धृताश्चापि शुद्ध्यन्ति शुद्धैः पात्रैः समुद्धृताः। रात्रोषिता आपस्त्याज्याः शुद्धा अपि स्वयम्॥' इति देवलवचनात्। तथा डालादिकृते तडागादौ न दोषः; 'अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा। स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते॥' इति शातातपस्मरणात्। था मांसं श्वचण्डालक्रव्यादादिभिर्निपातितं शुचि। आदिग्रहणात्पुल्कसादेरपि णम्। निपातितग्रहणं भक्षितस्य निराकरणार्थम्॥ १९२॥

**रश्मिरग्नी रजश्छाया गौरश्वो वसुधानिलः।**
**विप्रुषो मक्षिकाः स्पर्शे वत्सः प्रस्नवने शुचिः॥१९३॥**

रश्मयः सूर्यादेः प्रकाशकद्रव्यस्य। अग्निः प्रसिद्धः। रजः अजादिसंबन्ध-तिरेकेण। तत्र—'श्वकाकोष्ट्रखरोलूकसूकरग्राम्यपक्षिणाम्। अजाविरेणुसंस्प-दायुर्लक्ष्मीश्च हीयते॥' इति दोषश्रवणात्तत्स्पर्शे संमार्जनादि कार्यम्। छाया ादेः, गौः, अश्वः, वसुधा भूमिः, अनिलो वायुः, विप्रुषोऽवश्याय-न्दवः, मुखजानां वक्ष्यमाणत्वात्। मक्षिकाश्च, एते चण्डालादिस्पृष्टा अपि र्शे शुचयः। वत्सः प्रस्नवने ऊधोगतदुग्धापकर्षणे शुचिः। 'वत्स'ग्रहणं लस्योपलक्षणार्थम्; 'बालैरनुपरिक्रान्तं स्त्रीभिराचरितं च यत्। अविज्ञातं च किंचिन्नित्यं मेध्यमिति स्थितिः॥' इति वचनात्॥ १९३॥

**अजाश्वयोर्मुखं मेध्यं न गोर्न नरजा मलाः।**
**पन्थानश्च विशुद्ध्यन्ति सोमसूर्यांशुमारुतैः॥ १९४॥**

अजाश्वयोर्मुखं मेध्यं। न गोः, न नरजा मलाः, 'नर'शब्दो लक्ष-

टिप्प०—1 यद्वा,—'गुणसमूहो द्रव्यम्' इति पातञ्जलसिद्धान्तविषयमिदम्।

पाठा०—१ उपभुक्तं ख. २ नतु तद्धि ख. ३ भावस्य वान्यप्रयोग क. मार्गं मांसं (=मृगादेर्मांसं) A. ५ रश्वसुधानिलाः A. ६ प्रस्रवणे A. अजाश्वं मुखतो मेध्यं ग,–A. ८ पन्थानस्तु A.

णया देहमभिधत्ते । तज्जा मला वसादयो मेध्या न भवन्ति । पन्थानो श्वचण्डालादिभिः स्पृष्टा अपि रात्रौ सोमांशुभिर्मारुतेन च शुद्ध्यन्ति दिवा तु सूर्यांशुभिर्मारुतेन च ॥ १९४ ॥

**मुखजा विप्रुषो मेध्यास्तथाऽऽचमनबिन्दवः ।**
**श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥ १**

मुखे जाता **मुखजाः** श्लेष्मविप्रुषो **मेध्याः** नोच्छिष्टं कुर्वन्ति अ श्चेदङ्गे । 'न मुखविप्रुष उच्छिष्टं कुर्वन्ति न चेदङ्गे निपतन्ति' इति नात् । तथा च ये आचमनतोयबिन्दवः पादौ स्पृशन्ति ते मेध्याः **चास्यगतं** मुखप्रविष्टमुच्छिष्टं न करोति । **दन्तसक्तं** चान्नादिकं स्वय त्यक्त्वा शुचिर्भवति । अच्युतं दन्तसक्तम् । तथा च गौतमः—'द दन्तवदन्यत्र जिह्वाभिमर्शनात्प्राक् च्युतेरित्येके च्युतेष्वास्रावविद्या तच्छुचि' इति । निगिरणं पुनरनेन याज्ञवल्क्योक्तेन त्यागेन विक निगिरन्नेवेत्येवकारः 'चर्वणे त्वाचमेन्नित्यं मुक्त्वा ताम्बूलचर्वणम् । ओ मकौ स्पृष्ट्वा वासो विपरिधाय च ॥' इति विष्णूक्ताचमननिषेधार्थः । ग्रहणं फलाद्युपलक्षणार्थम् । यथाह शातातपः—'ताम्बूले च फले स्नेहावशिष्टके । दन्तलग्नस्य संस्पर्शे नोच्छिष्टो भवति द्विजः ॥' इति ॥

**स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।**
**आचान्तः पुनराचामेद्वासो विपरिधाय च ॥ १**

स्नानपानक्षुतस्वप्नभोजनरथ्योपसर्पणवासोविपरिधानेषु **आचान्तः पुनराचामेत्** । द्विराचामेदित्यर्थः । चकाराद्रोदनाध्ययना ल्यानृतोक्त्यादिषु । तथा च वसिष्ठः—'सुप्त्वा भुक्त्वा क्षुत्वा स्नात्वा पीत्वा चाचान्तः पुनराचामेत्' इति । मनुरपि (५।१४५)—'सुप्त्वा भुक्त्वा च ष्ठीवित्वोक्त्वानृतं वचः । पीत्वापोऽध्येष्यमाणश्च आचामेत् सन् ॥' इति । भोजने त्वादावपि द्विराचमनम्—'भोक्ष्यमाणस्तु द्विराचामेत्' इत्यापस्तम्बस्मरणात् । स्नानपानयोरादौ सकृत् । अध्ययने द्विः । शेषेष्वन्ते एव यथोक्तं द्विराचमनम् ॥ १९६ ॥

**रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ।**
**मारुतेनैव शुद्ध्यन्ति पक्वेष्टकचितानि च ॥ १९७**

**रथ्या** मार्गमात्रम्, **कर्दमः** पङ्कः **तोयमुदकम्**, **रथ्यास्थितानि** क यानि **अन्त्यैश्चण्डालादिभिः श्वभिर्वायसैश्च स्पृष्टानि मारुतेनै**

टिप्प०—1 हेमाद्रिस्तु चर्वण–निगिलनयोर्भेदं मन्वानः 'चर्वणनि कारः' इत्याह ।

पाठा०—१ दन्तेभ्यः पतितं त्यजति गिलति वा एतावता शु आचमनं इति ग. २ निगिरन्नेव क. निगरन्नेव ख. ३ भुक्ते A. ४ नृतो ख. ५ पक्वेष्टिकचितानि ख.

न्ति शुद्धिमुपयान्ति । बहुवचनं तद्गतगोमयशर्करादिप्राप्त्यर्थम् । **पक्केष्ट-भिश्चितानि** प्रासादधवलगृहादीनि चण्डालादिस्पृष्टानि **मारुतेनैव यन्ति** । एतच्च 'प्रोक्षणं संहतानाम्' (मनु० ५।१५५) इत्युक्तप्रोक्षण-धार्थम् । तृणकाष्ठपर्णादिमयानां तु प्रोक्षणमेवेति ॥ १९७ ॥

इति द्रव्यशुद्धिप्रकरणम् ।

---

## अथ दानप्रकरणम् ९

इदानीं दानधर्मं प्रतिपादयिष्यंस्तदङ्गभूतपात्रप्रतिपादनार्थं तत्प्रशंसामाह—

**तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान्वेदगुप्तये ।**
**तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च ॥ १९८ ॥**

**ब्रह्मा** हिरण्यगर्भः कल्पादौ तपस्तप्त्वा ध्यानं कृत्वा कान्स्रजामीति पूर्वं ब्राह्म-सृष्टवान् । किमर्थम्? **वेदगुप्तये** वेदरक्षणार्थम् । **पितृणां देवतानां च** र्थम् । अनुष्ठानोपदेशद्वारेण **धर्मसंरक्षणार्थं च** । अतस्तेभ्यो दत्तमक्षय-भवतीत्यभिप्रायः ॥ १९८ ॥

**सर्वस्य प्रभवो विप्राः श्रुताध्ययनशीलिनः ।**
**तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः १९९**

**र्वस्य** क्षत्रियादेर्विप्राः **प्रभवः** श्रेष्ठाः जात्या कर्मणा च । ब्राह्मणेष्वपि **ध्ययनशीलिनः** श्रुताध्ययनसंपन्ना उत्कृष्टाः । **तेभ्योऽपि क्रियापरा** तानुष्ठानशीलाः । **तेभ्योऽप्यध्यात्मवित्तमाः** वक्ष्यमाणमार्गेण शमद-दियोगेनात्मतत्त्वज्ञाननिरताः, 'श्रेष्ठा' इत्यनुषज्यते ॥ १९९ ॥

एवं जातिविद्यानुष्ठानतपसां प्रशंसामुखेनैकैकयोगेन पात्रतामभिधायाधुना समुच्चये संपूर्णपात्रतामाह—

**न विद्यया केवलया तपसा वापि पात्रता ।**
**यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥ २०० ॥**

**केवलया विद्यया** श्रुताध्ययनसंपत्त्या **नैव संपूर्णपात्रत्वम्** । नापि केवलेन तपसा शमदमादिना । 'अपि'शब्दात्केवलेनानुष्ठानेन केवलया जात्या वा संपूर्णपात्रता । कथं तर्हि? **यत्र** पुरुषे **वृत्तम**नुष्ठानं **इमे चोभे** विद्यातपसी चशब्दाद्ब्राह्मणजातिश्च **तदेवं** मन्वादिभिः संपूर्णपा**त्रं प्रकीर्तितम्** । **हि** यादतः परमुत्कृष्टं पात्रं नास्ति । अत्र जातिविद्यानुष्ठानतपःसमुच्चयानामुत्तरो-प्राशस्त्येन फलतारतम्यं द्रष्टव्यम् ॥ २०० ॥

---

**पाठा०—१** कृत्वा मुख्यान्सृजामीति **ख. २** योगे पात्रतां **ग. ३** केवल-त्या **क.**

सत्पात्रे गवादिदानं देयम्—

**गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् ।**
**नापात्रे विदुषा किंचिदात्मनः श्रेय इच्छता ॥ २**

पूर्वोक्ते **पात्रे गवादिकमर्चितं** शास्त्रोक्तोदकदानादीतिकर्तव्यतासहितं **अपात्रे** क्षत्रियादौ ब्राह्मणे च पतितादौ **विदुषा** पात्रविशेषेण फलविशेषं **श्रेयः** संपूर्णफल**मिच्छता किंचिद**ल्पमपि **न दातव्यम्** । श्रेयोग्रह त्रदानेऽपि किमपि तामसं फलमस्तीति सूचितम् । यथाह कृष्णद्वैपायनः १७।२२ )—'अदेशकाले यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञातं समुदाहृतम् ॥' इति । अपात्रे न दातव्यमिति वदता विशिष्टदेशकालद्रव्य पात्रस्यासन्निधाने द्रव्यस्य वा तदुद्देशेन त्यागं तस्मै प्रतिश्रवणं वा कृत्वा सम नत्वपात्रे दातव्यमिति सूचितम् । तथा प्रतिश्रुतमपि पश्चात्पातकादिसंयो न देयम्; 'प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्' इति निषेधात् ॥ २०१

अपात्रे दातुर्निषेधमुक्त्वा प्रतिग्रहीतारं प्रत्याह—

**विद्यातपोभ्यां हीनेन नतु ग्राह्यः प्रतिग्रहः ।**
**गृह्णन्प्रदातारमधो नयत्यात्मानमेव च ॥ २०२॥**

**विद्यातपोभ्यां हीनेन प्रतिग्रहः** सुवर्णादि**र्न ग्राह्यः** । यस्माद्वि प्रति**गृह्णन् दातारमात्मानं चाधो** नरकं **नयति** प्रापयतीति ॥ २

गवादि पात्रे दातव्यमित्युक्तं तत्र विशेषमाह—

**दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ।**
**याचितेनापि दातव्यं श्रद्धापूतं स्वशक्तितः ॥ २०**

**प्रतिदिवसं** शक्त्यनुसारेण यथोक्तविधिना **पात्रे** गवादिकं स्वकुटुम्बा **दातव्यम्** । **निमित्तेषु** चन्द्रोपरागादिषु **विशेषतो**ऽधिकं यत्नेन दा **याचितेनापि** श्रद्धापूतमनसूयापवित्रीकृतं शक्त्या दातव्यम् । 'याचि दातव्यम्' इति वदता यथोक्तं पात्रं स्वयमेव गत्वा आहूय वा यद्दानं फलमुक्तम् । तथा च स्मरणम्—'गत्वा यद्दीयते दानं तदनन्तफलं सहस्रगुणमाहूय याचिते तु तदर्धकम्' इति ॥ २०३ ॥

गवादिकं देयमित्युक्तं तत्र गोदाने विशेषमाह—

**हेमशृङ्गी शफै रौप्यैः सुशीला वस्त्रसंयुता ।**
**सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा ॥ २**

हेममये शृङ्गे यस्याः सा हेमशृङ्गी । **शफैः** खुरैः **रौप्यैः** राजतैः **संयु** च संयुता **कांस्यपात्रसहिता** बहुक्षीरा सुशीला गौर्यथाशक्तिदक्षि **दातव्या** ॥ २०४ ॥

---

पाठा०—१ दकपाद्यादीति क. २ किंचित्तामसं क. ३ नैव A. च शक्तितः A. ५ खुरै रूप्यैः ख. ६ बहुक्षीरा गौर्यथा क. ख.

गोदानफलमाह—

दाताऽस्याः स्वर्गमाप्नोति वत्सरान्रोमसंमितान् ।
कपिला चेत्तारयति भूयश्चासप्तमं कुलम् ॥ २०५ ॥

**अस्या** गोः **रोमसंमितान्** रोमसंख्याकान्वत्सरान्**स्वर्गमाप्नोति दाता । यदि कपिला** तदा न केवलं दातारं तारयति किंतु **कुलमपि आसप्तमं** सप्तममभिव्याप्य पित्रादीन्षट् आत्मानं च सप्तमम् । अप्यर्थे 'भूयः' शब्दः ॥ २०५ ॥

उभयतोमुखीदानफलम्—

सवत्सारोमतुल्यानि युगान्युभयतोमुखीम् ।
दाताऽस्याः स्वर्गमाप्नोति पूर्वेण विधिना ददत् ॥ २०६ ॥

**सवत्सारोमतुल्यानि** वत्सेन सह वर्तत इति सवत्सा तस्या रोमतुल्यानि तस्य गोश्च यावन्ति रोमाणि तावत्संख्याकानि युगानि कृतत्रेतादीनि **उभयतोमुखीं ददत्स्वर्गमाप्नोत्य**नुभवति पूर्वेण विधिना दाता चेत् ॥ २०६ ॥

का पुनरुभयतोमुखी कथं तावत्तद्दानं महाफलमित्यत आह—

यावद्वत्सस्य पादौ द्वौ मुखं योन्यां च दृश्यते ।
तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥ २०७ ॥

गर्भान्निर्गच्छतो वत्सस्य **द्वौ पादौ मुखं च यावत्कालं योन्यां दृश्यते** तत्कालं उभयतोमुखमस्या अस्तीत्युभयतोमुखी । **यावत्कालं गर्भं न मुञ्चति** तावत्सा **गौः पृथिवी**समा **ज्ञेया** । अतः फलातिशयो युक्तः ॥ २०७ ॥

सामान्यगोदाने फलम्—

यथाकथंचिद्दत्त्वा गां धेनुं वाऽधेनुमेव वा ।
अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते ॥ २०८ ॥

**यथाकथंचित्** हेमशृङ्गाद्यभावेऽपि यथासंभवं पूर्वोक्तेन विधिना **धेनुं** दोग्ध्रीं **अधेनुं वा** अवन्ध्यां **अरोगां** रोगरहितां **अपरिक्लिष्टां** अत्यन्तादुर्बलां **गां** दत्त्वा **दाता स्वर्गे महीयते** पूज्यते ॥ २०८ ॥

गोदानसमान्याह—

श्रान्तसंवाहनं रोगिपरिचर्या सुरार्चनम् ।
पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत् ॥ २०९ ॥

श्रान्तस्यासनशयनादिदानेन श्रमापनयनं **श्रान्तसंवाहनम्** । **रोगिणां परिचर्या** यथाशक्त्यौषधादिदानेन । **सुरार्चनं** हरिहरहिरण्यगर्भादीनां गन्धपुष्पादिभिराराधनम् । **पादशौचं द्विजा**नां समानानामधिकानां च । तेषामेवोच्छिष्टस्य **संमार्जनम्** । एतान्यनन्तरोक्तेन **गोदानेन समानि** ॥ २०९ ॥

पाठा०—१ भूय आ A. 2 मुखी A. ३ द्वौ पादौ A. ४ प्रदृश्यते A.

**भूदीपांश्चान्नवस्त्राम्भस्तिलसर्पिःप्रतिश्रयान् ।**
**नैवेशिकं स्वर्णधुर्यं दत्त्वा स्वर्गे महीयते ॥ २१०॥**

**भूः** फलप्रदा । **दीपा** देवायतनादिषु । **प्रतिश्रयः** प्रवासिना... निवेशनार्थं गार्हस्थ्यार्थं यत्कन्या दीयते तन्नैवेशिकम् । **स्वर्णं**... **धुर्यो** भारसहो बलीवर्दः, शेषं प्रसिद्धम्, एतान्भूदीपादीन्दत्त्वा स्व... **महीयते** पूज्यते । स्वर्गफलं च भूमिदानादीनां न फलान्तरव्युदा... 'यत्किंचित्कुरुते पापं ज्ञानतोऽज्ञानतोऽपि वा । अपि गोचर्ममात्रेण... शुद्ध्यति ॥' तथा मनुः (४।२२९)—'वारिदस्तृप्तिमाप्नोति सुखमक्षय... तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥ वासोदश्चन्द्रसालोक्यमश्वि... मश्वदः । अनडुहः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम् ॥' इत्यादिफल... णात् । गोचर्मलक्षणं च बृहस्पतिना दर्शितम्—'सप्तहस्तेन दण्डेन... निवर्तनम् । दश तान्येव गोचर्म दत्त्वा स्वर्गे महीयते ॥' इति ॥ २१०

**गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम् ।**
**यानं वृक्षं प्रियं शय्यां दत्त्वाऽत्यन्तं सुखी भवेत् ॥...**

**गृहं** प्रसिद्धम्, **धान्यानि** च शालीगोधूमादीनि, **अभयं**... **उपानहौ** छत्रम्, **माल्यं** मल्लिकादेः, **अनुलेपनं** कुङ्कुमचन्दनादि... रथादि, **वृक्षं** उपजीव्यमाम्रादिकम्, **प्रियं** यद्यस्य प्रियं धर्मादिकम्, च दत्त्वा, **अत्यन्त**मतिशयेन **सुखी भवति** । नच हिरण्यादिवद्धर्मे... शक्यत्वाद्धर्मस्य दानासंभवः । भूमिदानादावपि समानत्वात् । स्मृ... धर्मदानश्रवणात्—'देवतानां गुरूणां च मातापित्रोस्तथैव च । पुण्यं देयं... नापुण्यं चोदितं क्वचित् ॥' अपुण्यदाने तदेव वर्धते प्रतिग्रहीतुरपि... प्रवृत्तस्य; 'यः पापमबलं ज्ञात्वा प्रतिगृह्णाति दुर्मतिः । गर्हिताचरणा... तावत्समाश्रयेत् ॥ समद्विगुणसाहस्रमानन्त्यं च प्रदातृषु ॥' इति स्मर... च सर्वत्र देशकालपात्रविशेषाद्देयविशेषाद्दातृविशेषात्—'दाने फलं... हिंसायां तद्वदेव हि' इति प्रतिग्रहीतृवृत्तिविशेषाच्च दातृ-प्रतिग्रहीत्रोः फ... द्रष्टव्यम् ॥ २११ ॥

दानात्फलमुक्तमिदानीं दानव्यतिरेकेणापि दानफलावाप्तिहेतूनाह—

**सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः ।**
**तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतम् ॥ २१२ ॥**

यस्मात्सर्वधर्ममयं **ब्रह्म** अवबोधकत्वेन तस्मात्तद्दानं सर्वदाने... **धिकं** अतस्तद्ददध्यापनादिद्वारेण **ब्रह्मलोकमवाप्नोति** ।

---

पाठा०—१ भूदीपान्नाश्ववस्त्रा A. २ नैवेशिकस्वर्णधुर्यान् A. ३ कृषिफलप्रदा ग. ४ भारवाहो ग. ५ चर्मादीनामसंभवः ख. ६ ... क. ७ प्रबलं ज्ञात्वा ग. ८ मविच्युतः A.

च्युतिर्यथा न भवति । आ[1] भूतसंप्लवं ब्रह्मलोकेऽवतिष्ठत इत्यर्थः । अत्र च ब्रह्मदाने परस्वत्वापादनमात्रं दानं; स्वत्वनिवृत्तेः कर्तुमशक्यत्वात् ॥ २१२ ॥

दाने फलमुक्तम्, इदानीं दानव्यतिरेकेणापि दानफलावाप्तेर्हेतुमाह—

**प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम् ।**
**ये लोका दानशीलानां स तानाप्नोति पुष्कलान् ॥ २१३ ॥**

**यः पात्रभूतोऽपि** प्राप्तं[2] **प्रतिग्रहं** सुवर्णादिकं **नादत्ते** न स्वीकरोति, असौ स्वयत्प्राप्तं नोपादत्ते तत्तद्दानशीलानां **ये लोकास्तान्समग्रानाप्नोति** ॥२१३॥

इदानीं सर्वप्रतिग्रहनिवृत्तिप्रसङ्गेऽपवादमाह—

**कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः ।**
**मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च ॥ २१४ ॥**

**धानाः** भृष्टा[2] यवाः, **क्षिति**र्मृत्तिका, शेषं प्रसिद्धम् । एतत् कुशादिकं स्वयमुपानीतं न प्रत्याख्येयम् । चकाराद्गृहादि ( मनुः ४।२५० )—'शय्यां गृहान्कुशान्गन्धानपः पुष्पं मणीन्दधि । धाना मत्स्यान्पयो मांसं शाकं चैव न निर्णुदेत् ॥' तथा—'एधोदकं[3] मूलफलमन्नमभ्युद्यतं च यत् । सर्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम् ॥' ( ४।२४७ ) इति मनुस्मरणात् ॥ २१४ ॥

किमिति न प्रत्याख्येयमित्याह—

**अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः ।**
**अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः ॥ २१५ ॥**

यस्मा**दयाचित**मेतत्कुशाद्या**हृतं** दुष्कृतकारिणोऽपि संबन्धि ग्राह्यं, किमुत पुण्यं देयोक्तकारिणः । तस्माच्च प्रत्याख्येयम् । **अन्यत्र कुलटाषण्ढपतितेभ्यः** शत्रोश्च । कुलात्कुलमटन्तीति कुलटाः स्वैरिण्यादिकाः, षण्ढस्तृतीयाप्रकृतिः ॥

प्रतिग्रहनिवृत्तेरपवादान्तरमाह—

**देवातिथ्यर्चनकृते गुरुभृत्यार्थमेव वा ।**
**सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥ २१६ ॥**

**देवातिथ्यर्चनादे**रावश्यकत्वात्तदर्थमात्मकारणात् । पतिताद्यत्यन्तकुत्सितवर्जं **सर्वतः प्रतिगृह्णीयात्** । **गुरवो** मातापित्रादयः, **भृत्याः** भरणीया भार्यापुत्रादयः ॥ २१६ ॥

इति दानप्रकरणम् ।

---

**टिप्प०**—1 कल्पपर्यन्तम् । 2 अनेन याचनानिरासः । 3 एधादिषु याच्ञाप्य-रुद्धा-मेधा० ।

---

**पाठा०**—१ दातुः फलमुक्त्वेदानीं. २ भ्रष्टतन्दुलाः क. ग. ३ मध्वाशाभय ग. ४ षण्ढ A. ५ स्नानापत्करणात् क.

# अथ श्राद्धप्रकरणम् १०

इदानीं श्राद्धप्रकरणमारभ्यते । श्राद्धं नामादनीयस्य तत्स्थानीयस्य वा प्रेतोद्देशेन श्रद्धया त्यागः । तच्च द्विविधं—पार्वणमेकोद्दिष्टं चेति । तत्र त्रि द्देशेन यत्क्रियते तत्पार्वणम् । एकपुरुषोद्देशेन क्रियमाणमेकोद्दिष्टम् । त्रिविधं—नित्यं नैमित्तिकं काम्यं चेति । तत्र नित्यं नियतनिमित्तोपाधौ चो हरहरमावस्याष्टकादिषु । अनियतनिमित्तोपाधौ चोदितं नैमित्तिकं यथा पु दिषु । फलकामनोपाधौ विहितं[1] काम्यं यथा स्वर्गादिकामानां कृत्तिकादि तिथिषु च । पुनश्च पञ्चविधम्—'अहरहःश्राद्धं पार्वणं वृद्धिश्राद्धमेकोद्दि ण्डीकरणं चे'ति । तत्राहरहःश्राद्धं—'अन्नं पितृमनुष्येभ्यः' इत्यादिनोक्तम् च मनुः ( ३।८२ )—'कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूल पितृभ्यः प्रीतिमावहन् ॥' इति ॥

अधुना पार्वणं वृद्धिश्राद्धं च दर्शयिष्यंस्तयोः कालानाह—

**अमावास्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ।**
**द्रव्यं ब्राह्मणसंपत्तिर्विषुवत्[2]सूर्यसंक्रमः ॥ २१७ ॥**
**व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।**
**श्राद्धं प्रति रुचिश्चैते श्राद्धकालाः प्रकीर्तिताः ॥ २**

यत्र दिने चन्द्रमा न दृश्यते सा **अमावास्या**[1], तस्यामहर्द्वयव्याप्तौ पराह्णव्यापिनी ग्राह्या; 'अपराह्णः पितॄणाम्' इति वचनात् । अ पञ्चधा विभक्ते दिने चतुर्थो भागस्त्रिमुहूर्तः । **अष्टकाश्च**तस्रः 'हेमन्ति योश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः' (गृ.सू. २।४।१) इत्याश्वलायनोक्ताः, पुत्रजन्मादिः, **कृष्णपक्षो**ऽपरपक्षः, **अयनद्वयं** दक्षिणोत्तरसंज्ञकम्, कृ[3]सरमाषादिकम्, **ब्राह्मणसंपत्ति**र्वक्ष्यमाणा, **विषुवद्द्वयं** मेषतुलयोः गमनम्, **सूर्यसंक्रमः** आदित्यस्य राशेः राश्यन्तरगमनम्, अयनवि संक्रान्तित्वे सिद्धेऽपि पृथगुपादानं फलातिशयप्रतिपादनार्थम् । **व्यती**[2] योगविशेषः । **गजच्छाया**—'यदेन्दुः पितृ[3]दैवत्ये हंसश्चैव करे स्थितः । तिथि[4]र्भवेत्सा हि गजच्छाया प्रकीर्तिता ॥' इति परिभाषिता । हस्ति केचित्, सेह न गृह्यते; कालप्रक्रमात् । **ग्रहणं** सोमसूर्ययोरुपरागः । कर्तुः **श्राद्धं प्रति रुचि**र्भवति तदापि । चशब्दाद्युगादिप्रभृतयः । **एते** कालाः । यद्यपि—'चन्द्रसूर्यग्रहे नाद्यात्' इति ग्रहणे भोजननिषेध भोक्तुर्दोषः, दातुरभ्युदयः ॥ २१७–१८ ॥

**टिप्प०**—1 सा द्विविधा–सिनीवाली कुहूश्चेति, 'दृष्टचन्द्रा सिनीवाली न कुहूस्तथा'–**अप०** । 2 स च 'श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके । यद्यमा व्यतीपातः स उच्यते' इत्यादावुक्तः । 3 मघानक्षत्रे, हंस आदित्यः, करो हस्तान

**पाठा०**—१ चोदितं क. २ विषुवः क. ३ कृष्णसारमांसादि ४ याम्या तिथि ख. ग. तिथिर्वैश्रवणीया (=त्रयोदशी) A.

अहरहःश्राद्धव्यतिरिक्तवक्ष्यमाणचतुर्विधश्राद्धेषु ब्राह्मणसंपत्तिमाह—

**अग्र्यः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा ।**
**वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः ॥ २१९ ॥**

**सर्वेषु वेदेषु** ऋग्वेदादिषु अनन्यमनस्कतयाप्यजस्रास्खलिताध्ययनक्षम **अग्र्यः । श्रोत्रियः** श्रुताध्ययनसंपन्नः । वक्ष्यमाणं ब्रह्म यो वेत्ति असौ **ब्रह्मवित् । युवा** मध्यमवयस्कः । सर्वस्येदं विशेषणम् । मन्त्रब्राह्मणयोरर्थं वेत्तीति **वेदार्थवित् ।** ज्येष्ठसाम सामविशेषः, तदध्ययनाङ्गव्रतं च तद्व्रताचरणेन यस्तदधीते स **ज्येष्ठसामा । त्रिमधुः** ऋग्वेदैकदेशः, तद्व्रतं च तद्व्रताचरणेन तदधीते स त्रिमधुः । त्रिसुपर्णं ऋग्यजुषोरेकदेशः, तद्व्रतं च तद्व्रताचरणेन यस्तदधीते **त्रिसुपर्णकः ।** 'एते ब्राह्मणाः श्राद्धसंपद' इति वक्ष्यमाणेन संबन्धः[2] ॥२१९॥

**स्वस्रीयऋत्विग्जामातृयाज्यश्वशुरमातुलाः ।**
**त्रिणाचिकेतदौहित्रशिष्यसंबन्धिबान्धवाः ॥ २२० ॥**

**स्वस्रीयो** भागिनेयः, **ऋत्विगु**क्तलक्षणः, **जामाता** दुहितुर्भर्ता, **त्रिणाचिकेतं** यजुर्वेदैकदेशः, तद्व्रतं च तद्व्रताचरणेन यस्तदध्यायी स त्रिणाचिकेतः । ...त्यप्रसिद्धम् । एते च पूर्वोक्ताग्र्यश्रोत्रियाद्यभावे वेदितव्याः; 'एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः । अनुकल्पस्त्वयं प्रोक्तः सदा सद्भिरगर्हितः ॥' ( मनु० ...१४७ ) इत्यभिधाय मनुना स्वस्रीयादीनामभिहितत्वात् ॥ २२० ॥

**कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः ।**
**पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसंपदः ॥ २२१ ॥**

**कर्मनिष्ठा** विहितानुष्ठानतत्पराः, **तपोनिष्ठा**स्तपःशीलाः, सभ्यावसथ्यौ ...ग्नयश्च यस्य सन्ति स **पञ्चाग्निः,** पञ्चाग्निविद्याध्यायी च, **ब्रह्मचारी** उपकुर्वाणको नैष्ठिकश्च, **पितृमातृपरा**स्तत्पूजापराः, चकारात् ज्ञाननिष्ठादयः । **ब्राह्मणाः** न क्षत्रियादयः । **श्राद्धसंपदः** श्राद्धेष्वक्षय्यफलसंपत्तिहेतवः २२१

...वर्ज्यानाह—

**रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।**
**अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः ॥ २२२ ॥**

**रोगी**[1] महारोगोपसृष्टः, हीनमतिरिक्तं वाऽङ्गं यस्यासौ **हीनातिरिक्ताङ्गः,** ...केनाक्ष्णा यो न पश्यति स **काणः,** एतस्मादेवान्धबधिरविद्धप्रजननखलतिदुश्चर्म-

टिप्प०—1 रोगी दीर्घरोगी—अप० । 2 छिन्नशिश्नः बाल० ।

पाठा०—१ तदध्यायी क. ग. २ वक्ष्यमाणक्रियासंबन्धः ख. ग. ३ ...ज्ञान A. ४ श्राद्धसंपदे (=श्राद्धस्य संपदे समृद्धये) क. ग. A. ५ वृद्धप्रजनन ख. ६ खलतिर्निष्केशशिराः खल्वाटः.

प्रभृतयो निरस्ताः । पुनर्भूरुक्तलक्षणा, तस्यां जातः **पौनर्भवः**, अव ब्रह्मचर्य एव स्खलितब्रह्मचर्यः, **कुण्डगोलौ**—'परदारेषु जायेते द्वौ कुण्डगोलकौ । पत्यौ जीवति कुण्डः स्यान्मृते भर्तरि गोलकः ॥' (मनुः ३। इत्येवमुक्तलक्षणकौ, **कुनखी** कुत्सितनखः, **श्यावदन्तकः** स्वभावा दशनः । 'एते श्राद्धे निन्दिताः' इति वक्ष्यमाणेन संबन्धः ॥ २२२ ॥

**भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः ।**
**मित्रध्रुक् पिशुनः सोमविक्रयी परिविन्दकः ॥ २२**

वेतनग्रहणेन योऽध्यापयति स **भृतकाध्यापकः**, वेतनदानेन च यो सोऽपि, **क्लीबो** नपुंसकः, असद्भिः सद्भिर्वा दोषैर्यः कन्यां दूषयति स क **दूषी**, सताऽसता वा ब्रह्महत्यादिनाभियुक्तोऽ**भिशस्तः** । **मित्रध्रुक्** मित्र परदोषसंकीर्तनशीलः **पिशुनः**, **सोमविक्रयी** यज्ञे सोमस्य विक्रेता, **विन्दकः** परिवेत्ता, ज्येष्ठेऽकृतदारेऽकृताग्निपरिग्रहे वा यः कनीयान्दार मग्निपरिग्रहं वा कुर्यात्स परिवेत्ता । ज्येष्ठस्तु परिवित्तिः । यथाह मनुः (३। —'दाराग्निहोत्रसंयोगं यः करोत्यग्रजे स्थिते । परिवेत्ता स विज्ञेयः परि पूर्वजः ॥' इति । एवं दातृ-याजकावपि—'परिवित्तिः परिवेत्ता यया विद्यते । सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ॥' इति ( ३।१७२) वचनात् ॥ २२३ ॥

**मातापितृगुरुत्यागी कुण्डाशी वृषलात्मजः ।**
**परपूर्वापतिः स्तेनः कर्मदुष्टाश्च निन्दिताः ॥ २२४**

विना कारणेन मातापितृगुरून् यस्त्यजति स **मातापितृगुरुत्यागी** भार्यासुतत्याग्यपि; 'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप् शतं कृत्वा भर्तव्या मनुरब्रवीत् ॥' ( मनुः ११।१० ) इति समाननिर्दे कुण्डस्यान्नं योऽश्नात्यसौ **कुण्डाशी**, एवं गोलकस्यापि; 'यस्तयोरन्नम कुण्डाशी प्रकीर्तितः' इति वचनात् । वृषलो निर्धर्मस्तत्सुतो **वृषलात्मजः** **पूर्वा** पुनर्भूः, तस्याः **पतिः**, अदत्तादायी **स्तेनः**, **कर्मदुष्टाः** शास्त्र कारिणः । चकारात्कितवदेवलकप्रभृतयः । एते श्राद्धे **निन्दिताः** प्रतिषि 'अग्र्याः सर्वेषु वेदेषु' ( आ. २१७ ) इत्यादिना श्राद्धयोग्यब्राह्मणप्रतिपा तद्व्यतिरिक्तानामयोग्यत्वे सिद्धेऽपि पुनः केषांचिद्रोगयादीनां प्रतिषेधवच लक्षणब्राह्मणासंभवे प्रतिषेधरहितानां प्राप्त्यर्थम् ॥ २२४ ॥

**टिप्प०—1** दातृ-याजकौ पञ्चमौ तुर्यपञ्चमौ येषां—**बाल०** । अयं न प्रायश्चित्तप्रकरणे वक्ष्यते ।

**पाठा०—१** संकुचितनखः **ख.** २ कुरुते योऽग्रजे स्थिते **क.** समानदोषश्रवणात् **ग.** ४ मातृपितृ **ग**; मातापित्रोर्गुरोः **A.**

एवं श्राद्धकालान्ब्राह्मणांश्चोक्त्वाऽधुना पार्वणप्रयोगमाह—

**निमन्त्रयेत पूर्वेद्युर्ब्राह्मणानात्मवाञ्शुचिः ।**
**तैश्चापि संयतैर्भाव्यं मनोवाक्कायकर्मभिः ॥ २२५ ॥**

पूर्वोक्तान्ब्राह्मणान् 'श्राद्धे क्षणः क्रियताम्' इति **पूर्वेद्युर्निमन्त्रयेत** प्रार्थनया क्षणमभ्युपगमयेत् । अपरेद्युर्वा; 'पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्युपस्थिते । निमन्त्रयेत त्र्यवरान्सम्यग्विप्रान् यथोदितान् ॥' इति ( ३।१८७ ) मनुस्मरणात् । **आत्मवान्** शोकोन्मादादिरहितश्चेत् दोषवान्न भवति । यद्वा,—आत्मवाञ्जितेन्द्रियो भवेत् । **शुचिः** प्रयतश्च । **तैरपि** निमन्त्रितैर्ब्राह्मणैः । **मनोवाक्कायव्यापारैः संयतैर्नियतैर्भवितव्यम्** ॥ २२५ ॥

**अपराह्णे समभ्यर्च्य स्वागतेनागतांस्तु तान् ।**
**पवित्रपाणिराचान्तानासनेषूपवेशयेत् ॥ २२६ ॥**

**अपराह्णे** उक्तलक्षणे **समभ्यर्च्य** तान्निमन्त्रितान्ब्राह्मणानाहूय **स्वागतवचनेन पूजयित्वा** कृतपादधावनानाचान्तान् कुशेष्वासनेषु **पवित्रपाणिः** पवित्रपाणीनुपवेशयेत् । यद्यप्यत्र सामान्येन 'अपराह्णे' इत्युक्तं, तथापि कुतपे प्रारभ्य तदादि पञ्चमुहूर्तेषु परिसमापनं श्रेयस्करम्; 'अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा । तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः ॥ मध्याह्ने सर्वदा यस्मान्मन्दीभवति भास्करः । तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते ॥ ... मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम् । मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते ॥' (मात्स्य. श्राद्ध. २२।८४-८५,८८ ) इति वचनात् । तथान्यदपि श्राद्धोपयोगि कुतपसंज्ञकमुक्तम्; 'मध्याह्नः खड्गपात्रं च तथा नेपालकम्बलः । रौप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥ पापं कुत्सितमित्याहुस्तस्य संतापकारिणः । अष्टावेते यतस्तस्मात्कुतपा इति विश्रुताः ॥' ( मात्स्य. २२।८६-८७ ) इति २२६

**युग्मान्दैवे यथाशक्ति पित्र्येऽयुग्मांस्तथैव च ।**
**परिस्तृते शुचौ देशे दक्षिणाप्रवणे तथा ॥ २२७ ॥**

**दैवे** आभ्युदयिके श्राद्धे **युग्मान्** समान्ब्राह्मणानुपवेशयेत् । कथम्? **यथाशक्ति** शक्तिमनतिक्रम्य । तत्र वैश्वदेवे द्वौ द्वौ, मात्रादीनां तिसृणामेकैकस्या द्वौ द्वौ, तिसृणां वा द्वौ । एवं पित्रादीनामेकैकस्य द्वौ द्वौ, त्रयाणां वा द्वौ । एवं मातामहादीनां च वर्गत्रयेऽपि वैश्वदेवं पृथक्, तन्त्रं वा । **पित्र्ये** पार्वणश्राद्धे **अयुग्मान्** विषमानुपवेशयेदिति संबद्ध्यते । एतच्च **परिस्तृते** सर्वतः प्रच्छादिते **शुचौ** गोमयादिनोपलिप्ते **दक्षिणाप्रवणे** दक्षिणतोऽवनते **देशे** कार्यम् ॥ २२७ ॥

---

**टिप्प०**—1 अप्रत्याख्येयो नियोगो निमन्त्रणम्—अप० । 2 एक-त्रि-पञ्चकादिसंख्याका अयुग्माः—अप० ।

---

**पाठा०**—१ अवसर उत्सवो वा क्षणः ग. २ नागतान्द्विजान् A. ३ विज्ञेया क. ४ पित्र्ये युग्मान् A. ५ परिश्रिते (=काण्डपटादिना परिवृते) A.

'अयुग्मान्पित्र्ये' ( श्लो. २२७ ) इति पार्वणश्राद्धाङ्गभूते वैश्वदेवेऽप्ययुग्म
इदमारभ्यते—

**द्वौ दैवे प्राक् त्रयः पित्र्य उदगेकैकमेव वा ।**
**मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥ २२८**

द्वौ दैव इति । दैवे वैश्वदेवे द्वौ ब्राह्मणौ प्राङ्मुखावुपवेश्यौ । पित्र्ये
नित्यविशेषप्रसङ्गे विशेष उच्यते—**त्रयः पित्र्ये** इति । **पित्र्ये** पित्रा
**त्रय उदङ्मुखा उपवेश्याः** । पक्षान्तरमाह—**एकैकमेव वा** । वै
**पित्र्ये च एकमेकमुपवेशयेत्** । संभवतो विकल्पः । **मातामहाना**
श्राद्धे निमन्त्रणादि । **द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वे**
पितृश्राद्धवत्कर्तव्यम् । पितृश्राद्धे मातामहश्राद्धे च वैश्वदेविकं पृथक् **तन्त्रे**
कर्तव्यम् । 'तन्त्र'शब्दः समुदायवाचकः । यदा तु द्वावेव ब्राह्मणौ लब्
तु वैश्वदेवे पात्रं प्रकल्प्य उभयत्रैकैकं ब्राह्मणं नियुञ्ज्यात् । यथाह वसिष्ठः
३०,३१)—'यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् । अन्नं पात्रे
सर्वस्य प्रकृतस्य च ॥ देवतायतने कृत्वा ततः श्राद्धं प्रवर्तयेत् । प्रास्येदन्
तु दद्याद्वा ब्रह्मचारिणे ॥' इति ॥ २२८ ॥

**पाणिप्रक्षालनं दत्त्वा विष्टरार्थं कुशानपि ।**
**आवाहयेदनुज्ञातो विश्वे देवास इत्यृचा ॥ २२९**

तदनन्तरं वैश्वदेवार्थं ब्राह्मणहस्ते **जलं दत्त्वा विष्टरार्थं कुशांश्च**
द्विगुणितानासने दक्षिणतो दत्त्वा 'विश्वान्देवानावाहयिष्ये' इति ब्राह्मणा
तैः 'आवाहय' इत्यनुज्ञातो 'विश्वे देवास आगत' ( ऋ. ४।८।१५ ) इ
'आगच्छंतु[1] महाभागाः' इत्यनेन च स्मार्तेन मन्त्रेण ताना**वाहयेत्**[2]
यज्ञोपवीतिना[3] प्रदक्षिणं च कार्यम्; 'अपसव्यं ततः कृत्वा पितॄणामप्र
( आ. २३२ ) इति पित्र्ये विशेषस्मरणात् ॥ २२९ ॥

**यवैरन्ववकीर्याथ भाजने सपवित्रके ।**
**शं नो देव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा ॥**
**या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ।**

ततो वैश्वदेवार्थब्राह्मणसमीपे भूमिं प्रादक्षिण्येन **यवैरन्ववकीर्य**

**टिप्प०**—1 आगच्छन्तु महाभागा विश्वेदेवा महाबलाः । ये ह्यत्र विहिता
सावधाना भवन्तु ते' इति सोऽयं मन्त्रः । 2 पार्वणे तु 'विश्वे देवा आगच्छ
एतच्चाह बृहस्पतिः–'इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः । नैमित्ति
कामौ कामे च धुरिलोचनौ' इति ।

**पाठा०**—१ प्राक्तु पित्र्ये त्रीन् A. २ विष्टरार्थान् A. ३ वीतिना
च ख. ४ विश्वेदेवार्थ–ख.

...सादिभाजने सपवित्रके कुशयुग्मान्तर्हिते 'शं नो देवीरभिष्टय' (ऋ. ७-५१४) इत्यनयर्चापः क्षिप्त्वा '[1]यवोऽसि धान्यराजोऽसि' इत्यादिना मन्त्रेण ...वान् ततो गन्धपुष्पाणि च क्षिप्त्वाऽनन्तरं अर्घ्यपात्रपवित्रान्तर्हिते ब्राह्मण-...ते 'या दिव्या आपः पयसा' इत्यादिना मन्त्रेण 'विश्वेदेवा इदं वोऽर्घ्यं' ...र्घ्योदकं विनिक्षिपेत् ॥ २३० ॥–

**दत्त्वोदकं गन्धमाल्यं धूपदानं सदीपकम् ॥ २३१ ॥**
**[2]तथाच्छादनदानं च करशौचार्थमम्बु च ।**

अथ करशौचार्थमुदकं दत्त्वा यथाक्रमं **गन्धपुष्पधूपदीपदानं कुर्यात्, ...थाच्छादनदानं च** । गन्धादीनां स्मृत्यन्तरोक्तो विशेषो द्रष्टव्यः—'चन्दन-...कुङ्कुमकर्पूरागरुपद्मकान्युपलेपनार्थम्' इति विष्णुनोक्तम् । पुष्पाणि च—'श्राद्धे ...त्यः प्रशस्ताः स्युर्मल्लिका श्वेतयूथिका । जलोद्भवानि सर्वाणि कुसुमानि च ...म्पकम् ॥' इत्युक्तानि । वर्ज्यानि च—'उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि ...च । पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च ॥', 'न कण्टकिजम् । [1]कण्टकिज-...मपि शुक्लं सुगन्धि यत्तद्दद्यात्, न रक्तं दद्यात्, रक्तमपि कुङ्कुमजं जलजं च ...द्यात्' (विष्णु. अ. ६६) इत्यादीनि द्रष्टव्यानि । धूपे च विशेषो विष्णुनोक्तः—...प्राण्यङ्गं सर्वं धूपार्थे न दद्यात् । घृतमधुसंयुक्तं गुग्गुलुं श्रीखण्डागरुदेवदारुसरलादि ...द्यात्' इति । दीपे च विशेषः शङ्खेनोक्तः—'घृतेन दीपो दातव्यस्तिलतैलेन वा ...नः । वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत् ॥' इति । आच्छादनं च शुभ्रं ...अहतं सदशं दद्यादिति । एतच्च सर्वं वैश्वदेवानुष्ठानकाण्डमुदङ्मुखः कुर्यात् । ...त्र्यं काण्डं दक्षिणामुखः । यथाह वृद्धशातातपः—'उदङ्मुखस्तु देवानां पितॄणां ...दक्षिणाभिमुखः । प्रदद्यात्पार्वणे सर्वं देवपूर्वं विधानतः ॥' इति ॥ २३१ ॥

**अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् ॥ २३२ ॥**
**द्विगुणांस्तु कुशान्[2]दत्त्वा ह्यु[3]शन्तस्त्वेत्यृचा पितॄन् ।**
**आवाह्य तदनुज्ञातो जपेदायन्तु नस्ततः ॥ २३३ ॥**

**ततो** वैश्वदेवकाण्डानन्तरम् । **अपसव्यं** यज्ञोपवीतं प्राचीनावीतं **कृत्वा** । ...त्र तत इति वदता काण्डानुसमयो दर्शितः । **पित्रादीनां** त्रयाणामयुग्मान्कु-...शान्द्विगुणभुग्नान् **अप्रदक्षिणं** वामतो विष्टरार्थमासनेषूदकपूर्वकं दत्त्वा पुनरुदकं ...द्यात्; 'अपः प्रदाय [4]दर्भान्द्विगुणभुग्नानासनं प्रदायापः प्रदाय' (गृ. सू. ४।७; ...५,६,७) इत्याश्वलायनस्मरणात् । एतच्चाद्यन्तयोरुदकदानं वैश्वदेवे पित्र्ये च

**टिप्प०**—1 'यवोऽसि धान्यराजोऽसि वारुणो मधुसंयुतः । निर्णुदः सर्वपापानां पवित्रमृषिभिः स्मृतम् ॥' इत्ययं मन्त्रः । 2 नायमर्धश्लोको ह्यपरार्कादृतो दृश्यते ।

**पाठा०**—१ अकण्टकिजं ख. २ कुशान्कृत्वा क. ३ उशन्त A. ४ द्विगुणभुग्नान्कुशान्दत्त्वापः–ख. ग.

प्रतिपदार्थं प्रतिपादनार्थं द्रष्टव्यम् । अथ '**पितॄन् पितामहान् प्रपिताम**
यिष्ये' इति ब्राह्मणान्पृष्ट्वा 'आवाहय' इति तैरनुज्ञातः '**उशन्तस्त्वा**
**महि**' ( ऋ. ७।६।२२।२ ) इत्यनयर्चा पित्रादीनावाह्य '**आय**
**पितरः**' इत्यादिना **मन्त्रेणोपतिष्ठेत** ॥ २३२-२३३ ॥

( अपहता इति तिलान्विकीर्य च समन्ततः । )
यवार्थास्तु तिलैः कार्याः कुर्यादर्घ्यादि पूर्ववत् ॥
दत्त्वार्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ।
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः ॥

**यवार्था** यवसाध्यानि कार्याण्य**वकिरणादीनि तिलैः कर्तव्यानि**
र्घ्यपात्रासादनाच्छादनान्तं **पूर्ववत्कुर्यात्**। तत्रायं विशेषः—तिलान् '
असुरा रक्षांसि' इत्यादिना मन्त्रेण ब्राह्मणान्परितोऽप्रदक्षिणमन्ववकीर्य
पात्रेषु त्रिष्वयुग्मकुशनिर्मितकूर्चान्तर्हितेषु 'शं नो देवीः' इति मन्त्रेणाप
'तिलोऽसि सोमदैवत्य' इत्यादिमन्त्रेण तिलान् गन्धपुष्पाणि च क्षिप्त्वा 'स्व
इति ब्राह्मणानां पुरतोऽर्घ्यपात्राणि स्थापयित्वा 'या दिव्या' इति मन्त्रान्ते '
तेऽर्घ्यं पितामहेदं तेऽर्घ्यं प्रपितामहेदं तेऽर्घ्यम्' इति ब्राह्मणानां हस्तेष्वर्घ्यं
'एकैकमुभयत्र वा' इत्यस्मिन्नपि पक्षे पात्रत्रयं कार्यम्। एवमर्घ्यं दत्त्वा **तेषां**
**संस्रवान्**ब्राह्मणहस्तगलितार्घोदकानि पितृपात्रे[2] गृहीत्वा दक्षिणाग्रं कुशस्त
निधाय तस्योपरि 'पितृभ्यः स्थानमसि' इत्यनेन मन्त्रेण तत्पात्रं न्युब्जं
कुर्यात्। तस्योपरि अर्घ्यपात्रपवित्राणि निदध्यात्। अनन्तरं गन्धपुष्पधू
च्छादनानि 'पितरयं ते गन्धः, पितरिदं ते पुष्पम्' इत्यादिना प्रयोगेण
॥ २३४-२३५ ॥

अग्नौकरणमाह द्वाभ्याम्—

अग्नौ करिष्य[3]न्नादाय पृच्छत्यन्नं घृतप्लुतम् ।
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवत् ॥ २३६
हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ।
यथालाभोपपन्नेषु रौप्येषु च[4] विशेषतः ॥ २३७ ॥

अनन्तर**मग्नौ करिष्यन्घृतप्लुतं** घृताक्तमन्नमादाय ब्राह्मणान् पृच्छे
करिष्ये' इति। 'घृत'ग्रहणं सूपशाकादिनिवृत्त्यर्थम्। ततस्तैः **कुरुष्वेत्यभ्यनु**[2]

**टिप्प०—1** मूलादर्शेष्विदं श्लोकार्धं न दृश्यते । **मिताक्षरा**ऽपरा
संमतश्च । 2 अत्रानुज्ञानं सर्वैरेव ब्राह्मणैः कुर्यात्, तथा च मनुः (
'अग्नौ कुर्यादनुज्ञातो ब्राह्मणो ब्राह्मणैः सह' इति ।

**पाठा०—१** यवार्थस्तु तिलैः कार्यः A. २ पात्रे प्रथमे गृहीत
३ करिष्य आदाय A. ४ तु A.

चीनीवीती शुद्धमन्नमुपसमाधाय मेक्षणेनादायावदानसंपदा जुहुयात् 'सोमाय तृमते स्वधा नमः, अग्नये कव्यवाहनाय स्वधा नमः' इति पिण्डपितृयज्ञ-ल्पेन **अग्नौ हुत्वा** मेक्षणमनुप्रहृत्य **हुतशेषं** मृन्मयवर्जं **यथालाभोपपन्नेषु** शेषतो **रौप्येषु** पित्रादिभाजनेषु **दद्यात्**, न वैश्वदेवभाजनेषु। **समाहितो-**न्यमनस्कः । अत्र यद्यप्यग्नावित्यविशेषेणोक्तं[1] तथाप्याहिताग्नेः सर्वाधानपक्षे पासनाग्नेरभावात् पिण्डपितृयज्ञानन्तरभाविनि पार्वणश्राद्धे विहृतदक्षिणाग्नेः[2] निधानाद्दक्षिणाग्नौ होमः; 'कर्म स्मार्तं विवाहाग्नौ' इत्यस्यापवाददर्शनात् । ाह मार्कण्डेयः—'आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः । अनाहिताग्नि-रौपसथेऽग्न्यभावे द्विजेऽप्सु वा ॥' इति । अर्धाधानपक्षे त्वौपासनाग्निसद्भावा-हिताग्नेरनाहिताग्नेरिवौपासनाग्नावेवाग्नौकरणहोमः[4] । एवमन्वष्टकादिषु त्रिष्वपि ण्डपितृयज्ञकल्पातिदेशात्[5] । काम्यादिषु चतुर्षु ब्राह्मणपाणावेव होमः । यथाहु-ह्यकाराः—'अन्वष्टक्यं च पूर्वेद्युर्मासि मास्यथ पार्वणम् । काम्यमभ्युदयेऽष्टम्या-कोद्दिष्टमथाष्टमम् ॥ चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते । पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि ॥' अस्यार्थः—हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमी-ष्टकाः' (आश्व. गृ. सू. २।४।१) इत्यष्टका विहिताः । तत्र नवम्यां यत्क्रियते न्वष्टक्यम् । सप्तम्यां तु क्रियमाणं पूर्वेद्युः । मासि मासि कृष्णपक्षे पञ्चमीप्रभृ-षु यस्यां कस्यांचित्तिथावन्वष्टक्यातिदेशेन यद्विहितम् । अमावास्यायां पिण्ड-पितृयज्ञानन्तरं यद्विहितं तत्पार्वणम् । स्वर्गादिकामानां कृत्तिकादिनक्षत्रेषु यद्वि-हितं तत्काम्यम् । अभ्युदयेषु पुत्रोत्पत्त्यादिषु तडागारामदेवताप्रतिष्ठादिषु च हितं तदाभ्युदयिकम् । अष्टम्यां अष्टका विहिताः । एकोद्दिष्टम् । अत्रैकोद्दि-ष्टशब्देन सपिण्डीकरणं लक्ष्यते[6]; तत्रैकोद्दिष्टस्यापि सद्भावात्, साक्षादेकोद्दिष्टे भावात् । अथवा,–गृह्यभाष्यकारमते साक्षादेकोद्दिष्टेऽपि पाणिहोमस्य सद्भावा-त्साक्षादेकोद्दिष्टमेव । एतेषामष्टानामाद्येषु चतुर्षु साग्निकस्याग्नौ होमः । उत्तरेषु चतुर्षु पित्र्यब्राह्मणहस्ते एव । निरग्निकस्यापि प्रमीतपितृकस्य द्विजस्य पार्वणं नित्य-मिति तस्यापि पाणावेव होमः; 'न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः । इन्दुक्षये मासि मासि प्रायश्चित्तीयते तु सः ॥' इति वचनात् । एवं काम्याभ्यु-दयिकाष्टकैकोद्दिष्टेषु पाणावेव होमः—'अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्' इति (३।२१२) मनुस्मरणात् । पाणिदत्तस्य पृथग्ग्रासप्रतिषेधं[8] उच्यते । यथाहु-र्गृह्यकाराः—'अन्नं पाणितले दत्तं पृथगश्नन्त्यबुद्धयः[9] । पितरस्तेन तृप्यन्ति शेषान्नं

टिप्प०—1 श्राद्धप्रयोगविधिः स गृह्योक्तादभिन्नः; प्रत्यभिज्ञानात्, तेन धर्मशास्त्रे-ऽपि गृह्य एवाग्निः प्रकृतः । अतोऽग्न्यर्थमित्र 'अग्निशब्दोऽगृह्यपरः प्रकृतत्वात्–अप० ।

पाठा०—१ वीतीध्ममुप–क. वीत्यग्निमुप–ख. २ विहित ख. ३ स्त्वौ-पासनेऽग्न्यभावे ग. ४ ग्नेरप्यौपासना ख. ग. ५ कल्पेनेति निदेशात् क. ६ लक्षयति क. ७ सद्भावादेको क. ८ प्रतिषेधश्च दृश्यते ग. ९ पूर्वमश्नन्त्यबु ग.

न लभन्ति ते ॥ यच्च पाणितले दत्तं यच्चान्यदुपकल्पितम् । एकीभावेन पृथग्भावो न विद्यते' इति ॥ २३६-२३७ ॥

अन्ननिवेदनम्—

**दत्त्वान्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम् ।**
**कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ॥ २३**

अन्नमोदनसूपपायसघृतादिकं भाजनेषु दत्त्वा **'पृथिवी ते पात्रं'** मन्त्रेण **पात्राभिमन्त्रणं कृत्वा 'इदं विष्णुर्विचक्रमे'** ( ऋ. १।२ इत्यनयर्चा **अन्ने द्विजाङ्गुष्ठं निवेशयेत्** । तत्र च वैश्वदेवे यज्ञोपवीती हव्यं रक्ष' इति । पित्र्ये प्राचीनावीती 'विष्णो कव्यं रक्ष' इति; 'विष्णो कव्यं च ब्रूयाद्रक्षेति वै क्रमात्' इति मनुस्मरणात् ॥ २३८ ॥

**सव्याहृतिकां गायत्रीं मधु वाता इति त्र्यृचम् ।**
**जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥ २**

अनन्तरं 'विश्वेभ्यो देवेभ्य इदमन्नं परिविष्टं परिवेक्ष्यमाणं चातृप्तेः' इ दकेन दैवे निवेद्य, तथा पित्रे 'अमुकगोत्रायामुकशर्मणे इदमन्नं परिवि क्ष्यमाणं चातृप्तेः' इति तिलोदकप्रदानेन पित्रे निवेद्य, एवं पितामहाय प्र हाय च निवेद्यानन्तरमापोशनं दत्त्वा पूर्वोक्ताभि**र्व्याहृतिभिः** स **गायत्रीं 'मधु वाता'** ( ऋ. १।५।१८ ) **इति तृचं** मधु मधु मध्विति **जप्त्वा 'यथासुखं जुषध्वम्'** इति **ब्रूयात्**; 'संकल्प्य पितृदेवेभ्यः मधुमज्जपः । श्राद्धं निवेद्यापोशानं जुषप्रैषोऽथ भोजनम् ॥' तथा—'गायत्रीं सकृद्वापि जपेद्व्याहृतिपूर्विकाम् । मधु वाता इति तृचं मध्वित्येतत्त्रिकं तथा ॥' पारस्करादिवचनात् । **भुञ्जीरंस्तेऽपि वाग्यताः** । तेऽपि ब्राह्मणा मौनिनो भुञ्जीरन् ॥ २३९ ॥

**अन्नमिष्टं हविष्यं च दद्यादक्रोधनोऽत्वरः ।**
**आ तृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं तथा ॥ २४०**

**अन्नं** भक्ष्य-भोज्य-लेह्य-चोष्य-पेयात्मकं पञ्चविधं **इष्टं** यद्ब्राह्मणाय प्रेताय रोचते । **हविष्यं** श्राद्धहविर्योग्यं व्रीहिशालियवगोधूममुद्गमाषमुन्यन्नकाल हाशल्कैलाशुण्ठीमरीचहिङ्गुगुडशर्कराकर्पूरसैन्धवसांभरपनसनालिकेरकदली गव्यपयोदधिघृतपायसमधुमांसप्रभृति स्मृत्यन्तरप्रसिद्धं वेदितव्यम् । 'ह इत्यनेनैवायोग्यस्य स्मृत्यन्तरप्रतिषिद्धस्यकोद्रवमसूरचणककुलित्थपुलाक जमाषकूष्माण्डवार्ताकबृहतीद्वयोपोदकीवंशाङ्कुरपिप्पलीवचाशतपुष्पोषधिवि माहिषचामरक्षीरदधिघृतपायसादीनां निवृत्तिः । **अक्रोधनः** क्रोधहेतुसंभवे

---

पाठा०—१ पात्रानुमन्त्रणम् A. २ कृत्वा ग. ३ वृन्ताकबृहती ४ पुष्पोषधिविड–क; पुष्पोषरबिड–ख.

त्वरोऽव्यग्रश्च। **आ तृप्तेर्दद्यादि**ति संबन्धः। 'तु'शब्दाद्यथा किंचिदुच्छिष्यते ा दद्यात्; उच्छेषणस्य दासवर्गभागधेयत्वात्, 'उच्छेषणं भूमिगतमजिह्मस्या- स्य च। दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते॥' इति ( ३।२४६ ) मनु- णात्। तथा **आ तृप्तेः पवित्राणि** पुरुषसूक्तपावमानीप्रभृतीनि **जप्त्वा** ान् ज्ञात्वा **पूर्वोक्तं जपं च** सव्याहृतिकामित्युक्तं **जपेत्**॥ २४०॥

**अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य च।**
**तदन्नं [1]विकिरेद्भूमौ दद्याच्चापः सकृत्सकृत्॥ २४१॥**

अनन्तरं सर्व[2]**मन्नमादाय 'तृप्ताः स्थ' इति** तान्पृष्ट्वा 'तृप्ताः स्म' इति तैरुक्तः **शेषम**प्यस्ति किं क्रियताम्' इति पृष्ट्वा 'इष्टैः सहोपभुज्यताम्'इत्यभ्युपगम्य **तदन्नं** ृस्थानब्राह्मणस्य पुरस्तादुच्छिष्टसंनिधौ दक्षिणाग्रदर्भान्तरितायां **भूमौ** तिलो- प्रक्षेपपूर्वकं—'ये अग्निदग्धा' इत्यनयर्चा निक्षिप्य पुनस्तिलोदकं **प्रक्षिपेत्**। नन्तरं ब्राह्मणहस्तेषु पिण्डप्रदानम्—गण्डूषार्थं **सकृत्सकृदपो दद्यात्**॥२४१॥

**सर्वमन्नमुपादाय सतिलं दक्षिणामुखः।**
**उच्छिष्टसंनिधौ पिण्डान्द[3]द्याद्वै पितृयज्ञवत्॥ २४२॥**

पिण्डपितृयज्ञकल्पातिदेशेन चरुश्रपणसद्भावे अग्नौकरणशिष्टचरुशेषेण सह **मन्नमुपादायाग्निसंनिधौ पिण्डान्दद्यात्**। तदभावे ब्राह्मणार्थं [4]कृत**मन्न- मुपादाय सतिलं** तिलमिश्रं **दक्षिणामुख** [1]**उच्छिष्टसंनिधौ** पिण्ड- **यज्ञकल्पेन पिण्डान्दद्यात्**॥ २४२॥

अक्षय्योदकदानम्—

**मातामहानामप्येवं दद्यादाचमनं ततः।**
**स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकमेव च॥ २४३॥**

**मातामहानामपि** विश्वेदेवावाहनादिपिण्डप्रदानपर्यन्तं [5]कर्मैवमेव कर्तव्यम्। न्तरं **ब्राह्मणानामाचमनं** दद्यात्। **स्वस्तिवाच्यं ततः कुर्यात्** 'स्वस्ति ' इति ब्राह्मणान्स्वस्ति वाचयेत्। तैश्च 'स्वस्ति' इत्युक्ते 'अक्षय्यमस्तु इति ब्रूत' ब्राह्मणहस्तेषू**दकदानं कुर्यात्**। तैश्चाक्षय्यमस्त्विति वक्तव्यम्॥ २४३॥

स्वधावाचनम्—

**दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत्।**
**वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम्॥२४४॥**

अनन्तरं यथाशक्ति हिरण्यरजतादि**दक्षिणां दत्त्वा** 'स्वधां वाचयिष्ये' इत्युक्त्वा

टिप्प०—1 नाग्निसंनिधावित्याशयः।

पाठा०—१ प्रकिरेत् क; A. २ सार्ववर्णिकमन्न—क. ग. ३ दद्याद्धि A. सार्ववर्णिकमन्नमुपादाय क. ५ कर्मैवं कर्तव्यं ग.

तैर्ब्राह्मणैः **'वाच्यताम्'इत्यनुज्ञातः प्रकृतेभ्यः** पित्रादिभ्यो मातामहेभ्यश्च 'स्वधोच्यताम्' इति **स्वधाकारमुदाहरेत्** ॥ २४४ ॥

**ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलम् ।**
**विश्वे देवाश्च प्रीयन्तां विप्रैश्चोक्त इदं जपेत् ॥ २**

ते च ब्राह्मणाः **'अस्तु स्वधा' इति ब्रूयुः** । तैरेवमुक्ते अनन्तरं **उदकं भूमौ सिञ्चेत्** । ततो **'विश्वे देवाः प्रीयन्ताम्' इति** ब्रूयात् अनन्तरं **णैश्च 'प्रीयन्तां** विश्वे देवा' इत्युक्ते **इदमनन्तरोच्यमानं जपेत्** ॥

ब्राह्मणप्रार्थना—

**दातारो नोऽभिवर्धन्तां वेदाः संततिरेव च ।**
**श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विति ॥**

**दातारो** हिरण्यादेः **नोऽ**स्माकं कुले**ऽभिवर्धन्तां** बहवो भवन्तु **वर्धन्तां** अध्ययनाध्यापनतदर्थज्ञानानुष्ठानद्वारेण । **संततिश्च** पुत्रपौत्रादि-म्परया । **श्रद्धा च** पित्र्ये कर्मण्यास्था **नोऽ**स्माकं **मा व्यगमत्** मा एवं 'न माङ्योगे' (पा. ६।४।७४ ) इत्यडभावः । **देयं च** हिरण्यादि बहु अस्माकं **भवत्विति** जपेदित्यर्थः ॥ २४६ ॥

**इत्युक्त्वोक्त्वा प्रिया वाचः प्रणिपत्य विसर्जयेत् ।**
**वाजे वाज इति प्रीतः पितृपूर्वं विसर्जनम् ॥ २४७ ॥**

एवं पूर्वोक्तं प्रार्थनामन्त्रं जप्त्वा, **उक्त्वा च प्रिया वाचः** '... भवचरणयुगलरजःपवित्रीकृतमस्मन्मन्दिरं शाकाद्यशनक्लेशमविगणय्य ... गृहीता वयम्' इत्येवंरूपाः । **प्रणिपत्य** प्रदक्षिणापूर्वं नमस्कृत्य **विसर्जयेत्** कथं विसर्जयेदित्याह—**'वाजे वाजेवत वाजिनो नः'** ( ऋ. ५ ... इत्यनयर्चा **पितृपूर्वं** प्रपितामहादि विश्वेदेवान्तं दर्भान्वारम्भेण ... पितरः' इति **प्रीतः** सुप्रीतमना **विसर्जनं कुर्यात्** ॥ २४७ ॥

**यस्मिंस्तु संस्रवाः पूर्वमर्घ्यपात्रे निवेशिताः ।**
**पितृपात्रं तदुत्तानं कृत्वा विप्रान्विसर्जयेत् ॥ २४**

यस्मिन्नर्घ्यपात्रे **पूर्वमर्घ्यदानान्ते संस्रवा** ब्राह्मणहस्तगलिता ...

**टिप्प०**—1 बौधायनस्तु—अस्याग्रे 'अन्नं च नो बहु भवेदतिथींश्च ... याचितारश्च नः सन्तु मा च याचिष्म कंचन' इति मन्त्र आम्नातः—अप० । बहवः पक्षा वर्तन्ते, एषां पक्षाणां स्वस्वगृह्यानुसारेण व्यवस्था, 'न गृह्यादि ... श्राद्धादावुपलभ्यते । कर्तुमिच्छन्ति ते कृत्स्नं यस्य कस्य मुनेर्मतम्' इत्यभियुक्तोक्ते ...

**पाठा०**—१ रेव नः ग. २ इत्युक्त्वा तु A. ३ विसर्जयेद् ... ४ यस्मिंस्ते संस्रवाः पूर्वं स्व; A. ५ पितृपात्रे क. ६ दानानन्तरं ते सं ...

वेशिताः स्थापितास्तदर्घ्यपात्रं न्युब्जं **तदुत्तानमूर्ध्वमुखं कृत्वा विप्रा-विसर्जयेत्**। एतच्चाशीर्मन्त्रजपादूर्ध्वं 'वाजे वाजे' इत्यतः प्राग्द्रष्टव्यम्; 'कृत्वा विसर्जयेत्' इति क्त्वाप्रत्ययश्रवणात् ॥ २४८ ॥

**प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ।**
**ब्रह्मचारी भवेत्तां तु रजनीं ब्राह्मणैः सह ॥ २४९ ॥**

अनन्तरमासीमान्तं ब्राह्मणाननुव्रज्य तैः 'गम्यताम्' इत्यनुज्ञातस्तान्**प्रदक्षि-**णीकृत्य प्रतिनिवृत्तः **पितृसेवितं** श्राद्धशिष्टमिष्टैः सह **भुञ्जीत**। नियम एवायं, न परिसंख्या। 'मांसे तु यथारुचि' इति 'द्विजकाम्यया' (आ० १७९) इत्यत्रो-क्तम्। यस्मिन्दिने श्राद्धं कृतं तत्संबन्धिनीं रात्रिं भोक्तृभिर्ब्राह्मणैः सह कर्ता ब्रह्म-चारी भवेत्। तुशब्दात् पुनर्भोजनादिरहितोऽपि भवेत्; 'दन्तधावनताम्बूलं तैलस्नानमभोजनम्। रत्यौषधपरान्नानि श्राद्धकृत् सप्त वर्जयेत् ॥ पुनर्भोजन-मध्वानं भाराध्ययनमैथुनम्। दानं प्रतिग्रहं होमं श्राद्धभुक्त्वष्ट वर्जयेत् ॥' इति स्मरणात् ॥ २४९ ॥

एवं पार्वणश्राद्धमुक्त्वेदानीं वृद्धिश्राद्धमाह—

**एवं प्रदक्षिणावृत्को वृद्धौ नान्दीमुखान्पितॄन् ।**
**यजेत दधिकर्कन्धुमिश्रान्पिण्डान्यवैः क्रियाः ॥ २५० ॥**

**वृद्धौ** पुत्रजन्मादिनिमित्ते श्राद्धे **एवमुक्तेन** प्रकारेण **पितॄन्यजेत्** पूजयेत्। विशेषमाह—**प्रदक्षिणावृत्क** इति। प्रदक्षिणा आवृत् अनुष्ठानपद्धतिर्य-स्यासौ **प्रदक्षिणावृत्कः**, प्रदक्षिणप्रचार इति यावत्। 'नान्दीमुखान्' इति पितॄणां विशेषणम्। अतश्चावाहनादौ '**नान्दीमुखान्पितॄनावाहयिष्ये** नान्दीमुखान्पितामहान्' इत्यादिप्रयोगो द्रष्टव्यः। कथं यजेतेत्याह—**दधिकर्क-न्धुमिश्रान्**। कर्कन्धुर्बदरीफलम्, **दध्ना बदरीफलैश्च मिश्रान्पिण्डा-न्दत्वा, 'यजेत'**इति संबद्ध्यते। तिलसाध्याः सर्वाः क्रिया यवैः कर्तव्याः। अत्र ब्राह्मणसंख्या दर्शितैव 'युग्मान्दैवे यथाशक्ति' (आ० २२७) इत्यत्र। प्रद-क्षिणावृत्कादिपरिगणनमन्येषामपि स्मृत्यन्तरोक्तानां विशेषधर्माणां प्रदर्शनार्थम्। यथाहाश्वलायनः—'अथाभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाः प्राङ्मुखो यज्ञो-पवीती स्यात्प्रदक्षिणमुपचारो यवैस्तिलार्थो गन्धादिदानं द्विर्द्विः ऋजुदर्भानासनं द्यात्। 'यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान्पितॄनिमाँल्लोकान्प्रीणयाहि नः स्वाहा' इति यवावपनम्। 'विश्वेदेवा इदं वोऽर्घ्यं, नान्दीमुखाः पितर इदं वोऽर्घ्यम्' इति यथालिङ्गमर्घ्यदानम्। पाणौ

टिप्प०—1 नायं नियमो भोक्तृपरः; 'श्राद्धभुक्प्रातरुत्थाय प्रकुर्याद्दन्तधावनम्। श्राद्धकर्ता न कुर्वीत दन्तप्रक्षालनं बुधः ॥' इति **प्रचेतसोक्तेः**।

पाठा०—१ प्रदक्षिणं कृत्वा A. २ कर्कन्धुमिश्राः पिण्डा यवैः A.
या० ८

होमोऽग्नये कव्यवाहनाय स्वाहा, सोमाय पितृमते स्वाहेति। 'मधु वाता॰' ( ऋ. सं. १।६।१८ ) इति त्र्यृचःस्थाने 'उपास्मै गायत' ( ऋ. सं. ६ ) इति पञ्च मधुमतीः श्रावयेत्। 'अक्षन्नमीमदन्त' ( ऋ. सं. १।६।३ ) इति आचान्तेषु भुक्ताशयान्गोमयेनोपलिप्य प्राचीनाग्रान्दर्भान्संस्तीर्य तेषु मिश्रेण भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यादित्यादि। यद्यपि 'पितॄन्' सामान्येनोक्तं, तथापि श्राद्धत्रयं क्रमश्च स्मृत्यन्तरादवगन्तव्यः। यथा तपः—'मातुः श्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम्। ततो मातामहानां वृद्धौ श्राद्धत्रयं स्मृतम्॥' इति॥ २५०॥

एकोद्दिष्टमाह—

**एकोद्दिष्टं देवहीनमेकार्घ्यैकपवित्रकम्।**
**आवाहनाग्नौकरणरहितं ह्यपसव्यवत्॥ २५१॥**

**एकोद्दिष्टं** एक उद्दिष्टो यस्मिन् श्राद्धे तदेकोद्दिष्टमिति कर्मनामधेयम्। ... 'पूर्ववदाचरेत्' (आ॰ २५४) इत्युपसंहारात्। पार्वणसकलधर्मप्राप्तौ विशेषोऽभिधीयते। **देवहीनं** देवरहितं वैश्वदेवरहितं **एकार्घ्यपात्रमेकदर्भपवित्रं**... **आवाहनाग्नौकरण**होमेन च **रहितम्। अपसव्यवत्** प्राचीनावीतिवत्... सूत्रवत्। अनेनानन्तरश्लोकाभ्युदयिके यज्ञोपवीतित्वं सूचयति॥ २५१॥

**उपतिष्ठतामक्षय्यस्थाने विप्रविसर्जने।**
**अभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्म ह॥ २५२॥**

किंच, यदुक्तं ( आ॰ २४३ )—'स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकम्॰' इति तत्राक्षय्यस्थाने **उपतिष्ठतामिति वदेत्।** विप्रविसर्जने ... 'वाजे वाजे' इति जपानन्तरं 'दर्भान्वारम्भेण अभिरम्यताम्' इति ब्रूयात्। ... च **'अभिरताः स्मः' इति ब्रूयुः। ह** इति प्रसिद्धौ। शेषं पूर्ववदिति। एतच्च मध्याह्ने कर्तव्यम्, यथाह देवलः—'पूर्वाह्णे दैविकं कर्म अपराह्णे तु ... एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्॥' इति। 'भुञ्जीत पितृसेवितम् ...' ( आ॰ २४९ ) इत्येकोद्दिष्टविशेषे निषेधो दृश्यते—'नवश्राद्धेषु यच्छिष्टं गृहे पर्युषितं च यत्। दंपत्योर्भुक्तशिष्टं च न भुञ्जीत कदाचन॥' इति। नवश्राद्धं च दर्शितम्—'प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा। नवमैकादशे चैव तन्नवश्राद्धमुच्यते॥' इति॥ २५२॥

---

**टिप्प॰**—1 श्राद्धे विघ्नप्राप्तौ **हारीतो मरीचश्च**—'श्राद्धविघ्ने द्विजातीनाम् ... प्रकीर्तितम्। अमावास्यादिनियतं माससंवत्सरादृते' इति **उशनसा**ऽप्युक्तम्—'... प्रवासी च यस्य भार्या रजस्वला। सिद्धान्नेन न कुर्वीत आमं तस्य विधीयते॥' **मृताहविस्मृतौ मरीचिः**—'श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि। ... कुर्वीत कृष्णपक्षे विशेषतः॥' इत्याह।

---

**पाठा॰**—१ दैवहीनं क;–A. २ तिष्ठतामित्यक्षय्य A.

सपिण्डीकरणमाह—

**गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।**
**अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥ २५३ ॥**
**ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् ।**
**एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥ २५४ ॥**

गन्धोदकतिलैर्युक्तं पात्रचतुष्टयं अर्घ्यसिद्ध्यर्थं पूर्वोक्तविधिना कुर्यात् । तिलैर्युक्तं ...चतुष्टयमिति वदता पितृवर्गे चत्वारो ब्राह्मणा दर्शिताः । वैश्वदेवे द्वौ ...तावेव । अत्र प्रेतपात्रोदकं किंचिदवशेषं त्रिधा विभज्य पितृपात्रेषु सेचयेत् '**ये** ...**मानाः समनसः' इति द्वाभ्यां** मन्त्राभ्याम् । **शेषं** विश्वेदेवावाहनादिवि- ...नान्तं **पूर्ववत्**पार्वण**वदाचरेत्** । प्रेतार्घ्यपात्रावशिष्टोदकेन प्रेतस्थानब्राह्मण- ...ऽर्घ्यं दत्त्वा शेषमेकोद्दिष्टवत्समापयेत् । पित्र्येषु त्रिषु पार्वणवदेव । **एतत्स-** ...**ण्डीकरण**मनन्तरोक्तमे**कोद्दिष्टं** च ततः प्रागुक्तं **स्त्रिया अपि** मातुरपि ...व्यम् । एवं वदता पार्वणे मातृश्राद्धं पृथक्कर्तव्यमित्युक्तं भवति । अत्र 'प्रेत'शब्दं ...ः प्रपितामहविषयं केचिद्वर्णयन्ति; तस्य त्रिष्वन्तर्भावेन सपिण्डीकरणोत्तर- ...ं पिण्डदानादिनिवृत्त्युपपत्तेः । समनन्तरमृतस्य[2] तूत्तरत्र पिण्डोदकदानानुवृत्तेर- ...र्भावो न युक्तः । अत एवाह यमः—'यः सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोज- ... विधिघ्नस्तेन भवति पितृहा चोपजायते ॥' इति प्रकर्षेण इतः गतो प्रेत इति ...ऽपि 'प्रेत'शब्दोपपत्तेः । 'प्रेतेभ्य एव निपृणीयात्' इति च प्रयोगदर्शनात् । ... च—'सपिण्डीकरणं श्राद्धं देवपूर्वं नियोजयेत् । पितॄनेवाशयेत्तत्र पुनः प्रेतं निर्दिशेत् ॥' इति सपिण्डीकरणोत्तरकालं प्रेतस्य श्राद्धादिप्रतिषेधो दृश्यते, स ...नन्तरमृतस्य न संभवति; अमावास्यादौ श्राद्धविधानात् । 'सपिण्डता तु पुरुषे ...मे विनिवर्तते' ( मनुः ५।६० ) इत्येतदपि वचनं चतुर्थस्य त्रिष्वन्तर्भाव एव ...ते, 'चतुर्थस्य पिण्डत्रयव्यापित्वं, पञ्चमस्य पिण्डद्वयव्यापित्वं, षष्ठस्यैकपिण्डव्या- ...त्वं, सप्तमे निवृत्तिः' इति । पितृपात्रेष्वित्येतदपि पितृमुख्यत्वादस्मिन्नेव पक्षे ...ते, नान्यथा; प्रपितामहप्रमुखत्वात् । तस्मात्पितृपात्रेषु तत्प्रेतपात्रं प्रसेचये- ...ति पितुः प्रपितामहपात्रं पित्रादिपात्रेषु प्रसेचयेदिति,–तदयुक्तम् । नह्यत्र पिण्ड- ...योजनमुत्तरत्र पिण्डदानादिनिवृत्तिप्रयोजकम्, अपि तु पितुः प्रेतत्वनिवृत्त्या ...तृत्वप्राप्त्यर्थम् । प्रेतत्वं च क्षुत्तृष्णोपजनितात्यन्तदुःखानुभवावस्था । यथाह ...र्कण्डेयः—'प्रेतलोके तु वसतिर्नृणां वर्षं प्रकीर्तिता । क्षुत्तृष्णे प्रत्यहं तत्र भवेतां ...नन्दन ॥' इति । पितृत्वप्राप्तिश्च वस्वादिश्राद्धदेवतासंबन्धः । प्राक्तनैकोद्दिष्ट- ...हितेन सपिण्डीकरणेन प्रेतत्वनिवृत्त्या पितृत्वं प्राप्नोतीत्यवगम्यते—'यस्यैतानि दत्तानि प्रेतश्राद्धानि षोडश । प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥' इति ।

पाठा॰—१ प्रसिञ्चयेत् ख. २ मृतस्य पिण्डोदक क.

तथा—'चतुरो निर्वपेत्पिण्डान्पूर्वं तेषु समावपेत्। ततःप्रभृति वै प्रेत
मान्यमश्नुते ॥' इत्यादिवचनात्। 'यः सपिण्डीकृते प्रेतम्' इत्यनेनापि
ष्टविधानेन पिण्डदाननिषेधात्पार्वणविधानेन सह पिण्डदानमवगम्यते।
त्सरिकपाक्षिकैकोद्दिष्टविधानेनापोद्यते। यदपि 'पुनः प्रेतं न निर्दिशेत्' इति
प्रेतशब्दं नोच्चारयेत्, अपि तु पितृशब्दमेवेत्येवमर्थम्। नच प्रकर्षेण
'प्रेत'शब्दः। यतो विशिष्टदुःखानुभवावस्था 'प्रेत'शब्देन रूढ्याभिधीयते
योऽपि प्रमीतमात्रे प्रेतशब्दप्रयोगः सोऽपि भूतपूर्वगत्या। 'सपिण्डता
सप्तमे विनिवर्तते' इति च प्रथमस्य पिण्डस्य चतुर्थव्यापित्वात्, द्वितीयस्य
व्यापित्वात्, तृतीयस्य षष्ठव्यापित्वात्, 'सप्तमे विनिवर्तते' इत्येवमपि
च निर्वाप्यपिण्डान्वयेन न सापिण्ड्यं; अव्यापकत्वात्, अपि त्वेकशरीरा
नेत्युक्तम्। पितृशब्दश्च प्रेतत्वनिवृत्त्या श्राद्धदेवताभूयंगतेषु वर्तत इति
ष्वित्यविरुद्धम्। तस्मादनन्तराचार्येण पूर्वपक्षद्वारेण परमतं दर्शितम्
मृतपात्रोदकस्य तत्पिण्डस्य च पितृपात्रेषु तत्पिण्डेषु च संसर्जनमिति
आचार्यस्तु परमतमेवोपन्यस्तवान्। एतच्च पितुः सपिण्डीकरणं पितामहा
प्रमीतेषु वेदितव्यम्। पितरि प्रेते पितामहे प्रपितामहे वा जीवति स
नास्त्येव; 'व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डता' इति वचनात्
मनुवचनं (३।२२१) 'पिता यस्य निवृत्तः स्याज्जीवेद्वापि पितामहः। पितुः
संकीर्त्य कीर्तयेत्प्रपितामहम् ॥' इति, तदपि शब्दप्रयोगनियमाय न
दानार्थम्। कथम्? 'म्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत्। पिता यस्य
स्याज्जीवेच्चापि पितामहः ॥' सोऽपि पूर्वेषामेव निर्वपेदित्यन्वयः। पक्षद्वये
निर्वपेदित्याह—'पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहम्' (मनुः ३।२२
इत्याद्यन्तग्रहणेन सर्वत्र पितृभ्यः, पितामहेभ्यः, प्रपितामहेभ्य इत्येवं प्र
पुनः कदाचिदपि पितामहस्य प्रपितामहस्य वाऽऽदित्वं वृद्धप्रपितामहस्य
ऽन्तत्वम्। अतश्च पितादिशब्दानां संबन्धिवचनत्वात् म्रियमाणेऽपि पित
पितृभ्यः पितामहेभ्यः प्रपितामहेभ्य इति, पितामहे म्रियमाणे पितामहस्य
पितामहेभ्यः प्रपितामहेभ्य इति। अतश्च पिण्डपितृयज्ञे 'शुन्धन्तां पितरः'
मन्त्राणामूहो न भविष्यति। यदपि विष्णुवचनं 'यस्य पिता प्रेतः स्यात्स
निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यात्' इति, तस्यायमर्थः—पितामहे
माणे प्रेते च पितरि पितुरेकं पिण्डमेकोद्दिष्टविधानेन निधाय पितुर्यः पिता
पराभ्यां द्वाभ्यां दद्यात्। पितामहस्त्वात्मनः प्रपितामहः संप्रदानभूत
एवेति। प्रपितामहाय ततः पराभ्यां द्वाभ्यां च दद्यादिति। शब्दप्रयोग
पूर्वोक्त एव। एवं गोब्राह्मणादिहतस्यापि सपिण्डीकरणाभावो वेदितव्यः।

पाठा०—१ समानयेत् क., समापयेत् ख. २ एतच्च ख. ३ वि
पपद्यते क. विधानायोपपाद्यते ख. ४ अव्यापित्वादपि तु क. ५
मुपगतेषु ख. ६ पितृशब्द.

त्यायनः—'ब्राह्मणादिहते ताते पतिते संगवर्जिते। व्युत्क्रमाच्च मृते देयं येभ्य ददात्यसौ ॥' इति। गोब्राह्मणहतस्य पितुः सपिण्डीकरणसंभवे तमुल्लंघ्य पितादिभ्यः पार्वणविधानमनुपपन्नमिति सपिण्डीकरणाभावोऽवगम्यते। स्मृत्यन्तरेऽपि—'ये नराः संततिच्छिन्ना नास्ति तेषां सपिण्डता। न चैतैः सह कर्तव्यान्येकोद्दिष्टानि षोडश ॥' इति। मातुः सपिण्डनादौ गोत्रे विप्रतिपत्तिः; भर्तृगोत्रेण पितृगोत्रेण वा दातव्यमिति; उभयत्र वचनदर्शनात्। 'स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे। स्वामिगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया ॥' इत्यादिभर्तृगोत्रविषयं वचनम्, 'पितृगोत्रं समुत्सृज्य न कुर्याद्भर्तृगोत्रतः। जन्मन्येव विपत्तौ च नारीणां पैतृकं कुलम् ॥' इत्यादिपितृगोत्रविषयम्। एवं विप्रतिपत्तावासुरादिविवाहेषु पुत्रिकाकरणे च पितृगोत्रमेव; तत्र तत्र विशेषवचनात् दाननिवृत्तेश्च। ब्राह्मादिविवाहेषु व्रीहियववत् बृहद्रथन्तरसामवत् विकल्प एव। अत्र च—'येनास्य पितरो याता येन याताः पितामहाः। तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥' इति (मनुः ४।१७८) वचनात् वंशपरम्परायातसमाचरणेन व्यवस्था। एवंविधविषयव्यतिरेकेणास्य वचनस्य विषयान्तराभावात्। यत्र पुनः शास्त्रतो न व्यवस्था, नाप्याचारस्तत्र 'आत्मनस्तुष्टिरेव वा' इति वचनादात्मनस्तुष्टिरेव व्यवस्थापिका, यथा—'गर्भाष्टमेऽष्टमे वाब्दे' (आ० १४) इति। मातुः सपिण्डीकरणेऽपि विरुद्धानि वाक्यानि दृश्यन्ते, तत्र 'पितामह्यादिभिः सार्धं सपिण्डीकरणं स्मृतम्'। तथा भर्त्रापि भार्यायाः स्वमात्रादिभिः सह सपिण्डीकरणं कर्तव्यमिति पैठीनसिराह—'अपुत्रायां[1] मृतायां तु पतिः कुर्यात्सपिण्डताम्। श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत् ॥' इति। पत्न्या सह सपिण्डीकरणं यम आह—'पत्न्या चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः। सापि हि तेनैक्यं गता मन्त्राहुतिव्रतैः ॥' इति। उशनसा तु मातामहेन सह सपिण्डीकरणमुक्तम्—'पितुः पितामहे यद्वत्पूर्णे संवत्सरे सुतैः। मातुर्मातामहे तद्वदेषा कार्या सपिण्डता ॥' तथा—'पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः। माता मातामहे तद्वदित्याह भगवाञ्छिवः ॥' इत्येवंविधेषु वचनेषु सत्सु अपुत्रायां भार्यायां प्रमीतायां भर्ता स्वमात्रैव सापिण्ड्यं कुर्यात्। अन्वारोहणे तु पुत्रः पित्रैव मातुः सापिण्ड्यं कुर्यात्। आसुरादिविवाहोत्पन्नः पुत्रिकासुतश्च मातामहेनैव। ब्राह्मादिविवाहोत्पन्नः पित्रा मातामहेन पितामह्या वा विकल्पेन कुर्यात्। तत्रापि यदि नियतो वंशसमाचारस्तदानीं तथैव कुर्यात्। वंशसमाचारोऽप्यनियतश्चेत्तदा 'आत्मनस्तुष्टिरेव च' इति यथारुचि कुर्यात्। तत्र च येन केनापि मातुः सापिण्ड्येऽपि यत्रान्वष्टकादिषु मातृश्राद्धं पृथग्विहितम्,—'अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि। मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह ॥' इति,

टिप्प०—1 भर्तुरभावे एतत् यदाह पैठीनसिः—'अपुत्रायाम्' इति पठति—प०।

पाठा०—१ पिण्डदानादौ. २ विरुद्धानीव ख. ३ मृता यदि तेनैक्यं क.

तत्र पितामह्यादिभिरेव पार्वणश्राद्धं कर्तव्यम्; 'अन्यत्र पतिना सह' इति प पिण्ड्ये तदंशभागित्वात्। मातामहसापिण्ड्ये तदंशभागित्वात्तेनैव सह। शातातपः—'एकमूर्तित्वमायाति सपिण्डीकरणे कृते। पत्नी पतिपितॄणां च दंशेन भागिनी ॥' इति। एवं सति मातामहेन मातुः सापिण्ड्ये मातामह पितृश्राद्धवन्नित्यमेव। पत्न्या पितामह्या वा मातुः सापिण्ड्ये मातामहश्रा नित्यम्। कृते अभ्युदयः, अकृते न प्रत्यवाय इति निर्णयः ॥ २५३-२५

**अर्वाक्सपिण्डीकरणं यस्य संवत्सराद्भवेत्।**
**तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजे ॥ २५५**

**संवत्सरादर्वाक् सपिण्डीकरणं यस्य** कृतं तस्य तदुद्देशेन प्रति प्रतिमासं वा यावत्संवत्सरं शक्त्यनुसारेणान्नमुदकुम्भसहितं ब्राह्मणाय दद्यात् ॥' 'अर्वाक्संवत्सरात्' इति वदता सपिण्डीकरणं संवत्सरे पूर्णे प्रागेवेति दर्शितम्। हाश्वलायनः (१।३।११)—'अथ सपिण्डीकरणं संवत्सरान्ते द्वादशाहे वा' कात्यायनोऽप्याह (३।३।११)—'ततः संवत्सरे पूर्णे सपिण्डीकरणं त्रिप यदहर्वा वृद्धिरापद्यते' इति। द्वादशाहे, त्रिपक्षे, वृद्धिप्राप्तौ, संवत्सरे वेति च पक्षा दर्शिताः। तत्र द्वादशाहे पितुः सपिण्डीकरणं साग्निकेन कार्यम्; स करणं विना पिण्डपितृयज्ञासिद्धेः, 'साग्निकस्तु यदा कर्ता प्रेतो वाऽप्यग्निमान् द्वादशाहे तदा कार्यं सपिण्डीकरणं पितुः ॥' इति वचनात्। निरग्निकस्तु वृद्धिप्राप्तौ संवत्सरे वा कुर्यात्। यदा प्राक्संवत्सरात्सपिण्डीकरणं तदा श्राद्धानि कृत्वा सपिण्डीकरणं कार्यम्, उत सपिण्डीकरणं कृत्वा स्वस्वकाले कर्तव्यानीति संशयः; उभयथा वचनदर्शनात्, 'श्राद्धानि षोडशादत्त्वा नैव त्सपिण्डताम्। श्राद्धानि षोडशापाद्य विदधीत सपिण्डताम् ॥' इति। षोड द्धानि च—'द्वादशाहे त्रिपक्षे च षण्मासे मासि चाब्दिके। श्राद्धानि षोड संस्मृतानि मनीषिभिः ॥' इति दर्शितानि। तथा—'यस्यापि वत्सराद पिण्डीकरणं भवेत्। मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम् ॥' इति सपिण्डीकरणं कृत्वा स्वकाल एवैतानि कर्तव्यानीति प्रथमः कल्पः; अप्रा त्वेन प्रागनधिकारात्। यदपि वचनं—'षोडशश्राद्धानि कृत्वैव सपिण्डीकर त्सरात्प्रागपि कर्तव्यम्' इति, सोऽयमापत्कल्पः। यदा त्वापत्कल्पत्वेन प्रा ण्डीकरणात् प्रेतश्राद्धानि करोति, तदैकोद्दिष्टविधानेन कुर्यात्। यदा तु कल्पेन स्वकाल एव करोति तदाब्दिकं श्राद्धं यो यथा करोति पार्वणमेको तथा मासिकानि कुर्यात्; 'सपिण्डीकरणादर्वाक्कुर्वन् श्राद्धानि षोडश। ए विधानेन कुर्यात्सर्वाणि तानि तु ॥ सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा

**टिप्प०—1** 'दद्यात् संवत्सरं द्विजे' इति पाठे सप्तमी यथार्था, श्राद्धे ना हवनीयार्थत्वात्—**अप०।**

**पाठा०—१** दद्याद्वर्षं द्विजन्मने A. **२** करणं भवेत् ख. **३** द्यते तदे

त्यर्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि ॥' इति स्मरणात्। एतच्च प्रेतश्रा-सहितं सपिण्डीकरणं संविभक्तधनेषु बहुषु भ्रातृषु सत्स्वप्येकेनैव कृतेनालं, न र्वैः कर्तव्यम्; 'नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश। एकेनैव तु र्याणि संविभक्तधनेष्वपि ॥' इति स्मरणात्। इदं च प्रेतश्राद्धसहितं सपिण्डी-रणं असंन्यासिनां पुत्रादिभिर्नियमेन कर्तव्यम्, प्रेतत्वविमोक्षार्थत्वात् संन्या-नां तु न कर्तव्यम्। [1]यथाह्योशनाः—'एकोद्दिष्टं न कुर्वीत यतीनां चैव दा। अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ॥ सपिण्डीकरणं तेषां न कर्तव्यं तादिभिः। त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ॥' इति। पुत्रासंनिधाने येन गोत्रादिना दाहसंस्कारः कृतस्तेनैवादशाहान्तं तत्प्रेतकर्म कर्तव्यम्—'असगोत्रः गोत्रो वा स्त्री दद्याद्यदि वा पुमान्। प्रथमेऽहनि यो दद्यात्स दशाहं समाप-त् ॥' इति स्मरणात्। शूद्राणामप्येतत्कर्तव्यसमन्त्रकं द्वादशेऽह्नि—'एवं सपि-ण्डीकरणं मन्त्रवर्ज्यं शूद्राणां द्वादशेऽह्नि' इति विष्णुस्मरणात्। सपिण्डीकरणादूर्ध्वं वत्सरिकपार्वणादीनि पुत्रस्य नियमेनैव कार्याणि, अन्येषामनियतानि ॥ २५५ ॥

एकोद्दिष्टकालानाह—

**मृतेऽहनि [2]प्रकर्तव्यं प्रतिमासं तु वत्सरम्।**
**प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥ २५६ ॥**

मृतेऽहनि प्रतिमासं संवत्सरं यावदेकोद्दिष्टं कार्यम्। सपिण्डीकरणादूर्ध्वं प्रति-वत्सरमेकोद्दिष्टमेव कर्तव्यम्। आद्यं सर्वैकोद्दिष्टप्रकृतिभूतमेकोद्दिष्टमेकादशेऽहनि। दिवसापरिज्ञाने तच्छ्रवणदिवसे अमावास्यायां वा कार्यम्। 'अपरिज्ञाते मृते-ने अमावास्यायां श्रवणदिवसे वा' इति स्मरणात्। अमावास्यायामिति गमन-माससंबन्धिन्यमावास्यायाम्—'[1]प्रवासदिवसे देयं तन्मासेन्दुक्षयेऽपि वा' इति स्मरणात्। 'मृतेऽहनि' इत्यत्राहिताग्नेर्विशेषो जातूकर्ण्येनोक्तः—'ऊर्ध्वं त्रिपक्षाद्य-च्छ्राद्धं मृतेऽहन्येव तद्भवेत्। अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मनः ॥' इति। त्रिपक्षादर्वाग्यत्प्रेतकर्म तद्दाहदिवसादारभ्याहिताग्नेः कार्यम्, त्रिपक्षादूर्ध्वं यच्छ्राद्धं तन्मरणदिवस एवेत्यर्थः। अनाहिताग्नेस्तु सर्वं मृताह एव। 'आद्यमेका-दशेऽहनि' इत्याशौचोपलक्षणमिति केचित्; 'शुचिना कर्म कर्तव्यं' इति शुद्धेरङ्ग-त्वात्, 'अथाशौचापगमे' (२११) इति सामान्येन सर्वेषां वर्णानामुपक्रम्यैको-द्दिष्टस्य विष्णुना विहितत्वाच्च। तदयुक्तम्,—'एकादशेऽह्नि यच्छ्राद्धं तत्सामान्य-मुदाहृतम्। चतुर्णामपि वर्णानां सूतकं च पृथक्पृथक् ॥' इति पैठीनसिस्मरण-विरोधात्, 'आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि। कर्तुस्तात्कालिकी शुद्धि-रशुद्धः पुनरेव सः ॥' इति शङ्खवचनविरोधाच्च। सामान्योपक्रमं विष्णुवचनं

टिप्प०—1 यस्मिन्मासि गृहाच्चलितस्तन्माससंबन्धिन्याम्—बाल०।

पाठा०—१ यथाह शङ्खः. २ तु कर्तव्यं क. ग. मृताहनि तु A. ३ इ-त्याशौचोप क.

दशाहाशौचविषयमपि घटते । 'प्रतिसंवत्सरं चैवम्' इति प्रतिसंवत्सरं न्येकोद्दिष्टमुपदिष्टं योगीश्वरेण । तथा च स्मृत्यन्तरम्—'वर्षे वर्षे तु मातापित्रोस्तु सत्क्रिया । अदैवं भोजयेच्छ्राद्धं पिण्डमेकं च निर्वपेत् ॥' यमोऽप्याह—'सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः । मातापित्रोः पृथक् द्दिष्टं मृतेऽहनि ॥' इति । व्यासस्तु पार्वणं प्रतिषेधति—'एकोद्दिष्टं पार्वणं कुरुते नरः । अकृतं तद्विजानीयात्स भवेत्पितृघातकः ॥' इति । पार्वणमाह—'आपाद्य च सपिण्डत्वमौरसो विधिवत्सुतः । कुर्वीत दर्श मातापित्रोः क्षयेऽहनि ॥' इति । शातातपोऽप्याह—'सपिण्डीकरणं कृत्वा त्पार्वणवत्सदा । प्रतिसंवत्सरं विद्वांश्छागलेयोदितो विधिः ॥' इति । एवं व तिपत्तौ दाक्षिणात्या ह्येवं व्यवस्थामाहुः—'औरसक्षेत्रजाभ्यां मातापित्रोः पार्वणमेव कर्तव्यं, दत्तकादिभिरेकोद्दिष्टम्' इति; जातूकर्ण्यवचनात् पार्वणेनैव विधिना क्षेत्रजौरसौ । कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश ॥' तदसत्; नह्यत्र क्षयाहवचनमस्ति, अपि तु प्रत्यब्दमिति । सन्ति च क्ष तिरिक्तानि प्रत्यब्दश्राद्धान्यक्षय्यतृतीयामाघीवैशाखीप्रभृतिषु । अतो न विषयपार्वणैकोद्दिष्टव्यवस्थापनयाऽलम् । यत्तु पराशरवचनम्—'पितुर्गत त्वमौरसस्य त्रिपौरुषम् । सर्वत्रानेक[1]गोत्राणामेकस्यैव मृतेऽहनि ॥ इति, व्यवस्थापकम् । यस्मादयमर्थः—देवत्वं गतस्य सपिण्डीकृतस्य पितुः सेन त्रिपौरुषं पार्वणं कार्यम्, अनेकगोत्राणां भिन्नगोत्राणां मातुलादीनां क्ष यच्छ्राद्धं तदेकस्यैवैकोद्दिष्टमेवेति । किंच, 'सपिण्डीकरणादूर्ध्वमप्येकोद्दिष्ट व्यमौरसेनापि इत्युक्तं पैठीनसिना—'एकोद्दिष्टं हि कर्तव्यमौरसेन मृतेऽह सपिण्डीकरणादूर्ध्वं मातापित्रोर्न पार्वणम् ॥' इति ॥ उदीच्याः पुनरेवं व्य पयन्ति—अमावास्यायां भाद्रपदकृष्णपक्षे त्वामृताहे पार्वणम्, अन्यत्र एकोद्दिष्टमेवेति; 'अमावास्याक्षयो यस्य प्रेतपक्षेऽथवा पुनः । पार्वणं तत्र नैकोद्दिष्टं कदाचन ॥' इति स्मरणात् । तदपि नाद्रियन्ते वृद्धाः[2] । अनिश्चि नानेन वचनेन निश्चितमूलानां बहूनां क्षयाहमात्रपार्वणविषयाणां वचनाना स्याप्रेतपक्षमृताहविषयत्वेनातिसंकोच[3]स्यायुक्तत्वात्, सामान्यवचनानर्थक्या हि सामान्यवचनस्य विशेषवचनेनोपसंहारः, यत्र सामान्यविशेषसंबन्ध वचनद्वयमर्थवत् । यथा 'सप्तदश सामिधेनीरनुब्रूयात्' इत्यनारभ्याधीत तिमात्रविषयस्य सप्तदशवाक्य[4]स्य सामिधेनीलक्षणद्वारा संबन्धेनार्थवतो विन्दादिप्रकरणपठितेन साप्तदश्यवाक्येन मित्रविन्दाद्यधिकारापूर्वसंबन्ध र्थवता मित्रविन्दादिप्रकरणं उपसंहारः । इह तु द्वयोर्मृताहमात्रविषयत्वा

टिप्प०—1 द्व्यामुष्यायणदत्तकादीनामित्याशयः । 2 अत्र 'वृद्धा' इत्यने दरः सूचितः—बाल० ।

पाठा०—१ पृथक्कुर्यात् ख. २ जानीयाद्भवेच्च ख. ३ संकोचः त्युक्तत्वात् ग. ४ सप्तदशपदस्य क.

इति । अतोऽत्र पाक्षिकैकोद्दिष्टनिवृत्तिफलकतया पार्वणनियमविधानं युक्तम् । एकोद्दिष्टवचनानां मातापितृक्षयाहविषयत्वेन पार्वणवचनानां च तदन्यक्षयाहविषयत्वेन व्यवस्था युक्ता; उभयत्रापि मातापितृसुतग्रहणस्य विद्यमानत्वात्—सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः । मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि ॥' इति, तथा—'आपाद्य सहपिण्डत्वमौरसो विधिवत्सुतः । कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनि ॥' इति । यदपि कैश्चिदुच्यते—मातापित्रोः क्षयाहे साग्निः पार्वणं कुर्यान्निरग्निरेकोद्दिष्ट'मिति,—'वर्षे वर्षे सुतः कुर्यात्पार्वणं योऽग्निमान्द्विजः । पित्रोरनग्निमान्धीर एकोद्दिष्टं मृतेऽहनि ॥' इति सुमन्तुस्मरणादिति,—तदपि प्रतिपक्षत्वादुपेक्षणीयम्; वह्निमन्तस्तु ये विप्रा ये चैकाग्नय एव च । तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणम् ॥' इति स्मरणात् । तत्रैवं निर्णयः—संन्यासिनां क्षयाहे सुतेन पार्वणमेव कर्तव्यम्; 'एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह । सपिण्डीकरणाभावात्पार्वणं तस्य सर्वदा ॥' इति प्रचेतःस्मरणात् । अमावास्याक्षयाहे प्रेतपक्षक्षयाहे च पार्वणमेव; 'अमावास्याक्षयो यस्य प्रेतपक्षेऽथवा पुनः' (लघुशंख.१७) इत्यादिवचनस्योक्तरीत्या नियमपरत्वात् । अन्यत्र क्षयाहे पार्वणैकोद्दिष्टयोर्व्रीहियववद्विकल्प एव । तथापि वंशसमाचारव्यवस्थायां सत्यां व्यवस्थिते, सत्यामैच्छिक इत्यलमतिप्रसंगेन ॥ २५६ ॥

नित्यश्राद्धव्यतिरिक्तसर्वश्राद्धशेषमिदमभिधीयते—

**पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।**
**प्रक्षिपेत्सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत् ॥ २५७ ॥**

पूर्वदत्तानां पिण्डानां पिण्डस्य वा प्रतिपत्तिरियम्[2]–**गवे अजाय ब्राह्मणाय** वा तदर्थिने **पिण्डान्दद्यात्** । अग्नावगाधे **जलेऽपि वा प्रक्षिपेत्** । किंच **सत्सु विप्रेषु** भोजनदेशावस्थितेषु **द्विजोच्छिष्टं न मार्जयेन्**नोद्वासयेत् ॥ २५७ ॥

भोज्यविशेषेण फलविशेषमाह—

**हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ।**
**मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥ २५८ ॥**
**ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।**
**मासवृद्ध्याभितृप्यन्ति दत्तैरिह पितामहाः ॥ २५९ ॥**

**हविष्यं**[3] हविर्योग्यं तिलव्रीह्यादि । यथाह मनुः ( ३।२६७ )—'तिलैर्व्रीहि-

---

टिप्प०—1 अपिण्डकश्राद्धोपलक्षणमेतत्–इति बाल० । 2 फलशून्यकमङ्गविशेषः प्रतिपत्तिः, तथा च श्राद्धादौ दत्तद्रव्यस्य जलादौ निक्षेपः प्रतिपत्तिः । 3 हविष्यं चोक्तं ...ना ( ३।२५७ )–'मुन्यन्नानि पयःसोमो मांसं यच्चानुपस्कृतम् । अक्षारलवणं चैव ...त्या हविरुच्यते' इति ।

यवैर्माषैरद्भिर्मूलफलेन वा । दत्तेन मासं तृप्यन्ति विधिवत्पितरो ... इति । तदन्नं हविष्यान्नं तेन मासं पितरस्तृप्यन्तीत्यनागतेनान्वयः । ... गव्यपयःसिद्धेन **संवत्सरम्**; 'संवत्सरं तु गव्येन पयसा पायसेन ... (मनुः ३।२७१) स्मरणात् । मत्स्यो भक्ष्यः पाठीनादिस्तस्येदं मात्स्यं ... **हरिण**स्ताम्रमृगः । **एणः** कृष्णः; 'एणः कृष्णमृगो ज्ञेयस्ताम्रो हरिण ... इत्यायुर्वेदस्मरणात् । तस्येदं हारिणकम् । अविरुरभ्रस्तत्संबन्धि ... शकुनिस्तित्तिरिस्तत्संबन्धि **शाकुनम्**, छागोऽजस्तदीयं **छागम्**, ... मृगस्तन्मांसं **पार्षतम्** । एणः कृष्णमृगस्तत्पिशितमैणम्, रुरुः शंबरः ... **रौरवम्**, वराह आरण्यसूकरस्तज्जं **वाराहम्** । शशस्येदं **शाशम्** ... मांसैः पितृभ्यो 'दत्तैर्हविष्यान्नेन वै मासम्' इत्युक्तत्वात्तत ऊर्ध्वं यथाक्रम ... मासवृद्ध्या पितरस्तृप्यन्ति ॥ २५८–२५९ ॥

**खड्गामिषं महाशल्कं मधु मुन्यन्नमेव वा ।**
**लौहामिषं महाशाकं मांसं वार्ध्रीणसस्य च ॥ २६०॥**
**यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ।**
**तथा वर्षात्रयोदश्यां मघासु च विशेषतः ॥ २६१॥**

किंच, **खड्गो** गण्डकस्तस्य मांसम्, **महाशल्को** मत्स्यभेदः, **मधु** ... कम् । **मुन्यन्नं** सर्वमारण्यं नीवारादि, लोहो रक्तश्छागस्तदामिषं लौहा... षम् । **महाशाकं** कालशाकम्[1] । **वार्ध्रीणसो** वृद्धः श्वेतच्छागः–'त्रि... स्त्विन्द्रियक्षीणं वृद्धं श्वेतमजापतिम् । वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः ... कर्मणि ॥' इति याज्ञिकप्रसिद्धः । त्रिपिबः पिबतः कर्णौ जिह्वा च ... स्पृशति सः, त्रिभिः पिबतीति त्रिपिबः, तस्य वार्ध्रीणसस्य मांसम् । ... **गयास्थश्च** यत्किंचिच्छाकादिकमपि गयास्थो ददाति । चशब्दाद्गङ्गाद्वारादयः च—'गङ्गाद्वारे प्रयागे च नैमिषे पुष्करेऽर्बुदे । संनिहत्यां गयायां च ... व्यतां व्रजेत् ॥', 'आनन्त्यमश्नुते' इति अनन्तफलहेतुत्वं प्राप्नोति । 'आ... श्नुते' इति प्रत्येकमभिसंबध्यते । तथा वर्षात्रयोदश्यां भाद्रपदकृष्णत्रयोदश्यां ... षतो मघायुक्तायां यत्किंचिद्दीयते तत्सर्वमानन्त्यमश्नुत इति गतेन ...

टिप्प०—1 कश्मीरप्रदेशे प्रसिद्धम् । 2 वर्षासु या त्रयोदशी, ... तस्यां तासु च यत् पितृभ्यो ददाति तदपि पितृलक्षणस्य फलस्यानन्त्यमश्नुते । ... प्रोष्ठपद्यपरपक्षे या त्रयोदशी याश्च मघाः ता एव गृह्यन्ते—इत्यपरार्कः । ... 'मघासु' इति बहुवचनं त्ववान्तरनक्षत्राभिप्रायम् ।

पाठा०—१ फलैस्तथा ग. २ मासं प्रीयन्ते ख. ३ अनागत... ४ शाकुनं भक्ष्यपक्षिसंबन्धि क. ख. ५ च A. ६ कालशाकं A. ७ ... सस्य क. ग; A. ८ वर्षास्वेवं त्रयोदश्याम् A. ९ श्वेतं वृद्धमजा... १० आनन्त्यफलं ख.

अत्र यद्यपि मुन्यन्नमांसमध्वादीनि सर्ववर्णानां सामान्येन श्राद्धे योग्यानि दर्शितानि, तथापि पुलस्त्योक्ता व्यवस्थादरणीया ।—'मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः । मधुप्रदानं शूद्रस्य सर्वेषां चाविरोधि यत् ॥' इति । अस्यार्थः—मुन्यन्नं नीवारादि यच्छ्राद्धयोग्यमुक्तं तद्ब्राह्मणस्य प्रधानं समग्रफलदम्, यच्च हरिणमांसमुक्तं तत्क्षत्रियवैश्ययोः प्रधानम् । यत्क्षौद्रमुक्तं तच्छूद्रस्य । एतत्त्रितयव्यतिरिक्तं यदविरोधि यदप्रतिषिद्धं वास्तुकादि, यच्च विहितं हविष्यं कालशाकादि, तत्सर्वेषां समग्रफलदमिति ॥ २६०–२६१ ॥

तिथिविशेषात्फलविशेषमाह—

**कन्यां कन्यावेदिनश्च पशून्[1]वै सत्सुतानपि ।**
**द्यूतं कृषिं[2] वणिज्यां च द्विशफैकशफांस्तथा ॥ २६२ ॥**
**ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरूप्ये सकुप्यके ।**
**ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥ २६३ ॥**
**प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।**
**शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ॥ २६४ ॥**

**कन्यां** रूपलक्षणशीलवतीम्, **कन्यावेदिनो** जामातरो बुद्धिरूपलक्षणशीलसम्पन्नाः । **पशवः** क्षुद्रा अजादयः, **सत्सुताः** सन्मार्गवर्तिनः[3], **द्यूतं** द्यूतविजयः, **कृषिः** कृषिफलम्, **वणिज्या** वाणिज्यलाभः, **द्विशफा** गवादयः, **एकशफा** अश्वादयः, **ब्रह्मवर्चस्विनः पुत्राः** वेदाध्ययनतदर्थानुष्ठानजनितं तेजो ब्रह्मवर्चसं तद्वन्तः, **स्वर्णरूप्ये** हेमरजते, तद्व्यतिरिक्तं त्रपुसीसकादि **कुप्यकम्**, **ज्ञातिश्रैष्ठ्यं** जातिषूत्कृष्टत्वम्, **सर्वकामाः** काम्यन्त इति कामाः स्वर्गपुत्रप[illegible]दयः, एतानि कन्यादीनि चतुर्दशफलानि कृष्णपक्षप्रतिपत्प्रभृतिष्वमावास्यापर्यन्तासु चतुर्दशीवर्जितासु चतुर्दशसु तिथिषु **श्राद्धदो** यथाक्रम**माप्नोति** । **ये** अत्र **शस्त्रहतास्तेभ्यः** कृष्णचतुर्दश्यामेकोद्दिष्टविधिना **श्राद्धं दद्यात्**, **यदि** [illegible]णादिहता न भवन्ति; 'समत्वमागतस्यापि पितुः शस्त्रहतस्य वै । एकोद्दिष्टं सुतैः कार्यं चतुर्दश्यां महालये ॥' इति स्मरणात् । समत्वमागतस्य सपिण्डीकृतस्य पितुर्महालये भाद्रपदकृष्णचतुर्दश्यां शस्त्रहतस्यैव[1] श्राद्धं नान्यस्येति नियम्यते, न पुनः शस्त्रहतस्य चतुर्दश्यामेवेति । अतश्च क्षयाहादौ शस्त्रहतस्यापि यथाप्राप्तमेव श्राद्धम् । नच भाद्रपदकृष्णपक्ष एवायं विधिरिति मन्तव्यम्; 'प्रौष्ठपद्यामपरपक्षे मासि मासि चैवम्' इति शौनकस्मरणात् ॥ २६२–२६४ ॥

टिप्प०—1 अत्र 'शस्त्रहत'ग्रहणं शास्त्रान्तरोक्तदुर्मरणप्रदर्शनार्थम्—अप० ।

पाठा०—१ पशून्मुख्यान्सुतानपि A. २ कृषिं च वाणिज्यं द्विशफैकशफांस्तथा ख; A. ३ सन्मार्गगाः ग.

नक्षत्रविशेषात्फलविशेषमाह–

**स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा ।**
**पुत्रं [1]श्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभम् ॥**
**प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतीनपि ।**
**अरोगित्वं यशो वीतशोकतां परमां गतिम् ॥ २**
**धनं [3]वेदान्भिषक्सिद्धिं कुप्यं गा अप्यजाविकम् ।**
**अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति ॥ २६**
**कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान् ।**
**आस्तिकः [4]श्रद्धानश्च व्यपेतमदमत्सरः ॥ २६८**

**कृत्तिकामादिं**[1] कृत्वा **भरण्यन्तं** प्रतिनक्षत्रं **यः श्राद्धं** ददा यथाक्रमं **स्वर्गादीनायुःपर्यन्तान्कामानवाप्नोति**, यद्यास्तिकः श्र व्यपेतमदमत्सरो भवति । **आस्तिको** विश्वासवान्, **श्रद्धान** आद ययुक्तः, **व्यपेतमदमत्सरः** मदो गर्वः, मत्सर ईर्ष्या, ताभ्यां रहितः निरतिशयसुखम् । **अपत्यम**विशेषेण । **ओज** आत्मशक्त्यतिशयः निर्भयत्वम् । **क्षेत्रं** फलवत् । **बलं** शारीरम्, **पुत्रो** गुणवान्, **श्रैष्ठ्यं** **सौभाग्यं** जनप्रियता । **समृद्धि**र्धनादेः, **मुख्यता** अग्र्यता, **शुभं** **प्रवृत्तचक्रता** अप्रतिहताज्ञता, **वाणिज्यप्रभृतयो** वाणिज्य गोरक्षाः, **अरोगित्वं** अना[6]मययोगित्वम्, **यशः** प्रख्यातिः, **वीतशो** इष्टवियोगादिजनितदुःखाभावः, **परमा गति**र्ब्रह्मलोकप्राप्तिः, **धनं** **वेदा** ऋग्वेदादयः, **भिषक्सिद्धि**रौषधफलावाप्तिः, **कुप्यं** सुवर्ण रिक्तं ताम्रादि, **गावः** प्रसिद्धाः, **अजाश्च अवयश्च अश्वाश्च**, आ जीवनम् ॥ २६५–२६८ ॥

'मासवृद्ध्याभितृप्यन्ति दत्तैरिह पितामहाः' ( आ० २५९ ) इत्यनेन श्राद्धेन तृप्तिर्भवतीत्युक्तं,–तदनुपपन्नम्; प्रातिस्विकशुभाशुभकर्मवशे नरकादिगतानां मनुष्याणां पुत्रादिभिर्दत्तैरन्नपानादिभिस्तृप्त्यसंभवात् । स्वयमात्मनाप्यनीशाः कथं स्वर्गादिफलं प्रयच्छन्तीत्यत आह–

**वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।**
**प्रीणयन्ति मनुष्याणां पितॄञ्श्राद्धेन तर्पिताः ॥**

**टिप्प०—1** अत्र श्रौतक्रमानुसारं विवक्षा ।

**पाठा०—१** ससौभाग्यं क; सुसौभाग्यं A. २ सुतान् A. ३ ४ श्रद्धानश्चेत् ख; श्चाप्यपेतमदमत्सरः A. ५ स्वर्गोऽतिशयसु ६ अनामयित्वं ग. ७ शुभाशुभफलकर्मविशेषेण ग. ८ श्राद्धेषु

**आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।**
**प्रयच्छन्ति तथा राज्यं प्रीता[1] नृणां पितामहाः ॥ २७० ॥**

नह्यत्र देवदत्तादय एव श्राद्धकर्मणि संप्रदानभूताः पित्रादिशब्दैरुच्यन्ते अधिष्ठातृवस्वादिदेवतासहिता एव । यथा देवदत्तादिशब्दैर्न शरीरमात्रं, नाप्यात्मात्रं, किंतु शरीरविशिष्टा आत्मान उच्यन्ते, एवमधिष्ठातृदेवतासहिता एव दत्तादयः पित्रादिशब्दैरुच्यन्ते । अतश्चाधिष्ठातृदेवता वस्वादयः पुत्रादिभिर्दन्नपानादिना तृप्ताः सन्तस्तानपि देवदत्तादींस्तर्पयन्ति, कर्तृंश्च पुत्रादीन्फलेन जयन्ति । यथा माता गर्भपोषणायान्यदत्तेन दोहदान्नपानादिना स्वयमुपभुक्तेन सती स्वजठरगतमप्यपत्यं तर्पयति, दोहदान्नादिप्रदायिनश्च प्रत्युपकारफलेन जयति तद्वद्वसवो रुद्रा अदितिसुताः आदित्या एव ये पितरः पितृ-पितामहतामहशब्दवाच्याः न केवलं देवदत्तादय एव श्राद्धदेवताः श्राद्धकर्मणि संप्रभूताः किंतु मनुष्याणां पितॄन्देवदत्तादीन्स्वयं श्राद्धेन तर्पितास्तर्पयन्ति ज्ञानयतिशययोगेन । किंच न केवलं पितॄंस्तर्पयन्ति अपि तु श्राद्धकारिभ्यः **आयुः** **ां धनं विद्यां स्वर्गं मोक्षं सुखानि राज्यं च** । चकारात्तत्र तत्र ोक्तमन्यदपि फलं स्वयं **प्रीताः पितामहा**[1] **वस्वादयः प्रयच्छन्तीति** ६९–२७० ॥

इति श्राद्धप्रकरणम् ।

---

## अथ गणपतिकल्पप्रकरणम् ११

ष्टादृष्टफलसाधनानि कर्माण्यभिहितान्यप्यभिधास्यन्ते च तेषां स्वरूपनिः फलसाधनत्वं चाविघ्नेन भवतीत्यविघ्नार्थं कर्म विधास्यन् विघ्नस्य कारककहेतूनाह—

**विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः ।**
**गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा ॥ २७१ ॥**

**विनायकः कर्मविघ्नसिद्ध्यर्थ**मित्यादिनोभयविघ्नहेतुपरिज्ञानाद्विघ्नस्य ावपरिपालनायोपस्थितस्य प्रध्वंसाय वा प्रेक्षापूर्वकारिणः प्रवर्तन्ते; रोगस्येयविधहेतुपरिज्ञानात् । **विनायको** विघ्नेश्वरः पुरुषार्थसाधनानां **कर्मणां** **प्रसिद्ध्यर्थं** स्वरूपफलसाधनत्वविघा[3]तसिद्धये **विनियोजितः** नियुक्तः **ण ब्रह्मणा** चकाराद्विष्णुना **च गणानां** पुष्पदन्तप्रभृतीना**माधिपत्ये** ये ॥ २७१ ॥

---

टिप्प०—1 अत्र च 'पितामह'ग्रहणं पित्राद्युपलक्षणम्'–अप० ।

---

पाठा०—१ नृणां प्रीताः A. २ गर्भधारणपोषणाय ग. ३ विधानये क.

एवं विघ्नस्य कारकहेतुमुक्त्वा ज्ञापकहेतुप्रदर्शनार्थमाह—

तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत।
स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ॥ २७
काषायवाससश्चैव क्रव्यादांश्चाधिरोहति।
अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ॥ २७३ ॥
व्रजन्नपि तथात्मानं मन्यतेऽनुगतं परैः।

**तेन** विनायकेनो**पसृष्टो** गृहीतो **यस्तस्य लक्षणानि** ज्ञापकानि **निबोधत** जानीध्वं हे मुनयः! पुनर्मुनीनां प्रत्यवमर्शः शान्तिप्रकरणप्रारम्भे। **स्वप्ने** स्वप्नावस्थायां **जलमत्यर्थमवगाहते** स्रोतसा ह्रियते निमज्जति। **मुण्डितशिरसः** पुरुषान्**पश्यति**। **काषायवाससो** रक्तनीलादिवसनांश्च। **क्रव्यादा** नाम मांसाशिनः पक्षिणः गृध्रादीन्मृगांश्च व्याघ्रादीनधिरोहति। तथाऽ**न्त्यजै**श्चण्डालादिभिः **गर्दभैः** खरै**रुष्ट्रैः** क्रमेलकैः **सह**ैकत्राव**स्तिष्ठति**। **व्रजन्**गच्छन्नात्मानं **परैः** शत्रुभिः पृष्ठतो धावद्भिरनुगम्यमानं **मन्यते** ॥ २७२–२७३ ॥

एवं स्वप्नदर्शनान्युक्त्वा प्रत्यक्षलिङ्गान्याह—

विमना विफलारम्भः संसीदत्यनिमित्ततः ॥ २७४
तेनोपसृष्टो लभते न राज्यं राजनन्दनः।
कुमारी च न भर्तारमपत्यं गर्भमङ्गना ॥ २७५ ॥
आचार्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा।
वणिग्लाभं न चाप्नोति कृषिं चापि कृषीवलः॥ २

**विमना** विक्षिप्तचित्तः, **विफलारम्भः** विफला आरम्भा यस्य स तथा न क्वचित्फलमाप्नोति। **संसीदत्यनिमित्ततः** विना कारणेन दीनमनस्कः। **राजनन्दनो** राजकुले जातः श्रुतशौर्यधैर्यादिगुणयुक्तोऽपि **राज्यं** न ल। **कुमारी** रूपलक्षणाभिजनादिसंपन्नापीप्सितं **भर्तारम्**, **अङ्गना** अपत्यम्, ऋतुमती **गर्भम्**, अध्ययनतदर्थज्ञाने सत्यपि **आचार्यत्वं** श्रोत्रियः, विनयाचारादियुक्तोऽपि **शिष्योऽध्ययनं** श्रवणं **वा**, 'न लभते' इति संबध्यते। **वणिक्** वाणिज्योपजीवी तत्र कुशलोऽपि धान्यादिक्रयविक्रये **लाभम्**। **कृषीवलः** कर्षकस्तत्राभियुक्तोऽपि **कृषिफलं नाप्नोति**। यया वृत्त्या जीवति स तत्र निष्फलारम्भश्चेत्तेनोपसृष्टो वेदितव्यः ॥ २७४

**टिप्प०**—1 इदं स्वप्नविषयकम्। 'विमना' इत्यादिश्लोकैर्जागरणेऽपि तद्

**पाठा०**—१ व्रजन्तं च तथा A. २ अनुमन्यते ग. ३ राष्ट्रं A.

एवं कारकज्ञापकहेतूनभिधाय विघ्नोपशान्त्यर्थं कर्मविधानमाह—

**स्नपनं तस्य कर्तव्यं पुण्येऽह्नि विधिपूर्वकम् ।**

**तस्य** विनायकोपसृष्टस्याऽनागतविनायकोपसर्गपरिहारार्थिनो वा **स्नपन**मभि-
षेचनं कर्तव्यम् । **पुण्ये** स्वानुकूलनक्षत्रादियुक्ते । **अह्नि** दिवसे न रात्रौ ।
**विधिपूर्वकं** शास्त्रोक्ते**तिकर्तव्यतासहितम्** ॥

स्नपनविधिमाह—

**गौरसर्षपकल्केन साज्येनोत्सादितस्य च ॥ २७७ ॥**
**सर्वौषधैः सर्वगन्धैर्विलिप्तशिरसस्तथा ।**
**भद्रासनोपविष्टस्य स्वस्ति वाच्या द्विजाः शुभाः ॥२७८॥**

**गौरसर्षपकल्केन** सिद्धार्थपिष्टेन **साज्येन** घृतेलोलीकृतेनो**त्सादित**-
स्योद्वर्तिताङ्गस्य **तथा सर्वौषधैः** प्रियङ्गुनागकेसरादिभिः **सर्वगन्धैश्च**न्दना-
कस्तूरिकादिभिर्विलिप्तशिरसो वक्ष्यमाण**भद्रासनोपविष्टस्य** पुरुषस्य **द्विजा**
ब्राह्मणाः **शुभाः** श्रुताध्ययनवृत्तसंपन्नाः शोभनाकृतयश्चत्वारः 'अस्य **स्वस्ति**
भवन्तो ब्रुवन्तु' इति **वाच्याः** । अस्मिन्समये गृह्योक्तमार्गेण पुण्याहवाचनं कुर्या-
दित्यर्थः ॥ २७७–२७८ ॥

**अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ।**
**मृत्तिकां रोचनां गन्धान्गुग्गुलं चाऽप्सु निक्षिपेत् ॥२७९॥**
**या आहृता ह्येकवर्णैश्चतुर्भिः कलशैर्ह्रदात् ।**
**चर्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं ततः ॥ २८० ॥**

किंच, **अश्वस्थानगजस्थानवल्मीकसरित्संगमा**शोष्य**ह्रदेभ्य** आहृतां
पञ्चविधां **मृदं गोरोचनं गन्धान्** चन्दनकुङ्कुमागुरुप्रभृतीन् **गुग्गुलं** च
**स्वप्सु विनिक्षिपेत्** । **या** आप **आहृता एकवर्णैः** समानवर्णै**श्चतुर्भिः**
कु**म्भैर**व्रणास्फुटिताकालकैः **ह्रदाद**शोष्यात् संगमाद्वा । **ततश्चानडुहे**
चर्मणि **रक्ते** लोहितवर्णे उत्तरलोमनि प्राचीनग्रीवे **भद्रं** मनोरम**मासनं** श्रीपर्णी-
निर्मितं **स्थाप्यम्** । तत उक्तोदकमृत्तिकागन्धादिसहितांश्चूतादिपल्लवोपशोभि-
ताननान्स्रग्दामवेष्टितकण्ठांश्चन्दनचर्चितांन्नवाहतवस्त्रविभूषितांश्चतसृषु पूर्वादि-
दिक्षु स्थापयित्वा शुचौ सुलिप्ते स्थण्डिले रचितपञ्चवर्णस्वस्तिके लोहितमानडुहं
चर्मोत्तरलोम प्राचीनग्रीवमास्तीर्य तस्योपरि श्वेतवस्त्रप्रच्छादितमासनं स्थापयेदित्ये-
तद्भद्रासनम् । तस्मिन्नुपविष्टस्य स्वस्तिवाच्या द्विजाः ॥ २७९–२८० ॥

**सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ।**
**तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ॥ २८१ ॥**

किंच, स्वस्तिवाचनानन्तरं जीवत्पतिपुत्राभिः रूपगुणशालिनीभिः सुवेषाभिः

पाठा०—१ स्नापनं A. २ घृतमिश्रेण. ३ च विनिक्षिपेत् A. ४ कुम्भैः
रव्रणा. ख. ५ शोभितान् नानास्रग्दाम ख. ६ ताननाहत ग.

कृतमङ्गलं पूर्वदिग्देशावस्थितं कलशमादायानेन मन्त्रेणाभिषिञ्चेद्गुरुः । क्षमनेकशक्तिकं **शतधारं** बहुप्रवाहमृषिभिर्मन्वादिभिर्यदुदकं पा कृतं उत्पादितं **तेनो**दकेन **त्वां** विनायकोपसृष्टं विनायकोपसर्गशान्त्यै षिञ्चामि । **पावमान्य**श्चैता आपस्त्वां **पुनन्तु** ॥ २८१ ॥

**भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः ।**
**भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥ २८२**

तदनन्तरं दक्षिणदेशावस्थितं द्वितीयं कलशमादायानेन मन्त्रेणा **भगं** कल्याणं **ते** तुभ्यं **वरुणो राजा भगं सूर्यो** भगं **बृहस्पतिः** न्द्रश्च **वायुश्च भगं सप्तर्षयश्च ददु**रिति ॥ २८२ ॥

**यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि ।**
**ललाटे कर्णयोरक्ष्णोरापस्तद् घ्नन्तु सर्वदा ॥ २८**

ततस्तृतीयं कलशमादायानेन मन्त्रेणाभिषिञ्चेत् । **ते** तव केशेषु यद्दौ मकल्याणं **सीमन्ते** मूर्धनि च **ललाटे कर्णयोरक्ष्णोश्च** तत्सर्वमा **घ्नन्तु** उपशमयन्तु **सर्वदा** इति ॥ २८३ ॥

**स्नातस्य सार्षपं तैलं स्रुवेणौदुम्बरेण तु ।**
**जुहुयान्मूर्धनि कुशान्सव्येन परिगृह्य च ॥ २८४**

ततश्चतुर्थं कलशमादाय पूर्वोक्तैस्त्रिभिर्मन्त्रैरभिषिञ्चेत् । 'सर्वमन्त्रैश्चतुर्थ मन्त्रलिङ्गात् । उक्तेन प्रकारेण कृताभिषेकस्य **मूर्धनि** सव्यपाणिगृहीतकुश र्हिते **सार्षपं तैलं उदुम्बर**वृक्षोद्भवेन **स्रुवेण** वक्ष्यमाणैर्मन्त्रैर्जुहुया । चार्यः ॥ २८४ ॥

**मितश्च संमितश्चैव तथा शा[3]लकटङ्कटौ ।**
**कूष्माण्डो[4] राजपुत्रश्चेत्यन्ते स्वाहासमन्वितैः ॥ २८**
**नामभिर्बलिमन्त्रैश्च नमस्कारसमन्वितैः ।**

**मितसंमितादिभिर्वि[1]नायकस्य नामभिः स्वाहाकारान्तैः** प्रणवनैः 'जुहुयात्' इति गतेन संबन्धः । स्वाहाकारयोगाच्चतुर्थी विभक्तिः । अतश्च ताय स्वाहा, ॐसंमिताय स्वाहा, ॐशालाय स्वाहा, ॐकटङ्कटाय

**टिप्प०**—1 ते च **बैजवापगृह्ये** चत्वार उक्ताः-'चत्वारः खलु भवन्ति,-मितश्च, संमितश्च, शालकङ्कटश्च, कूश्माण्डराजपुत्रश्चेति । एतैरुप ब्राह्मणाः स्वाध्यायवन्तोऽपि आचार्यत्वं न लभन्ते । कुमार्यो लक्षणवत्यो लभन्ते । स्त्रीणामाचारवतीनामप्यपत्यानि म्रियन्ते इति ।

**पाठा०**—१ ते सदा A. २ स्मृतिलिङ्गात् ग. ३ शालकट ४ कूष्मा( श्मा ? )ण्डराज A.

ष्माण्डाय स्वाहा, ॐराजपुत्राय स्वाहेति षण्मन्त्रा भवन्ति। अनन्तरं लौकिके स्थालीपाकविधिना चरुं श्रपयित्वा एतैरेव षड्भिर्मन्त्रैस्तस्मिन्नेवाग्नौ हुत्वा पं बलिमन्त्रैरिन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानब्रह्मानन्तानां नामभिर्यन्तैर्नमोन्वितैस्तेभ्यो बलिं दद्यात् ॥ २८५ ॥–

अनन्तरं किं कुर्यादित्याह[1]—

**दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य सर्वतः ॥ २८६ ॥**
**कृताकृतांस्तण्डुलांश्च पललौदनमेव च ।**
**मत्स्यान्पक्कांस्तथैवामान्[2]मांसमेतावदेव तु ॥ २८७ ॥**
**पुष्पं चित्रं सुगन्धं च सुरां च [3]त्रिविधामपि ।**
**मूलकं पूरिकां[4]पूपांस्तथैवोण्डेरकस्रजः ॥ २८८ ॥**
**दध्यन्नं पायसं चैव गुडपिष्टं[5] समोदकम् ।**
**[6]एतान्सर्वान्समाहृत्य भूमौ कृत्वा ततः शिरः ॥ २८९ ॥**
**विनायकस्य जननीमुपतिष्ठेत्ततो[7]ऽम्बिकाम् ।**

कृताकृताद्युपहारद्रव्यजातं विनायकस्योपाहृत्य संनिधानात्तज्जनन्याश्च शिरसा गत्वा—'तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती[1] प्रचोदयात्' न मन्त्रेण विनायकं,—'सुभगायै विद्महे काममालिन्यै धीमहि । तन्नो गौरी दयात्' इत्यनेनाम्बिकां च नमस्कुर्यात् । तत उपहारशेष**मास्तीर्णकुशे निधाय चतुष्पथे निदध्यात्**—'बलिं गृह्णन्त्विमे देवा आदित्या वसवः । मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥ असुरा यातुधानाश्च [8]पिशाचोरगमातरः । शाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ॥ जृम्भकाः गन्धर्वा मायाविद्याधरा[9] नराः । दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ॥ जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः । मा विघ्नो मा च मे पापं गन्तु परिपन्थिनः ॥ सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः ॥' इत्येत्रैः ॥ **कृताकृताः** सकृदवहतास्तण्डुलाः, पललं[10] तिलपिष्टं तन्मिश्रनः **पललौदनः**, **मत्स्याः पक्का अपक्काश्च**, **मांसमेतावदेव** पक्कं च, **पुष्पं चित्रं** रक्तपीतादिनानावर्णम् । चन्दनादि सुगन्धिद्रव्यम्, **सुरा** त्रिविधा गौडी माध्वी पैष्टी च, **मूलकं** कन्दाकारो भक्ष्यविशेषः, **पूरिका** प्रसिद्धा, **पूपो**ऽस्नेहपक्वो गोधूमविकारः । **उण्डेरकस्रजः** उण्डेरकाः[2] पिष्टादिम-

टिप्प०—1 'दन्तिः' इति कश्चित् । 2 उण्डेरकाः क्षुद्रापूपा इति कौस्तुभे ।

पाठा०—१ दित्याह दद्यादित्यादिचतुर्भिः ग. २ स्तथा चामान् A. ३ विविधा A. ४ पुष्पं तथैव ख; तथैवोण्डेरकस्रजम् A. ५ गुडमिश्रं A. ६ अपरार्कासंमतमिदमर्धम्. ७ त्तदाऽम्बिकाम् A. ८ पिशाचा मातरोरगाः ९ माला विद्या क; नागा विद्याधरा. १० पललं पिष्टं क.

ग्यस्ताः प्रोताः स्रजः। **दध्यन्नं** दधिमिश्रमन्नं। **पायसं** पय शृतम्। गुडमिश्रं शाल्यादिपिष्टम्। **मोदकाः** लड्डुकाः। **अनन्तरं विनायकं** **भीमस्वामम्बिकां** वक्ष्यमाणमन्त्रेण**ोपतिष्ठेत्** ॥ २८६–२८९ ॥

किं कृत्वेत्याह—

**दूर्वासर्षपपुष्पाणां दत्त्वार्घ्यं पूर्णमञ्जलिम् ॥ २९०॥**

सकुसुमोदकेनार्घ्यं दत्त्वा दूर्वासर्षपपुष्पाणां पूर्णमञ्जलिं 'उपतिष्ठेत्' इति गतेन संबन्धः ॥ २९० ॥

उपस्थानमन्त्रमाह—

**रूपं देहि यशो देहि भगं भवति देहि मे ।**
**पुत्रान्देहि धनं देहि सर्वकामांश्च देहि मे ॥ २९१॥**
**ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।**
**ब्राह्मणान्भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि ॥ २९२ ॥**

विनायकोपस्थाने 'भगवन्' इत्यूहः। ततोऽभिषेकानन्तरं यजमानः शुक्लाम्ब**रधरः** शुक्लमाल्यानुलेपनो **ब्राह्मणान्भोजयेत्**। यथाशक्ति **गुरवे** श्रु[तवृ]त्तसंपन्नाय विनायकस्नपनविधिज्ञाय **वस्त्रयुग्मं दद्यात्**। 'अपि'शब्दात् दक्षिणां विनायकोद्देशेन ब्राह्मणेभ्यश्च। तत्रायं प्रयोगक्रमः—चतुर्भिः सार्धमुक्तलक्षणो गुरुर्मन्त्रज्ञो भद्रासनरचनानन्तरं तत्संनिधौ विनायकं तद्वं चोक्तमन्त्राभ्यां गन्धपुष्पादिभिः समभ्यर्च्य चरुं श्रपयित्वा भद्रासने यजमानस्य पुण्याहवाचनं कृत्वा, चतुर्भिः कलशैरभिषिच्य, सार्षपं तैलं हुत्वा, चरुहोमं विधायाभिषेकशालायां चतुर्दिक्षु इन्द्रादिलोकपालेभ्यो दद्यात्। यजमानस्तु स्नानानन्तरं शुक्लमाल्याम्बरधरो गुरुणा सहितो विनायकाम्बिकाभ्यामुपहारं दत्त्वा शिरसा भूमिं नत्वा कुसुमोदकेनार्घ्यं दत्त्वा दूर्वा पुष्पाञ्जलिं च दत्त्वा विनायकमम्बिकां चोपतिष्ठेत्। गुरुरुपहारशेषं कृत्वा चत्वरे निदध्यात्। अनन्तरं वस्त्रयुग्मं दक्षिणां ब्राह्मणेभ्यो भो[जनं च] दद्यादिति ॥ २९१–२९२ ॥

इति विनायकस्नपनविधिः।

अस्यैव विनायकस्नपनस्योक्तोपसंहारेण संयोगान्तरं दर्शयितुमाह—

**एवं विनायकं पूज्य ग्रहांश्चैव विधानतः ।**
**कर्मणां फलमाप्नोति श्रियं चाप्नोत्यनुत्तमाम् ॥ २९[३] ॥**

एवमुक्तेन प्रकारेण विनायकं संपूज्य कर्मणां फलमविघ्नेनाप्नोति

टिप्प०—1 'तत्प्रोताः' इत्यपि पाठः तदुक्तवर्तुलैश्चतुरस्रैश्च दीर्घैः पि[ष्टनि]र्मिताः स्रज उच्यन्ते-बाल० ।

पाठा०—१ क्षैरेयी. २ जयं देहि ग. ३ भगवन् क. ग. ४ [विनायकोप]स्थाने भवतीत्यूहः ग. ५ श्रियमाप्नोत्यनुत्तमाम् A.

रः । [1]संयोगान्तरमाह—**श्रियं चोत्कृष्टतमामाप्नोतीति** । श्रीकामश्चा- विधानेन विनायकं पूजयेदित्यर्थः । आदित्यादिग्रहपीडाशान्तिकामस्य त्यादिकामस्य च ग्रहपूजादिकल्पं विधास्यन् ग्रहपूजामुपक्षिपति—**ग्रहांश्चैव** ानत इति । ग्रहानादित्यादीन्वक्ष्यमाणेन **विधिना संपूज्य कर्मणां** द्धिमाप्नोति श्रियं चाप्नोति इति ॥ २९३ ॥

नित्यकाम्यसंयोगानाह—

**आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा ।**
**महागणपतेश्चैव कुर्वन्सिद्धिमवाप्नुयात् ॥ २९४ ॥**

**आदित्यस्य** भगवतः **सदा** प्रतिदिवसं रक्तचन्दनकुङ्कुमकुसुमादिभिः **पूजां** स्कन्दस्य **महागणपतेश्च** नित्यं पूजां **कुर्वन् सिद्धिं** मोक्षमात्मज्ञान- प्राप्नोतीति नित्यसंयोगः । आदित्यस्कन्दगणपतीनामन्यतमस्य सर्वेषां वा कं स्वर्णनिर्मितं रूप्यनिर्मितं वा कुर्वन् **सिद्धिमभिलषितामाप्नोति** । तथा ी चेति काम्यसंयोगः ॥ २९४ ॥

इति महागणपतिकल्पः ।

---

## अथ ग्रहशान्तिप्रकरणम् १२

तद्'एवं विनायकं पूज्य ग्रहांश्चैव विधानतः । कर्मणां फलमाप्नोति श्रियं चाप्नो- तमाम्' (आ०२९३) इत्यनेन ग्रहपूजायाः कर्मणामविघ्नेन फलसिद्धिः श्रीश्च इत्युक्तम् । इदानीं फलान्तराण्याह—

**श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् ।**
**वृष्ट्यायुःपुष्टिकामो वा तथैवाऽभिचरन्नपि ॥ २९५ ॥**

**श्रीकाम** इति पूर्वोक्तस्यानुवादः, **शान्तिकाम** आपदुपशान्तिकामः, दिवृद्ध्यर्थं प्रवर्षणं **वृष्टिः, आयुर**पमृत्युजयेन दीर्घकालजीवनम् । **पुष्टिर-** शरीरत्वं, एताः कामयत इति **वृष्ट्यायुःपुष्टिकामः** । एते श्रीकामादयो ं ग्रहपूजां समाचरेयुः । तथाऽभिचरन्नपि अदृष्टोपायेन परपीडा अभिचार- ामश्च **ग्रहयज्ञं समाचरेत्** ॥ २९५ ॥

हानाह—

**सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः ।**
**शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः ॥ २९६ ॥**

ते सूर्यादयो नव ग्रहाः ॥ २९६ ॥

---

टिप्प०—1 संयोगः=फलम्, तेनात्र फलान्तरमित्याशयः । 2 तिलकं=प्रतिमाम् ।

---

पाठा०—१ ग्रहपूजां लक्षयति ग.

'ग्रहाः पूज्याः' इत्युक्तं, किं कृत्वेत्याह—

**ताम्रकात्स्फटिकाद्रक्तचन्दनात्स्वर्णकादुभौ ।**
**राजतादयसः सीसात्कांस्यात्कार्या ग्रहाः क्रमात् ॥**
**स्ववर्णैर्वा पटे लेख्या गन्धै[1]र्मण्डलकेषु वा ।**

सूर्यादीनां मूर्तयस्ताम्रादिभिर्यथाक्रमं कार्याः । तदलाभे **स्ववर्णैर्वा** लेख्याः, मण्डलकेषु वा । **गन्धैः** रक्तचन्दनादिभिर्**यथावर्णं लेख्या**न्वयः । द्विभुजत्वादिविशेषस्तु मत्स्यपुराणोक्तो द्रष्टव्यः । यथा—'पद्मास कर: पद्मगर्भसमद्युतिः । स[2]प्ताश्वःसप्तरज्जुश्च द्विभुजः स्यात्सदा रविः श्वेताम्बरधरो दशाश्वः श्वेतभूषणः । गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः । चतुर्भुजो मेषगमो वरदः सुतः ॥ पीतमाल्याम्बरधरः कर्णिकारसमद्युतिः । खड्गचर्मगदापाणिः वरदो बुधः ॥ देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ । दण्डिनौ वरदौ साक्षसूत्रकमण्डलू ॥ इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः । बाणबाण कर्तव्योऽर्कसुतः सदा ॥ करालवदनः खड्गचर्मशूली वरप्रदः । नीलः[3] स्थश्च राहुरत्र प्रशस्यते ॥ धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः । गता नित्यं केतवः स्युर्वरप्रदाः ॥ सर्वे किरीटिनः कार्या ग्रहा लोकहिता स्वाङ्गुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदा' इति ॥ एतेषां स्थापनदेशश्च तत्रैवो 'मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु । उत्तरेण गुरुं विद्याद्बुधं पू तु ॥ पूर्वेण भार्गवं विद्यात्सोमं दक्षिणपूर्वके । पश्चिमेन शनिं विद्याद्राहुं दक्षिणे ॥ पश्चिमोत्तरतः केतुं स्थाप्या वै शुक्लतण्डुलैः ॥' इति ॥ २९७

पूजाविधिमाह—

**यथावर्ण प्रदेयानि वासांसि कुसुमानि च ॥ २९८**
**गन्धाश्च बलयश्चैव धूपो देयश्च गुग्गुलुः ।**
**कर्तव्या मन्त्रवन्तश्च चरवः प्रतिदैवतम् ॥ २९९**

**यथावर्णं** यस्य ग्रहस्य यो वर्णस्तद्वर्णानि **वस्त्रगन्धपुष्पाणि** देयानि । **बलयश्च धूपश्च** सर्वेभ्यो **गुग्गुलु**र्देयः । चरवश्च प्रतिदैवतमग्निप्रतिष्ठा धानादिपूर्वकं 'चतुरश्चतुरो मुष्टीन्निर्वपति', 'अमुष्मै त्वा जुष्टं निर्वपामी' धिना कार्याः । अनन्तरं सुसमिद्धेऽग्नौविध्माधानाद्याघारान्तं कर्म कृत्वा[4] ग्रहोद्देशेन यथाक्रमं वक्ष्यमाणमन्त्रैर्वक्ष्यमाणाः समिधो वक्ष्यमाणप्रकारे **चरवो होतव्याः** ॥ २९८–२९९ ॥

---

पाठा०—१ गन्धमण्डलकेषु वा A. २ सप्तारथसंस्थश्च. क. सिंहासनः. क. ग. ४ ऽग्न्यावन्वाधानादनन्तरं कर्म कृत्वा क.

मन्त्रानाह—

**आकृष्णेन इमं देवा अग्निर्मूर्धा दिवः ककुत् ।**
**उद्बुध्यस्वेति च ऋचो यथासंख्यं प्रकीर्तिताः ॥ ३०० ॥**
**बृहस्पते अतियदर्यस्तथैवान्नात्परिस्रुतः ।**
**शं नो देवीस्तथा काण्डात्केतुं कृण्वन्निमांस्तथा ॥३०१॥**

'**आकृष्णेन** रजसा वर्तमान' (ऋ. १।३।६।२) इत्यादयो नव मन्त्राः **क्रममादित्यादीनां वेदितव्याः** ॥ ३००–३०१ ॥

इदानीं समिध आह—

**अर्कः पलाशः खदिर अपामार्गोऽथ पिप्पलः ।**
**उदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥ ३०२ ॥**

**अर्कपलाशादयो** यथाक्रमं सूर्यादीनां **समिधो** भवन्ति । ताश्चार्द्रा अभग्नाः सत्वचः प्रादेशमात्राः कर्तव्याः ॥ ३०२ ॥

**एकैकस्य त्वष्टशतमष्टाविंशतिरेव वा ।**
**होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वा युताः ॥ ३०३ ॥**

किंच, आदित्यादीनामेकैकस्याष्टशतसंख्या अष्टाविंशतिसंख्या वा यथाविभवं **मधुना सर्पिषा दध्ना क्षीरेण वा** युता अक्ता अर्कादिसमिधो होतव्याः ॥ ३०३ ॥

इदानीं भोजनान्याह—

**गुडौदनं पायसं च हविष्यं क्षीरषाष्टिकम् ।**
**दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च ॥ ३०४ ॥**
**दद्याद्ग्रहक्रमादेवं द्विजेभ्यो भोजनं बुधः ।**
**शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकम् ॥ ३०५ ॥**

गुडमिश्र ओदनो **गुडौदनः, पायसं** पायसान्नम्, **हविष्यं** मुन्यन्नादि, **क्षीरषाष्टिकं** क्षीरमिश्रः षाष्टिकौदनः, दध्ना मिश्र ओदनो **दध्योदनः, हविः** घृतौदनः। **चूर्णं** तिलचूर्णमिश्र ओदनः, **मांसं** भक्ष्यमांसमिश्र ओदनः, **चित्रौदनं** नानावर्णौदनः, एतानि गुडौदनादीनि **यथाक्रम**मादित्याद्युद्देशेन **भोजनार्थं द्विजेभ्यो** ब्राह्मणेभ्यो **दद्यात्** । ब्राह्मणसंख्या यथाविभवं द्रष्टव्या । गुडौदनाद्यभावे तु **यथालाभ**मोदनादि पादप्रक्षालनादिविधिपूर्वकं **सत्कृत्य** संमानपुरःसरं **दद्यात्** ॥ ३०४–३०५ ॥

---

पाठा०—१ निमा अपि A. २ औदुम्बर ख. ३ कस्यात्राष्टशतं क. ग; कस्याष्टशतक A. ४ संयुताः. ५ घृतान्नं च कृसरामिषचित्रकम् A. ६ द्विजः ख.

दक्षिणामाह—

**धेनुः शङ्खस्तथानड्वान्हेम वासो हयः क्रमात् ।**
**कृष्णा गौरायसं छाग एता वै दक्षिणाः स्मृताः ॥**

**धेनु**र्दोग्ध्री, **शङ्खः** प्रसिद्धः, **अनड्वान्** भारसहो[1] वलीवर्दः, **हेम**,
**वासः** पीतम्, **हयः** पाण्डुरः, **कृष्णा** गौः, **आयसं** शस्त्रादि[2],
प्रसिद्धः, **एता** धेन्वादयो यथाक्रममादित्याद्युद्देशेन ब्राह्मणानां ...
**स्मृताः** उक्ता मन्वादिभिः । एतच्च संभवे सति, असंभवे तु यथाल...
तोऽन्यदेव यत्किंचिद्देयम् ॥ ३०६ ॥

'शान्तिकामेनाविशेषेण सर्वे ग्रहाः पूजयितव्याः' ( आ० २९५ ...
तत्र विशेषमाह—

**यश्च यस्य यदा दुःस्थः स तं यत्नेन पूजयेत् ।**
**ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ ॥ ३०...**

**यस्य** पुरुषस्य **यो** ग्रहो **यदा दुःस्थो**ऽष्टमादिदुष्टस्थानस्थितः[3] ...
**तदा यत्नेन** विशेषेण **पूजयेत्** । यस्मादेषां ग्रहाणां **ब्रह्मणा** पूर्वं व...
'**पूजिताः** सन्तो यूयमिष्टप्रापणेनानिष्टनिरसनेन च पूजयितारं पूज...
इति ॥ ३०७ ॥

अविशेषेण द्विजानधिकृत्य शान्तिकपौष्टिकादीनि कर्माण्यनुक्रान्तानि,
षेकैर्गुणयुक्तस्य[4] राज्ञो विशेषेणाधिकार इति दर्शयति—

**ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च ।**
**भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः ॥ ३...**
**[ ग्रहाणामिदमातिथ्यं कुर्यात्संवत्सरादपि ।**
**आरोग्यबलसंपन्नो जीवेत्स शरदः शतम् ॥ ]**

**नरेन्द्राणा**मभिषिक्तक्षत्रियाणां ग्रहाः पूज्यतमाः, इत्यनेनान्येषा[5]...
इति गम्यते । उभयत्र कारणमाह—**प्राणिनामभ्युदयविनिपाताः** ...
**धीनाः** यस्मात्तस्मादधिकारिभिः **पूज्याः** । किंच **जगतः** स्थावरज...
**भावाभावावु**त्पत्तिनिरोधौ **ग्रहाधीनौ** । तत्र यद्येते पूजितास्तद...
एवोत्पत्तिनिरोधौ भवतः, अन्यथा उत्पत्तिसमये नोत्पादः, नकाले[7] ...
जगदीश्वरत्वाच्च नरेन्द्राणां तद्योगक्षेमकारिणां पूज्यतमा ग्रहा इति तेषां ...
शान्तिकादिष्वधिकारः । तथा च गौतमेन (११।१) '—राजा सर्वस्ये...
वर्ज्यम्' इति राजानमधिकृत्य 'वर्णानाश्रमांश्च न्यायतोऽभिरक्षेत्' ( ...

टिप्प०—1 एताश्च दक्षिणा ऋत्विग्भ्य एव देयाः—अप० ।

पाठा०—१ भारवाहो क. ग. २ आयसमस्त्रादि, आयसं शस्त्रा... ३ दुष्टो. ४ भिषेकयुक्तस्य ख. ५ अथ चान्येषामपि ख. ६ ...त्पत्ति ग. ७ तस्य नोत्पादो न काले क.

तश्चैतान्स्वधर्मे स्थापयेत्' इत्यादीन्कांश्चिद्धर्मानुक्त्वा—'यानि च दैवोत्पा-न्तकाः प्रब्रूयुस्तान्याद्रियेत (गौ. ११।१०) तदधीनमपि ह्येके योगक्षेमं प्रतिजा-इति। शान्तिकपौष्टिकाद्यनुष्ठानहेतुमभिधाय 'शान्तिकपुण्याहस्वस्त्ययनायुष्य-संयुक्तान्याभ्युदयिकानिविद्वेषण स्तम्भनाभिचारद्विषद्वृद्धियुक्तानि च शालाग्नौ' (गौ. ११।१।१५-१७) इति शान्तिकादीनि दर्शितानि ॥ ३०८ ॥

इति ग्रहशान्तिप्रकरणम्।

---

## अथ राजधर्मप्रकरणम् १३

साधारणान्गृहस्थधर्मानुक्त्वेदानीं राज्याभिषेकादिगुणयुक्तस्य गृहस्थस्य विशेष-नाह—

**महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः।**
**विनीतः सत्त्वसंपन्नः कुलीनः सत्यवाक्शुचिः ॥ ३०९ ॥**
**अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपरुषस्तथा।**
**धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ॥ ३१० ॥**
**स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च।**
**विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः ॥ ३११ ॥**

पुरुषार्थसाधनकर्मारम्भाध्यवसाय उत्साहः, महानुत्साहो यस्यासौ **महो-त्साहः**, बहुदेयार्थदर्शी **स्थूललक्षः**, परकृतोपकारापकारौ न विस्मरतीति **कृतज्ञः**, तपोज्ञानादिवृद्धानां **सेवकः**, वृद्धसेवकः, विनयेन युक्तो **विनीतः**, विनय'शब्देनाविरुद्धः पूर्वोक्तस्नातकधर्मकलाप उच्यते—'न संशयं प्रपद्येत नाक-स्मादप्रियं वदेत्' (आ. १३२) इत्यादिनोक्तः। **सत्त्वसंपन्नः** संपदापदोर्हर्ष-विषादरहितः, मातृतः पितृतश्चाभिजनवान् **कुलीनः**, **सत्यवाक्** सत्यवचन-शीलः। **शुचिर्**बाह्याभ्यन्तरशौचयुक्तः अवश्यकार्याणां कर्मणामारम्भे प्रारब्धानां समापने यो न विलम्बतेऽसा**वदीर्घसूत्रः**, अधिगतार्थाऽविस्मरणशीलः **स्मृतिमान्**, **अक्षुद्रो**ऽसद्गुणद्वेषी, **अपरुषः** परदोषाकीर्तनशीलः, **धार्मिको** वर्णाश्रमधर्मान्वितः, न विद्यन्ते व्यसनानि यस्यासा**वव्यसनः**। व्यसनानि[1] दश, यथाह मनुः (७।४७–४८)—'मृगयाऽक्षो दिवास्वप्नः परिवादः

---

टिप्प०—1 पुरुषार्थविक्षेपकं द्यूतादिकं व्यसनम्। 2 आखेटकाख्यो मृगवधो मृगया, अक्षादिक्रीडा, दिवानिद्रा, परदोषकथनं, स्त्रीसंभोगः, मद्यपानजनितो मदः नृत्य-गीतवादित्राणि त्रीणि, वृथाभ्रमणं, इति दश इत्यन्ये।

---

पाठा०—१ संवननाभिचार ग. २ अदीर्घसूत्री ग; A. ३ सत्यवादन ग.

स्त्रियो मदः । तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ पैशुन्यं ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥' च सप्त कष्टतमानि । यथाह मनुः (७।५०-५१)—'पानमक्षाः स्त्रियः च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥ दण्डस्य वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥' इति गम्भीरार्थावधारणक्षमः, **शूरो** निर्भयः, **रहस्यवित्** गोपनीयार्थगो **स्वरन्ध्रगोप्ता** स्वस्य सप्तसु राज्याङ्गेषु यत्परप्रवेशद्वारशैथिल्यं तस्य गोप्ता प्रच्छादयिता । **आन्वीक्षिक्यामात्मविद्यायां, दण्डनीत्यामर्थो**पयोगिन्यां, **वार्तायां** कृषिवाणिज्यपशुपालनरूपायां धनोपचयहेतुभूताया ऋग्यजुःसामाख्यायां च **विनीतस्**तत्तदभिज्ञैः प्रावीण्यं नीतः । यथा (७।४३)—'त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् । आ चात्मविद्यो वार्तारम्भांश्च लोकतः ॥' इति । **नराधिपो** 'राज्याभिषि इति सर्वत्र संबन्धः ॥ ३०९-३११ ॥

एवमभिषेकयुक्तस्यान्तरङ्गान्धर्मानभिधायेदानीं बहिरङ्गानाह—

**स मन्त्रिणः प्रकुर्वीत प्राज्ञान्मौलान्स्थिराञ्शुचीन् ।**
**तैः सार्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम् ॥ ३१२ ॥**

महोत्साहादिगुणैर्युक्तो राजा **मन्त्रिणः कुर्वीत** । कथंभूतान्? हिताहितविवेककुशलान्, **मौलान्** स्ववंशपरम्परायातान्, **स्थिरान्** त्यपि हर्षविषादस्थाने विकाररहितान् । **शुचीन्** धर्मार्थकामभयोपधा ते च सप्ताष्टौ वा कार्याः । यथाह मनुः (७।५४)—'मौलाञ्शास्त्रविदः ल्लब्धलक्षान्कुलोद्भवान् । सचिवान्सप्त चाष्टौ वा कुर्वीत सुपरीक्षितान् ॥' एवं मन्त्रिणः पूर्वं कृत्वा **तैः सार्धं राज्यं** संधिविग्रहादिलक्षणं कार्यं समस्तैर्व्यस्तैश्च । अनन्तरं तेषामभिप्रायं ज्ञात्वा सकलशास्त्रार्थविचार **ब्राह्मणेन** पुरोहितेन सह कार्यं विचिन्त्य **ततः स्वयं** बुद्ध्या कार्यं **येत्** ॥ ३१२ ॥

कीदृशं पुरोहितं कुर्यादित्याह—

**पुरोहितं प्रकुर्वीत दैवज्ञमुदितोदितम् ।**
**दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा ॥ ३१३ ॥**

**पुरोहितं** च सर्वेषु दृष्टादृष्टार्थेषु कर्मसु पुरतो निहितं दानमानसत्कृतं

**टिप्प०**—1 पैशुन्यमविज्ञातदोषाविष्करणं, साहसं साधोर्बन्धनादि निग्रहः, छद्मवधः, ईर्ष्याऽन्यगुणासहिष्णुता, असूया परगुणेषु दोषाविष्करणं, अर्थदूषणं मपहरणं देयानामदानं च, वाक्पारुष्यमाक्रोशादि, दण्डपारुष्यं ताडनादि। 2 मौलान्पितृपितामहक्रमेण सेवकान् । 3 लब्धलक्षान् लक्ष्यादप्रच्युतशरादीन्।

**पाठा०**—१ साममय्यां ख. २ च तद्विदः ख. ३ ततः पर ४ हर्षविकारस्थाने विषादरहितान् क. ५ च कुर्वीत A. ६ कर्मसु पुरो निहि

कुर्यात् । कथंभूतम्? दैवज्ञं ग्रहोत्पाततच्छमनादेर्वेदितारम्, उदितोदितं विद्याभिजनानुष्ठानादिभिरुदितैः शास्त्रोक्तरुदितं समृद्धम्, दण्डनीत्याशास्त्रे कुशलम्, अथर्वाङ्गिरसे च शान्त्यादिकर्मणि ॥ ३१३ ॥

**श्रौतस्मार्तक्रियाहेतोर्वृणुयादेव चर्त्विजः ।**
**यज्ञांश्चैव प्रकुर्वीत विधिवद्भूरिदक्षिणान् ॥ ३१४ ॥**

श्रौताग्निहोत्रादि-स्मार्तोपासनादिक्रियानुष्ठानसिद्ध्यर्थं ऋत्विजो वृणुयात् । यज्ञांश्च राजसूयादीन् विधिवत् यथाविधानं भूरिदक्षिणान् बहुदक्षिणानेव कुर्यात् ॥ ३१४ ॥

**भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च ।**
**अक्षयोऽयं निधी राज्ञां यद्विप्रेषूपपादितम् ॥ ३१५ ॥**

किंच, ब्राह्मणेभ्यो भोगान् सुखानि तत्साधनदानद्वारेण दद्यात् । वसूनि च सुवर्णरूप्यभूप्रभृतीनि विविधानि नानाप्रकाराणि देयानि । यस्माद्राज्ञामक्षयो निधिः शेवधिर्यद्ब्राह्मणेभ्यो दीयते । साधारणधर्मत्वेन प्राप्तौ सत्यां राज्ञां दानप्राधान्यप्रतिपादनार्थं पुनर्वचनम् ॥ ३१५ ॥

**अस्कन्नमव्यथं चैव प्रायश्चित्तैरदूषितम् ।**
**अग्नेः सकाशाद्विप्राग्नौ हुतं श्रेष्ठमिहोच्यते ॥ ३१६ ॥**

किंच, अग्नेः सकाशाद्ग्निसाध्याद्भूरिदक्षिणाद्राजसूयादेरपि विप्राग्नौ हुतं श्रेष्ठमिहोच्यते । यदेतदस्कन्नं क्षरणरहितं, अव्यथं पशुहिंसारहितं, प्रायश्चित्तैरदूषितं प्रायश्चित्तरहितम् ॥ ३१६ ॥

'वसूनि विप्रेभ्यो दद्यात्' (आ० ३१५) इत्युक्तम्, कया परिपाट्या दद्यादित्याह—

**अलब्धमीहेद्धर्मेण लब्धं यत्नेन पालयेत् ।**
**पालितं वर्धयेन्नीत्या वृद्धं पात्रेषु निक्षिपेत् ॥ ३१७ ॥**

अलब्धलाभाय धर्मशास्त्रानुसारेण यतेत । यत्नेन लब्धं तत् परिपालयेत् स्वयमवेक्षया रक्षेत् । पालितं तत्परतया रक्षितं नीत्या वणिक्पथादिना वृद्धिं नयेत् । वृद्धं च पात्रेषु त्रिविधेषु धर्मार्थकामयुक्तेषु निक्षिपेद्दद्यात् ॥ ३१७ ॥

---

टिप्प०—1 वरणेन पुरोहितत्वं संजायते, यथा चाध्वर्युत्वादि, अतः 'पुरोहितं कुर्यात्' इति वचनं युक्तम् ।

---

पाठा०—१ दत्त्वा विप्रेभ्यो ख. २ अव्ययं ख. ३ प्रायश्चित्तायासरहितं. ४ तत्परतया रक्षेत्. ५ वाणिज्यादिकया ग.

पात्रे निक्षिप्य किं कुर्यादित्याह—

**दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ।**
**आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥ ३१८ ॥**

यथोक्तविधिना **भूमिं दत्त्वा** स्वत्वनिवृत्तिं कृत्वा निबन्धं वा एकस्य भरकस्येयन्तो रूपकाः, एकस्य पर्णभरकस्येयन्ति पर्णानीति वा **निबन्धं** **लेख्यं कारयेत्** । किमर्थम् ? **आगामिनः** एष्यन्तो ये **भद्राः** साधवो नृ**पतयो** भूपास्तेषां 'अनेन दत्तम्, अनेन प्रतिगृहीतम्' इति **परिज्ञानाय** । **पार्थिवो** भूपतिः । अनेन भूपतेरेव भूमिदाने निबन्धदाने वाऽधिकारो न भोगपतेरिति दर्शितम् ॥ ३१८ ॥

'लेख्यं कारयेत्' ( आ० ३१८ ) इत्युक्तं, कथं कारयेदित्याह—

**पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ।**
**अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ॥ ३१९ ॥**
**प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम् ।**
**स्वहस्तकालसंपन्नं शासनं कारयेत्स्थिरम् ॥ ३२० ॥**

कार्पासिके **पटे ताम्रपट्टे** ताम्रफलके **वा आत्मनो वंश्यान्** प्रपितामहपितामहपितॄन् बहुवचनस्यार्थवत्त्वात् वंशवीर्यश्रुतादिगुणोपवर्णनपूर्वकमभिलेख्य **आत्मानं च**शब्दात् प्रतिग्रहीतारं, प्रतिग्रहपरिमाणं दानच्छेदोपवर्णनं च लेख्य । प्रतिगृह्यत इति प्रतिग्रहो निबन्धस्तस्य रूपकादिपरिमाणम् । दीयत इति दानं क्षेत्रादि तस्य छेदः छिद्यतेऽनेनेति छेदः नद्याघाटौ निर्वर्तनं तत्परिमाणं च तस्योपवर्णनं, 'अमुकनद्या दक्षिणतोऽयं ग्रामः क्षेत्रं वा, पूर्वतोऽमुकग्रामस्य', एतावन्निवर्तनमित्यादिनिवर्तनपरिमाणं च लेख्यम् । एवं आघाटस्य नदीनगरखलादेरपरिज्ञातत्वेन भूमेर्न्यूनाधिकभावसंभवात्तन्निवृत्त्यर्थम्, स्वहस्तेन स्वहस्तलिखितेन 'मतं मे अमुकनाम्नः अमुकपुत्रस्य यदत्रोपरि लेखितमित्यनेन संपन्नं संयुक्तं, कालेन च द्विविधेन शकनृपातीतरूपेण संवत्सररूपेण च दानकालेन चन्द्रसूर्योपरागादिना संपन्नं स्वमुद्रया गरुडवाराहादिरूपयोपरि बहिश्चिह्नितमङ्कितं स्थिरं दृढं शासनं शिष्यन्ते भविष्यन्तो नृपतयोऽनेन 'दानाच्छ्रेयोऽनुपालनम्' इति शासनं कारयेत् महीपतिर्न भोगपतिः । संधिविग्रहादिकारिणा येन केनचिल्लेख्यम्; 'संधिविग्रहकारी तु भवेद्यस्तस्य लेखकः । स्वयं राज्ञा समादिष्टः स लिखेद्राजशासनम् ॥' इति ।

टिप्प०—1 'अस्मिन्ग्रामे प्रतिक्षेत्रं क्षेत्रस्वामिनैतद्धनमस्मै प्रत्यब्दं प्रति देयम्' इत्येवमादिनियमो निबन्धः इति—अप० । 2 आघाटस्य=सीमाचिह्नभूतस्य

पाठा०—१ च A. २ पट्टे फलके वा क. ख. ३ नद्याघाटौ ४ निवर्तनपरिमाणं च क. ५ शास्यन्ते ग. ६ नान्येन ग; 'न येन केन

। दानमात्रेणैव दानफले सिद्धे शासनकरणं भोगाभिवृद्ध्या फलातिशया-
॥ ३१९-३२० ॥

इदानीं राज्ञो निवासस्थानमाह—

**रम्यं पशव्यमाजीव्यं जाङ्गलं देशमावसेत् ।**
**तत्र दुर्गाणि कुर्वीत जनकोशात्मगुप्तये ॥ ३२१ ॥**

**रम्यं** रमणीयं अशोकचम्पकादिभिः । **पशव्यं** पशुभ्यो हितं पशुवृद्धिकरम् । **जीव्यमु**पजीव्यं कन्दमूलपुष्पफलादिभिः । **जाङ्गलं** यद्यप्यल्पोदकतरुपर्वतो जाङ्गलस्तथाप्यत्र संजलतरुपर्वतो देशो 'जाङ्गल'शब्देनाभिधीयते । **तं देश-वसेद**धिवसेत् । **तत्रै**वंविधे देशे **जनानां कोशस्य** सुवर्णादेरा**त्मनश्च** **णार्थं दुर्गं कुर्वीत** । तच्च षड्विधम् । यथाह मनुः ( ७।७० )—'धन्व-महीदुर्गमब्दुर्गं वार्क्षमेव वा । नृदुर्गं गिरिदुर्गं च समाश्रित्य वसेत्पुरम् ॥' ॥ ३२१ ॥

**तत्र तत्र च निष्णातानध्यक्षान्कुशलाञ्शुचीन् ।**
**प्रकुर्यादायकर्मान्तव्ययकर्मसु चोद्यतान् ॥ ३२२ ॥**

किंच, **तत्र तत्र** धर्मार्थकामादिषु **अध्यक्षान्** योग्यानधिकारिणः **प्रकुर्यान्नि-**त । यथाहुः—'धर्मकृत्येषु धर्मज्ञानर्थकृत्येषु पण्डितान् । स्त्रीषु क्लीबान्नियु-नीचान्निन्द्येषु कर्मसु ॥' इति । कीदृशान्? **निष्णातान**नन्यव्यापारान् । **लान्** तत्तद्व्यापारचतुरान् । **शुचीन्** चतुर्विधोपधाशुद्धान् । **आयकर्मसु** र्णाद्युत्पत्तिस्थानेषु **व्ययकर्मसु** सुवर्णादिदानस्थानेषु च **उद्यतान**नलसान् । द्धात्प्राज्ञत्वादिगुणयुक्तान् । उक्तं च—'प्राज्ञत्वमुपधाशुद्धिरप्रमादोऽभियुक्तता । षु व्यसनाभावः स्वामिभक्तिश्च योग्यता ॥' इति ॥ ३२२ ॥

भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च' ( आ० ३१५ ) इति सामान्येन दानमुक्तम्, इदानीं नृपाणां विक्रमार्जितस्य दाने फलातिशयमाह—

**नातः परतरो धर्मो नृपाणां यद्रणार्जितम् ।**
**विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं सदा ॥ ३२३ ॥**

अस्मादुत्कृष्टतमो **धर्मो नृपाणां न** विद्यते **यद्रणार्जितं द्रव्यं विप्रेभ्यो** यते । **यच्च प्रजाभ्योऽभयदानम्** ॥ ३२३ ॥

**टिप्प०**—1 धन्वदुर्गं असंवेष्टितं चतुर्दिशं पञ्चयोजनमनुदकम् । महीदुर्गं पाषा-णायुतद्वादशहस्तोच्छ्रितेन युद्धार्थमुपरिभ्रमणयोग्येन सावरणगवाक्षादियुक्तेन प्राकारेण न्तादेष्टितं सद्वारम् । जलदुर्गमगाधोदकेन समन्ततो वेष्टितम् । वार्क्षं बहिः सर्वतो जनमात्रं व्याप्य तिष्ठन्महावृक्षकण्टकिगुल्मलताद्यन्वितम् । नृदुर्गं चतुर्दिगवस्थायि-त्यश्वरथयुक्तबहुपादातरक्षितम् । गिरिदुर्गं सर्वतः पृष्ठमतिदुरारोहं संकोचैकमार्गोपेतं तर्नदीप्रस्रवणाद्युदकयुक्तं बहुसस्योत्पन्नक्षेत्रवृक्षान्वितम्.

**पाठा०**—१ समजल क. २ धर्मादिष्वयादिषु ग.

'रणार्जितं देयम्' इत्युक्तं, द्रव्यार्जनाय रणे प्रवृत्तस्य विपत्तिरपि सं धर्मो नाप्यर्थ इति ततो निवृत्तिरेव श्रेयसीत्यत आह—

**य आहवेषु वध्यन्ते भूम्यर्थमपराङ्मुखाः ।**
**अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥ ३**

**ये** भूम्याद्यर्थम**आहवेषु** प्रवृत्ता **अपराङ्मुखा** अभिमुखा **वध्यन्ते** । **ते स्वर्गं यान्ति** । योगाभ्यासरता यथा । यद्यकूटैरविषदिग्धादिभिरायुधैर्मा भवन्ति ॥ ३२४ ॥

**पदानि क्रतुतुल्यानि भग्नेष्वविनिवर्तिनाम् ।**
**राजा सुकृतमादत्ते हतानां विपलायिनाम् ॥ ३**

किंच, स्वबलेषु करितुरगरथपदातिषु **भग्नेष्वविनिवर्तिनां** परव यायिनां **पदानि क्रतुतुल्यान्यश्वमेधतुल्यानि** । विपर्यये दोषमाह— यिनां पराङ्मुखानां **हतानां राजा सुकृतमादत्ते** ॥ ३२५ ॥

**तवाहंवादिनं क्लीबं निर्हेतिं परसंगतम् ।**
**न हन्याद्विनिवृत्तं च युद्धप्रेक्षणकादिकम् ॥ ३२**

अपि च, **तवाहमिति यो वदति तं क्लीबं** नपुंसकं **निर्हेतिं** **परसंगत**मन्येन सह युद्ध्यमानं **विनिवृत्तं** युद्धाद्विनिवृत्तं **युद्धप्रेक्षण** दर्शिनं । 'न हन्यात्' इति सर्वत्र संबन्धः । 'आदि'ग्रहणादश्वसारथ्यादीनां यथाह गौतमः ( १०।१७-१८ )—'न दोषो हिंसायामाहवेऽन्यत्र व्य नायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षारूढोन्मत्तदूतगोब्राह्मणा इति । शङ्खोऽप्याह—'न पानीयं पिबन्तं न भुञ्जानं नोपानहौ मुञ्चन्तं सवर्मा न स्त्रियं न करेणुं न वाजिनं न सारथिनं न सूतं न दूतं न ब्राह्मणं नमराजा हन्यात्' इति ॥ ३२६ ॥

**कृतरक्षः समुत्थाय पश्येदायव्ययौ स्वयम् ।**
**व्यवहारांस्ततो दृष्ट्वा स्नात्वा भुञ्जीत कामतः ॥ ३**

**कृतरक्षः** पुरस्यात्मनश्च रक्षां विधाय प्रतिदिनं प्रातःकाल उत्थाय **आयव्ययौ पश्येत्** । **ततो व्यवहारान् दृष्ट्वा** मध्याह्नकाले **स्नात्वा** यथाकालं **भुञ्जीत** ॥ ३२७ ॥

**हिरण्यं[2] व्यापृतानीतं भाण्डागारेषु[3] निक्षिपेत् ।**
**पश्येच्चारांस्ततो दूतान्प्रेषयेन्मन्त्रिसंगतः ॥ ३२८**

तदनन्तरं **हिरण्यं व्यापृतै**र्हिरण्याद्यानयननियुक्तैर**आनीतं** स्वयमेव

टिप्प०—1 यथा चोक्तम्—'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । योगयुक्तश्च रणे चाभिमुखो हतः' इति । 2 स्नानग्रहणं सकलमाध्याह्निकोपलक्षण

पाठा०—१ ज्यायसी ग. २ हिरण्यादिकं ख. ३ गारे न्यसेत्तत

ण्डागारेषु **निक्षिपेत्**। ततश्चारान्स्पशान्प्रत्यागतान् **पश्येत्**। ये परराज्ये न्तपरिज्ञानाय परिव्राजकतापसादिरूपेण गूढचारिणः प्रेषितास्तांश्चारान्दृष्ट्वा वेन्निवेशयेत्। तदनन्तरं **दूतांश्च पश्येत्**। दूताश्च ये प्रकटमेव राज्यान्तरं गतागतमाचरन्ति। ते च त्रिविधाः—निसृष्टार्थाः, संदिष्टार्थाः, शासनहराः। तत्र निसृष्टार्था राजकार्याणि देशकालोचितानि स्वयमेव कथयितुं क्षमाः, मात्रं ये परस्मै निवेदयन्ति ते संदिष्टार्थाः, शासनहरास्तु राजलेखहारिणः, पूर्वप्रेषितानागतान्**मन्त्रिसंगतः पश्येत्**। दृष्ट्वा तद्वार्तामाकलय्य पुनः प्रेषयेत्॥ ३२८॥

**ततः स्वैरविहारी स्यान्मन्त्रिभिर्वा समागतः।**
**बलानां दर्शनं कृत्वा सेनान्या सह चिन्तयेत् ॥३२९॥**

दनन्तरमपराह्णे स्वैरं यथेष्टमेकोऽन्तःपुर**विहारी स्यात्। मन्त्रिभिर्वा** सिभिः कलाकुशलैः परिहासवेदिभिः परिवृतः स्त्रीभिश्च रूपयौवनवैदग्ध्य-लेनीभिः—'भुक्तवान्विहरेच्चैव स्त्रीभिरन्तःपुरे सह। विहृत्य तु यथाकालं पुनः र्याणि चिन्तयेत्॥' इति (७।२२१) मनुस्मरणात्। ततो विशिष्टैर्वस्त्रकुसुम-नालंकारैरलंकृतः हस्त्यश्वरथपदाति**बलानि दृष्ट्वा सेनान्या** सेनापतिना तद्रक्षणादि देशकालोचितं **चिन्तयेत्**॥ ३२९॥

**संध्यामुपास्य शृणुयाच्चाराणां गूढभाषितम्।**
**गीतनृत्यैश्च भुञ्जीत पठेत्स्वाध्यायमेव च ॥ ३३० ॥**

ततः **सायंकाले संध्यामुपास्य**, सामान्येन प्राप्तस्यापि पुनर्वचनं कार्या-त्वादविस्मरणार्थम्। अनन्तरं ये पूर्वदृष्टाः क्वचित्स्थाने निवेशितास्तेषां राणां **गूढभाषित**मन्तर्वेश्मनि शस्त्रपाणिः **शृणुयात्**। उक्तं च मनुना २२३)—'संध्यां चोपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत्। रहस्याख्यायिनां प्रणिधीनां च चेष्टितम्॥' इति। ततो **नृत्यगीतादिभिः** कंचित्कालं त्वा कक्षान्तरं प्रविश्य **भुञ्जीत**; 'गत्वा कक्षान्तरं त्वन्यत्समनुज्ञाप्य तं म्। प्रविशेद्भोजनार्थं च स्त्रीभिरन्तःपुरं सह॥' इति (मनुः ७।२२४) णात्। ततोऽविस्मरणार्थं यथाशक्ति **स्वाध्यायं पठेत्**॥ ३३०॥

**संविशेत्तूर्यघोषेण प्रतिबुद्ध्येत्तथैव च।**
**शास्त्राणि चिन्तयेद्बुद्ध्या सर्वकर्तव्यतास्तथा ॥ ३३१ ॥**

दनन्तरं **तूर्य**शङ्ख**घोषेण संविशेत्**स्वप्यात्। **तथैव** तूर्यादिघोषेण **बुध्येत्**। प्रतिबुद्ध्य च शास्त्रविद्भिर्विश्वासिभिः सह एकाकी वा पश्चिमे

पाठा०—१ श्चारान्विश्वस्तान् ख. २ राजान्तरं. ३ शासनहस्ताश्चेति क. त्यैश्च A. ५ स्त्रीवृतोऽन्तःपुरं पुनः.

यामे शास्त्राणि चिन्तयेत् सर्वकर्तव्यताश्च सर्वकार्याणि च । ए
अत्युच्यते । अस्वस्थः पुनः सर्वकार्येष्वन्यं नियोजयेत् । यथाह मनुः (
—'एतद्वृत्तं समातिष्ठेदरोगः पृथिवीपतिः । अस्वस्थः सर्वमेवैतन्मन्त्रिमुख्ये
शायेत् ॥' इति ॥ ३३१ ॥

प्रेषयेच्च ततश्चारान्स्वेष्वन्येषु च सादरान् ।
ऋत्विक्पुरोहिताचार्यैराशीर्भिरभिनन्दितः ॥ ३३२ ॥
दृष्ट्वा ज्योतिर्विदो वैद्यान्दद्याद्गां काञ्चनं महीम् ।
नैवेशिकानि च ततः श्रोत्रियेभ्यो गृहाणि च ॥३३३॥

अनन्तरं तत्रस्थ एव विश्वस्तान्स्वान् चारान् दानमानसत्कारैः
स्वेषु सामन्ताद्यधिकारिषु अन्येषु च महीपतिषु प्रेषयेत्तच्चिकीर्षि
नाय । ततः प्रातःसंध्यामुपास्याऽग्निहोत्रं हुत्वा पुरोहितर्त्विगाचार्यै
शीर्भिरभिनन्दितो ज्योतिर्विदो दृष्ट्वा तेभ्यश्च ग्रहादिस्थितिं
शान्तिकादीनि च पुरोहितायादिश्य वैद्यांश्च दृष्ट्वा तेभ्यश्च स्वशरीर
निवेद्य प्रतिविधानं चादिश्य गां दोग्ध्रीं काञ्चनं महीं च नैवेशि
विवाहोपयोगीनि कन्यालंकारादीनि गृहाणि च सुधाधवलितादीनि श्रो
भ्योऽधीतवेदेभ्यो ब्राह्मणेभ्यः । 'दद्यात्' इति प्रत्येकं संबध्यते ॥३३२-

ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनोऽरिषु ।
स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता ॥ ३३४ ॥

किंच, ब्राह्मणेष्वधिक्षिपत्स्वपि क्षमी क्षमावान् । स्निग्धेषु इष्ट
मित्रादिष्वजिह्मः अवक्रः । अरिषु क्रोधनः । भृत्यवर्गेषु प्रजासु सम्य
हिताचरणेनाहितनिवर्तनेन च पितेव दयावान् । 'स्यात्' इति प्रत्येकं
ध्यते ॥ ३३४ ॥

प्रजापालनफलमाह—

पुण्यात्षड्भागमादत्ते न्यायेन परिपालयन् ।
सर्वदानाधिकं यस्मात्प्रजानां परिपालनम् ॥ ३३५ ॥

यस्मान्न्यायेन शास्त्रोक्तमार्गेण प्रजाः परिपालयन् परिपालितप्रजा
पुण्यात् षड्भागं षष्ठं भागमादत्ते । यस्माच्च सर्वेभ्यो भूम्यादिदा
प्रजानां परिपालनमधिकफलम् । तस्मात् 'प्रजासु यथा पिता
स्यात्' इति गतेन संबन्धः ॥ ३३५ ॥

---

पाठा०—१ एतद्विधान. २ सर्वमेतत्तु भृत्येषु विनियोजयेत. ३
A. ४ न्दद्याद्गाः A. ५ तथा श्रोत्रियाणां A. ६ भृत्यवर्गे च A. ७
भाग A. ८ धर्मशास्त्रोक्तेन ग.

**चाटतस्करदुर्वृत्तमहासाहसिकादिभिः ।**
**पीड्यमानाः प्रजा रक्षेत्कायस्थैश्च विशेषतः ॥ ३३६ ॥**

चाटाः प्रतारकाः विश्वास्य ये परधनमपहरन्ति, प्रच्छन्नापहारिणस्तस्कराः, दुर्वृत्ता ऐन्द्रजालिककितवादयः, सहो बलं सहसा बलेन कृतं साहसं महच्च तत्साहसं च महासाहसं तेन वर्तन्त इति **महासाहसिकाः** प्रकाशापहारिणः, 'आदि'शब्दान्मौलिककुहकदुर्वृत्तयः । एतैः **पीड्यमाना** बाध्यमानाः **प्रजा रक्षेत्** । **कायस्था** लेखका गणकाश्च तैः **पीड्यमाना** विशेषतो रक्षेत्; तेषां राजवल्लभतयातिमायावितया च दुर्निवारत्वात् ॥ ३३६ ॥

**अरक्ष्यमाणाः कुर्वन्ति यत्किंचित्किल्बिषं प्रजाः ।**
**तस्मात्तु नृपतेरर्धं यस्माद्गृह्णात्यसौ करान् ॥ ३३७ ॥**

अरक्ष्यमाणाः प्रजाः यत्किंचित्किल्बिषं चौर्यपरदारगमनादि कुर्वन्ति तस्मात्पापादर्धं नृपतेर्भवति । यस्मादसौ राजा रक्षणार्थं प्रजाभ्यः करान् गृह्णाति ॥ ३३७ ॥

**ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ।**
**साधून्संमानयेद्राजा विपरीतांश्च[3] घातयेत् ॥ ३३८ ॥**
**उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासयेत् ।**
**[4]सद्दानमानसत्काराञ्श्रोत्रियान्वासयेत्सदा ॥ ३३९ ॥**

राष्ट्रे राष्ट्राधिकारेषु ये नियुक्तास्तेषां विचेष्टितं चरितं चारैरुक्तलक्षणैः सम्यक् ज्ञात्वा साधून्सुचरितान् **संमानयेत्** दानमानसत्कारैः पूजयेत् । विपरीतान्दुष्टचरितान्सम्यग्विदित्वा **घातयेत्** अपराधानुसारेण । ये पुनरुत्कोचजीविनस्तान्द्रव्यरहितान्कृत्वा स्वराष्ट्रात्प्रवासयेत् । श्रोत्रियान्दानमानसत्कारैः सहितान्कृत्वा स्वराष्ट्रे स्वदेशे **सदैव वासयेत्**॥३३९॥

**अन्यायेन नृपो राष्ट्रात्स्वकोशं [5]योऽभिवर्धयेत् ।**
**सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः ॥ ३४० ॥**

योऽसौ राजा **स्वराष्ट्रादन्यायेन** द्रव्यमादाय **स्वकोशं अभिवर्धयेत्** सोऽचिराच्छीघ्रमेव **विगतश्रीको** विनष्टलक्ष्मीको **बन्धुभिः सह नाशं** एति ॥ ३४० ॥

टिप्प०—1 ये कस्यचित्कार्येण कस्यचिद्राजामात्यादेः प्रवृत्ता ग्रहणातिकार्यसिद्धौ ते–मेधा० । कार्यार्थं कार्थिणो धनादानमुत्कोचः–अप० ।

पाठा०—१ ऐन्द्रजालिक. ग. २ अपकारिणः ग. ३ स्तु A. ४ सदान ख; A. ५ योऽभिरक्षयेत् A.

**प्रजापीडनसंतापात्समुद्भूतो हुताशनः ।**
**राज्ञः कुलं श्रियं [1]प्राणांश्चाऽदग्ध्वा न निवर्तते ॥**

**प्रजा**नां तस्करादिकृतपीडनेन यः **संता**पस्तस्मादुद्भूतो इव संतापकारित्वादपुण्यराशिः 'हुताशन'शब्देनोच्यते । स **राज्ञः कु**... **प्राणांश्चादग्ध्वा** नाशमनीत्वा न **निवर्तते** नोपशाम्यति ॥ ३४१ ॥

**य एव नृपतेर्धर्मः स्वराष्ट्रपरिपालने ।**
**तमेव [2]कृत्स्नमाप्नोति परराष्ट्रं वशं नयन् ॥ ३४२ ॥**

न्यायतः स्वराष्ट्रपरिपालने **राज्ञो यो धर्मस्तं** सकलं वक्ष्यमाणन्यायेन पर**राष्ट्रं वशं नयन्** आत्मसात्कुर्वन्नाप्नोति धर्मषड्भागं च ॥ ३४२ ॥

**[3]यस्मिन्देशे य आचारो व्यवहारः कुलस्थितिः ।**
**तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥ ३४३ ॥**

किंच, यदा परदेशो वशमुपागतस्तदा न स्वदेशाचारादिसंकरः कार्यः, किं तु **यस्मिन्देशे य आचारः कुलस्थितिर्व्यवहारो वा** यथैव... **त्तथैवासौ परिपालनीयो** यदि शास्त्रविरुद्धो न भवति । 'यदा वशमुपागतः' इत्यनेन वशोपगमनात्प्रागनियम इति दर्शितम् । यथोक्तम् ( मनुः ७।१९५ ) 'उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् । दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ॥' इति ॥ ३४३ ॥

**मन्त्रमूलं यतो [4]राज्यं तस्मान्मन्त्रं सुरक्षितम् ।**
**कुर्याद्यथाऽस्य न विदुः कर्मणामा फलोदयात् ॥ ३४४ ॥**

यस्मात् 'तैः सार्धं चिन्तयेद्राज्यम्' ( आ० ३१२ ) इत्याद्युक्तं **मन्त्रमूलं** राज्यं **तस्मान्मन्त्रं** यत्नेन तथा **सुरक्षितं कुर्यात्, यथाऽस्य** राज्ञः **कर्म**णां विग्रहादीना**माफलोदयात्** फलनिष्पत्तेः [5]प्रागन्ये मन्त्रं **न जानन्ति** ॥ ३४४ ॥

**अरिर्मित्रमुदासीनोऽनन्तरस्तत्परः परः ।**
**क्रमशो मण्डलं चिन्त्यं सामादिभिरुपक्रमैः ॥ ३४५ ॥**

किंच, **अरिः** शत्रुः, **मित्रं** सुहृत्, उभयविलक्षण **उदासीन**श्च। त्रयस्त्रिविधाः सहजाः कृत्रिमाः प्राकृताश्चेति । तत्र **सहजोऽरिः** सापत्न... तत्पुत्रादिः । **कृत्रिमोऽरिः** यस्यापकृतं येन चापकृतम् । **प्राकृत**... देशाधिपतिः । **सहजं मित्रं** भागिनेयपैतृष्वस्रीयमातृष्वस्रीयादि। कृत्रि... येनोपकृतं यस्य चोपकृतम् । **प्राकृतमित्र**मेकान्तरितदेशाधिपतिः । स... त्रिममित्रशत्रुलक्षणरहितौ सहजकृत्रिमोदासीनौ । **प्राकृतो**...

---

पाठा०—१ प्राणानदग्ध्वा क; प्राणाञ्चादग्ध्वा A. २ कृत्स्न... ३ ... तु यस्मिन्य A. ४ राज्यमतो मन्त्रं क. ग. ५ प्राग्यावदन्ये ख.

तरितदेशाधिपतिः। अरिः पुनश्चतुर्विधः—घातव्योच्छेत्तव्यपीडनीयकर्शनीय-न। तत्र घातव्योऽनन्तरभूमिपतिर्व्यसनी हीनबलो विरक्तप्रकृतिः। गों मित्रहीनो दुर्बलश्चोच्छेत्तव्यः। पीडनीयो मन्त्रबलहीनः। प्रबलम-लयुक्तः कर्शनीयः; 'निर्मूलनात्समुच्छेदं पीडनं बलनिग्रहम्। कर्शनं तु प्राहुः कोशदण्डापकर्शनात्॥' इति। मित्रं द्विविधं–बृंहणीयं, कर्शनीयमिति। बलहीनं बृंहणीयम्। कोशबलाधिकं कर्शनीयम्। 'अनन्तरस्तत्परः' इति प्राकृतारिमित्रोदासीनानाह: अनन्तरः प्राकृतोऽरिः, तत्परः प्राकृतं, तस्मात्परः प्राकृत उदासीनः, शेषाः पुनः प्रसिद्धत्वान्नोक्ताः। एतद्राजमण्डलं शः पूर्वादिदिक्क्रमेण चिन्त्यं तेषां चेष्टितं ज्ञातव्यम्। ज्ञात्वा च सामादिभिर्वक्ष्यमाणैरभिसंधेयम्। एवं पुरतः पृष्ठतः पार्श्वतश्च त्रयस्त्रय आत्मा चैक त्रयोदशराजकमिदं राजमण्डलं पद्माकारम्। पार्ष्णिग्राहाक्रन्दासारादय-रिमित्रोदासीनेष्वेवान्तर्भवन्ति, संज्ञाभेदमात्रं ग्रन्थान्तरे दर्शितमिति योगीश्व-न पृथगुक्ताः॥ ३४५॥

'सामादिभिरुपक्रमैः' ( आ० ३४५ ) इत्युक्तम्, इदानीं तानुपायानाह—

**उपायाः साम दानं च भेदो दण्डस्तथैव च।**
**सम्यक्प्रयुक्ताः सिद्ध्येयुर्दण्डस्त्वगतिका गतिः॥३४६॥**

साम प्रियभाषणम्, दानं सुवर्णादेः भेदो भेदकरणं तत्सामन्तादीनां रतो वैरस्योत्पादनेन, दण्ड उपांशु-प्रकाशाभ्यां धनापहारादिर्वधपर्यन्तो-रः। एते सामादयः परिपन्थ्यादिसाधनोपायाः। एते च देशकालाद्यनुसा-सम्यक्प्रयुक्ताः सिद्ध्येयुः। तेषां च मध्ये दण्डस्त्वगतिका गतिः, पायान्तरसंभवे सति न प्रयोक्तव्यः। एतच्च पीडनीयकर्शनीयाभिप्रायेण। घातव्योच्छेत्तव्ययोस्तु दण्ड एव मुख्यः। एते सामादयो न केवलं राज्यव्यव-विषयाः अपि तु सकललोकव्यवहारविषयाः। यथा—'अधीष्व पुत्रकाधीष्व दास्यामि तव मोदकान्। यद्वाऽन्यस्मै प्रदास्यामि कर्णमुत्पाटयामि ते॥' इति ३४६

**संधिं च विग्रहं यानमासनं संश्रयं तथा।**
**द्वैधीभावं गुणानेतान्यथावत्परिकल्पयेत्॥ ३४७॥**

किंच, संधिर्व्यवस्थाकरणम्, विग्रहोऽपकारः, यानं परं प्रति यात्रा, आसनमुपेक्षा, संश्रयो बलवदाश्रयणम्, द्वैधीभावः स्वबलस्य द्विधाकरणम्। एतान्संधिप्रभृतीन्गुणान् यथावद्देशकालशक्तिमित्रादिवशेन कल्पयेत् ३४७

पाठा०—१ ह्यनन्तरदेशा क. मध्यन्तरदेशा ग. २ यातव्योच्छेदनीय-. ३ पकर्षणात् ख. ४ रभिसंधेयं क. ५ न पृथगुक्तम् ख. ६ स्योत्पाद- ख. ७ विग्रहं चैव यानमासनसंश्रयौ ख.

यानकालानाह—

यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत् ।
परश्च हीन आत्मा च हृष्टवाहनपूरुषः ॥ ३४८ ॥

यदा परराष्ट्रं सस्यैर्व्रीह्यादिभिर्गुणैश्च समजलेन्धनतृणादिभिः शत्रुश्च हीनो बलादिभिः, आत्मा च हृष्टवाहनपूरुषः वाहनाश्वादीनि तानि च पूरुषाश्च वाहनपूरुषाः हृष्टा वाहनपूरुषा यस्य स तदा परराष्ट्रमात्मसात्कर्तुं व्रजेत् ॥ ३४८ ॥

प्राणिनामभ्युदयविनिपातानां दैवायत्तत्वाद्यदि दैवमस्ति तदा स्व राष्ट्रादि वशीभविष्यति, अथ नास्ति कृतेऽपि पौरुषे न भविष्यति, एवायं यात्राप्रयास इत्यत आह—

दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ।
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ॥ ३४९ ॥

कर्मसिद्धिः फलप्राप्तिरिष्टानिष्टलक्षणा । सा न केवलं दैवे व्य अपि तु पुरुषकारेऽपि; लोके तथा दर्शनात्, चिकित्सकादिशास्त्रे अपि च पुरुषकाराभावे दैवमेव नास्तीत्याह—तत्र दैवमिति । यत र्जितं पौरुषमेव दैवमुच्यते । अल्पपुरुषकारानन्तरं महाफलोदया पौरुषं पौर्वदेहिकं कर्म । तस्मात्पुरुषकाराभावे न दैवमस्तीति पुरुष विधातव्यः ॥ ३४९ ॥

इदानीं मतान्तराण्याह—

केचिद्दैवात्[2]स्वभावाद्वा कालात्पुरुषकारतः ।
संयोगे[3] केचिदिच्छन्ति फलं कुशलबुद्धयः ॥ ३५० ॥

केचिदिष्टानिष्टलक्षणं फलं दैवादेवेच्छन्ति । केचित्स्वभाव भवति, न कारणमपेक्षत इति । केचित्कालात् । केचित्पुरुषकारत इदानीं स्वमतमाह—दैवादीनां संयोगे समुच्चये फलं भवतीति कुशल मन्वादयो मन्यन्ते ॥ ३५० ॥

एकैकस्मात्फलं न भवतीत्यत्र दृष्टान्तमाह—

यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिद्ध्यति ॥ ३५१ ॥

नात्र तिरोहितमस्ति ॥ ३५१ ॥

पाठा०—१ कारेऽपि क. २ केचिद्दैवाद्धठात्केचित्केचित् A. ३ न्यथा मनुष्याणां तेषां योनिस्तु पौरुषम् A.

लाभाय परराष्ट्रं गन्तव्यमित्युक्तम् । लाभश्च त्रिविधः—हिरण्यलाभो मूल-लाभो मित्रलाभश्चेति, तेषु मित्रलाभो ज्यायान् । ततस्तत्प्राप्त्युपाये यत्नो विधा-तव्यः । तत्प्राप्त्युपायश्च सत्यवचनमित्याह—

**हिरण्यभूमिलाभेभ्यो[1] मित्रलब्धिर्वरा यतः ।**
**अतो यतेत तत्प्राप्त्यै[2] रक्षेत्सत्यं समाहितः ॥ ३५२ ॥**

यस्मात् **हिरण्यभूमित्रलाभेभ्यो मित्रलब्धिर्वरा** उत्कृष्टा तस्मात्त-त्प्राप्त्यै **यतेत** यत्नं कुर्यात् सामादिभिः । **सत्यं च रक्षेत्** । **समाहितः** सावधानः । सत्यमूलत्वान्मित्रलाभस्य ॥ ३५२ ॥

इदानीं राज्याङ्गान्याह—

**स्वाम्यमात्या[3] जनो दुर्गं कोशो दण्डस्तथैव च ।**
**मित्राण्येताः प्रकृतयो राज्यं सप्ताङ्गमुच्यते ॥ ३५३ ॥**

'महोत्साह' ( आ० ३०९ ) इत्याद्युक्तलक्षणो महीपतिः **स्वामी**, **अमात्याः** पुरोहितादयः, **जनो** ब्राह्मणादिप्रजाः, **दुर्गं** धन्वदुर्गादि, **कोशः** सुव-र्णधनराशिः, **दण्डो** हस्त्यश्वरथपत्तिलक्षणं चतुरङ्गबलम् । **मित्राणि** सहज-कृत्रिमप्राकृतानि, **एताः** स्वाम्याद्याः राज्यस्य **प्रकृतयो** मूलकारणानि । एवं **राज्यं सप्ताङ्गमुच्यते** ॥ ३५३ ॥

**तदवाप्य नृपो दण्डं दुर्वृत्तेषु निपातयेत् ।**
**धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितः पुरा ॥ ३५४ ॥**

एवंविधं राज्यं **प्राप्य दुर्वृत्तेषु** वञ्चकशठधूर्तपरदारपरद्रव्यापहारिहिंस-केषु **नृपो दण्डं पातयेत्** प्रयोजयेत् हि यस्माद्धर्म एव **दण्डरूपेण पूर्वं** ब्रह्मणा **निर्मितः** । तस्य च दण्ड इति यौगिकी संज्ञा—'दण्डो दमनादित्या-हुस्तेनादान्तान्दमयेत्' ( ११।१२८ ) इत्यादिगौतमस्मरणात् ॥ ३५४ ॥

**स नेतुं न्यायतो[4]ऽशक्यो लुब्धेनाकृतबुद्धिना[5] ।**
**सत्यसंधेन शुचिना सुसहायेन धीमता ॥ ३५५ ॥**

स पूर्वोक्तो दण्डो **लुब्धेन** कृपणे**नाकृतबुद्धिना** चञ्चलबुद्धिना **न्यायतो** ऽनुसारेण **नेतुं** प्रयोक्तुं **शक्यो न भवति** । कीदृशेन तर्हि शक्य इत्याह **सत्यसंधेन**ाप्रतारकेण । **शुचिना** जितारिषड्वर्गेण । **सुसहायेन** पूर्वोक्त-

---

टिप्प०—1 आचाराध्याये विवृतमेतत्सविस्तरं ३२१ तमपद्यटिप्पन्याम् ।

---

पाठा०—१ लाभेषु A. (=हिरण्य-भू-मित्रलाभानां मध्ये). २ तत्प्राप्तौ ३ स्वाम्यमात्यौ A. ४ न्यायतः शक्यो A. (=न्यायतो यथाशास्त्रं नेतुं शक्यः). ५ ऽलुब्धेन कृतबुद्धिना A. (=अलुब्धेन न्यायधनव्ययका-कृतबुद्धिना लब्धप्रज्ञेन).

सहायसहितेन । धीमता नयानयकुशलेन स दण्डो न्यायतो नेतुं शक्यः ॥ ३५५ ॥

यथाशास्त्रं प्रयुक्तः सन् सदेवासुरमानवम्[1] ।
जगदानन्दयेत्सर्वमन्यथा तत्प्रकोपयेत्[2] ॥ ३५६ ॥

स दण्डः शास्त्रोक्तमार्गेण प्रयुज्यमानः सन् देवासु सहितं इदं सर्वं जगदानन्दयेत् हर्षयेत् । अन्यथा शास्त्रातिक्र श्चेज्जगत्प्रकोपयेत् ॥ ३५६ ॥

न केवलमधर्मदण्डेन जगत्प्रकोपः[3], अपि तु प्रयोक्तुर्दृष्टादृष्टहानिरपी

अधर्मदण्डनं स्वर्गकीर्तिलोकविनाशनम्[4] ।
सम्यक्तु दण्डनं राज्ञः स्वर्गकीर्तिजयावहम् ॥ ३

यः पुनः शास्त्रातिक्रमेण लोभादिना दण्डः कृतः स पापहेतु कीर्तिं लोकांश्च विनाशयति । शास्त्रोक्तमार्गेण तु कृतो[5] त्स्वर्गकीर्तिजयानां हेतुर्भवति ॥ ३५७ ॥

अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा ।
नादण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात् ॥

अर्घ्योऽर्घार्हः आचार्यादिः । शेषः प्रसिद्धः । एते भ्रातृसुतादयो र्माच्चलिता दण्ड्याः, किमुतान्ये । यतः स्वधर्माच्चलितः अदण्ड्यः राज्ञः कोऽपि नास्ति । एतच्च मातापित्रादिव्यतिरेकेण । तथा च —'अदण्ड्यौ मातापितरौ स्नातकपुरोहितपरिव्राजक[6]वानप्रस्थाः श्रुत चारवन्तस्ते हि धर्माधिकारिणः' इति ॥ ३५८ ॥

यो दण्ड्यान्दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत् ।
इष्टं स्यात्क्रतुभिस्तेन समाप्तवरदक्षिणैः ॥ ३५९ ॥

किंच, यस्तु राजा दण्ड्यान् स्वधर्मचलनादिना दण्डयोग्यान् शास्त्रदृष्टेन मार्गेण धिग्धनदण्डादिना दण्डयति, वध्यान्वधार्हान् तेन राज्ञा भूरिदक्षिणैः क्रतुभिरिष्टं भवति । बहुदक्षिणक्रतुफलं त्यर्थः । न च फलश्रवणाद्दण्डप्रणयनं काम्यमिति मन्तव्यम्; अकरणे

टिप्प०—1 तत् स्वल्पापराधविषयम्, न सर्वात्मना दण्डाभावाभिप्रा एव दक्षः—'परिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति । श्वपादेनांकयि शीघ्रं विवासयेत्' इति ।

पाठा०—१ ऽसुरमानुषम् क. २ तु प्रकोपयेत् A. ३ प्रकोपन ४ स्वर्गं कीर्तिं लोकांश्च नाशयेत् क. ५ कृतः सोऽपापहेतुत्वा ६ परिव्राजकपुरोहित ख.

रणात्। यथाह वसिष्ठः (१९।४०-४४)—'दण्ड्योत्सर्गे राजैकरात्रमुपवसेत्', रात्रं पुरोहितः', 'कृच्छ्रमदण्ड्यदण्डने पुरोहितः', 'त्रिरात्रं राजा' इति ३५९ दुष्टे सम्यग्दण्डः प्रयोक्तव्यः' (आ० ३५४) इत्युक्तं, दुष्टपरिज्ञानं च व्यवहारदर्शन-तरेण न भवतीति तत्परिज्ञानाय व्यवहारदर्शनमहरहः स्वयं कर्तव्यमित्याह—

**इति संचिन्त्य नृपतिः क्रतुतुल्यफलं पृथक् ।**
**व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम् ॥ ३६० ॥**

इत्येवमुक्तप्रकारेण **क्रतुतुल्यं फलं** दण्ड्यदण्डने, स्वर्गादिनाशं चादण्ड्य-डने सम्यग्विचिन्त्य पृथक्पृथग्वर्णादिक्रमेण, **सभ्यै**र्वक्ष्यमाणलक्षणैः **परि-**:, प्रतिदिनं **व्यवहारा**न्वक्ष्यमाणमार्गेण दुष्टादुष्टपरिज्ञानार्थं **राजा स्वयं** ॥ ३येत् ॥ ३६० ॥

**कुलानि जातीः श्रेणीश्च गणाञ्जानपदानपि ।**
**स्वधर्माच्चलितान्राजा विनीय स्थापयेत्पथि ॥ ३६१ ॥**

**कुलानि** ब्राह्मणादीनाम्, **जातयो** मूर्धावसिक्तप्रभृतयः, **श्रेणय**स्ताम्बूलि-दीनाम्, **गणा**[1] हेलावुकादीनाम्, **जानपदाः** कारुकादयः, एतान्**स्वधर्मा-**लितान्प्रच्युतान् **राजा** यथापराधं **विनीय** दण्डयित्वा **पथि** स्वधर्मे **पयेत्**। 'दण्डं दुर्वृत्तेषु निपातयेत्' (आ० ३५४) इत्युक्तं, स च दण्डो धः—शारीरोऽर्थदण्डश्चेति । यथाह नारदः—'शारीरश्चार्थदण्डश्च दण्डो हि धः स्मृतः । शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्तितः ॥ काकिण्यादिस्त्वर्थ-ः सर्वस्वान्तस्तथैव च ॥' इति । द्विविधोऽप्यपराधानुसारेणानेकधा भवति । स—'शारीरो दशधा प्रोक्तो ह्यर्थदण्डस्त्वनेकधा' इति ॥ ३६१ ॥

तत्र कृष्णल[3]माषसुवर्णपलादिशब्दैरर्थदण्डा वक्तव्याः, ते च प्रतिदेशं भिन्नपरि-र्था इत्येकरूपापराधेऽपि देशभेदेन न्यूनाधिकदण्डो मा भूदिति कृष्णलादि-नां नियतपरिमाणविषयत्वं दण्डव्यवहारे दर्शयितुमाह—

**जालसूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम् ।**
**तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ॥ ३६२ ॥**

टिप्प०—1 हेलावुका अश्वव्यवहारिणः बाल०। गणान् मठब्राह्मणादीन्—अप०। च–२० कपर्दिन्यः=एका काकिणी,–'पै' इति नामकं ताम्रनिष्कम्। 3 सुवर्णोन्मा-दिसुक्तं भवति– ८ त्रसरेणवः=एका लिक्षा, ३ लिक्षाः=एको राजसर्षपः, ३ राजसर्षपाः= गौरसर्षपः, ६ गौरसर्षपाः=एको यवः, ३ यवाः=एकः कृष्णलः, ५ कृष्णलाः= माषः, १६ माषाः=एकः सुवर्णः, ४–५ सुवर्णाः=एकं पलम्। उपर्युक्ताः सर्षपा वा मध्यमप्रमाणा ग्राह्याः–न सूक्ष्माः, नापि स्थूला इत्यत्रावधेयम्।

पाठा०—१ वक्ष्यमाणधर्मेण क. २ काठिन्यादि.

गौरस्तु ते त्रयः षट् ते यवो मध्यस्तु ते त्रयः।
कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश ॥ ३
पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम् ।

जालकान्तरप्रविष्टादित्यरश्मिस्थितं यद्रजस्तत् त्रसरेणुरि श्वरादिभिस्तत्त्वदर्शिभिः । ते च त्रसरेणवोऽष्टौ लिक्षा स्वेदजयूका लिक्षास्तिस्रो राजसर्षपो राजिका । ते राजसर्षपास्त्रयो सिद्धार्थः । गौरसर्षपाः षड् यवो मध्यः मध्यमः, न स्थूलो न एतेन गौरसर्षपा अपि मध्यमा इति गम्यते । तथा राजसर्षपा अपि शब्दादेव । सर्षपादिशब्दाः न केवलमुन्मानवचनाः किंतु तदुन्मि इति गम्यते, यथा प्रस्थपरिमिता यवाः प्रस्थ उच्यते । एवं सर्षपाद्यु सर्षपादिशब्दैः । सर्षपादिशब्दानां च केवलोन्मानवचनत्वे त्रसरेण न्मातुमशक्यत्वात्तद्वारेण कृष्णलादिव्यवहारो न स्यात् । तत्र स्थूल स्थूलतम-सूक्ष्म-सूक्ष्मतर-सूक्ष्मतम-मध्यसर्षपाद्युन्मानभेदेन प्रतिदेशं स्थिते दण्डव्यवहारे मध्य इति नियम्यते । ते मध्यमा यवास्त्रय एकः ते कृष्णलाः पञ्चैको माषः । ते माषाः षोडशैकः सुवर्णः । श्चत्वारः पलमिति संज्ञाः कथिता इति । पञ्च वापि पलं प्रकी दादिभिः । तत्र स्थूलैस्त्रिभिर्यवैः कृष्णलपरिकल्पनायां व्यावहारिकनिष्क शांशः कृष्णलो भवति । तैः पञ्चभिर्माषः । माषैः षोडशभिः सुवर्ण व्यावहारिकैः पञ्चभिर्निष्कैरेकः सुवर्णो भवति । ते चत्वारः पलमिति। विंशतिः पलम् । यदा तु सूक्ष्मैस्त्रिभिर्यवैः कृष्णलः परिकल्प्यते तदा कनिष्कस्य द्वात्रिंशत्तमो भागः कृष्णलो भवति । तस्मिन्पक्षे सुवर्णः स द्वयं भवति । पलं च दशनिष्कम् । यदा तु मध्यमयवैः कृष्णलपरिक निष्कस्य विंशतितमो भागः कृष्णलः, सुवर्णश्चतुर्निष्कः, षोडशनिष्कं पल पञ्चसुवर्णं पलमिति । पक्षे विंशतिनिष्कं पलम् । एवमन्यदपि निष्कस्य भागः कृष्णलः, द्विनिष्कः सुवर्णोऽष्टनिष्कं पलमित्यादिलोकव्यवहारानुसारे सूत्रादूहनीयम् ॥ ३६२–३६३ ॥–

एवं सुवर्णस्योन्मानं प्रतिपाद्येदानीं रजतस्याह[1]—

द्वे कृष्णले रूप्यमाषो[3] धरणं षोडशैव ते ॥ ३६४

टिप्प०—1 रजतस्योन्मानं चेत्थम्–२ कृष्णलौ एको माषः, १६ धरणम् (पुराणम्) १०, पुराणानि धरणानि एकं शतमानं पलम्, ४ निष्कम् इति ।

पाठा०—१ मध्यस्त्रयस्तु ते A. २ रेणूनामुपसंहृत्य क. ३ गौर

**शतमानं तु दशभिर्धरणैः पलमेव तु ।**
**निष्कं सुवर्णाश्चत्वारः**

कृष्णले पूर्वोक्ते, **रूप्यमाषो** रूप्यसंबन्धी माषः । **ते** रूप्यमाषाः दश **धरणम्** । 'पुराण' इत्यस्यैव संज्ञान्तरम्; 'ते षोडश स्याद्धरणं पुराणं राजतः' इति (८।१३६) मनुस्मरणात् । **दशभिर्धरणैः शतमानं** पलमिति चाभिधीयते । पूर्वोक्ताश्चत्वारः **सुवर्णा** एको राजतो **निष्को** भवति ॥ ३६४ ॥

इदानीं ताम्रस्योन्मानमाह[1]—

**कार्षिकस्ताम्रिकः पणः ॥ ३६५ ॥**

पलस्य चतुर्थोऽशः कर्ष इति लोकप्रसिद्धः । कर्षेणोन्मितः **कार्षिकः** । ताम्रस्य विकार**स्ताम्रिकः** । कर्षसंमितस्ताम्रविकारः **पण**संज्ञो भवति, कार्षापणश्च; 'कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः' इति (८।१३६) मनुस्मरणात् । पञ्चसुवर्णपलपक्षे विंशतिमाषः पणो भवति । तथा सति—'माषो विंशतिमो भागः पणस्य परिकीर्तितः' इत्यादिव्यवहारः सिद्धो भवति । चतुःसुवर्णपलपक्षे तु षोडशमाषः पणो भवति । अस्मिंश्च पक्षे सुवर्ण-कार्षापण-पणशब्दानां समानार्थत्वेऽपि पण-कार्षापणशब्दौ ताम्रविषयावेव । एवं तावद्धेमरूप्यताम्राणामुन्मानमुक्तम्; दण्डव्यवहारोपयोगित्वात् । कांस्यरीतिकादीनामपि लोकव्यवहारप्रसिद्धानामेवोन्मानं द्रष्टव्यम् ॥ ३६५ ॥

इदानीं दण्डपरिभाषामाह—

**साशीतिपणसाहस्रो दण्ड उत्तमसाहसः ।**
**तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः ॥ ३६६ ॥**

पणानां सहस्रं पणसहस्रम्, तत्परिमाणमस्येति **पणसाहस्रः** । अशीत्या सह वर्तत इति **साशीतिः** । अशीत्यधिकपणसहस्रपरिमितो यो दण्डः स **'उत्तमसाहस'**संज्ञो वेदितव्यः । **तदर्धं मध्यमः** तस्य साशीतिपणसहस्रस्यार्धं चत्वारिंशदधिकपणपञ्चशतपरिमितो दण्डो **'मध्यमसाहस'**संज्ञः । **तदर्धमधमः** तस्य चत्वारिंशदधिकपञ्चशतपणस्यार्धं सप्तत्यधिकपणशतद्वयपरिमितो दण्डः **'अधमसाहस'**संज्ञः **स्मृत** उक्तो मन्वादिभिः । यत्तु—'पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः । मध्यमः पञ्च विज्ञेयः सहस्रं चैव चोत्तमः' इति (८।१३८) मनुनोक्तं तत्पक्षान्तरममतिपूर्वापराधविषयं द्रष्टव्यम् ॥ ३६६ ॥

---

**टिप्प०—1** ताम्रस्योन्मानं चेत्थम्—सुवर्णरजतयोः ¼ पलं एकः 'कर्षः'; ('पण'—'कार्षापण' इत्यपरनामकः), १०८० पणाः 'उत्तमसाहस'दण्डः, ५४० पणाः 'मध्यमसाहस'दण्डः, २७० पणाः 'अधमसाहस'दण्डः ('प्रथमसाहस' इत्यपरनामा) इति ।

दण्डभेदानाह—

**धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा ।**
**योज्या व्यस्ताः समस्ता वा ह्यपराधवशादिमे ॥ ३**

**धिग्दण्डो** धिग्धिगिति कुत्सनम्, **वाग्दण्डस्तु** परुषशापव धनदण्डो धनापहारात्मकः, **वधदण्डः** शारीरोऽवरोधादिजीविता चतुर्विधा दण्डाः **व्यस्ता** एकैकशः, **समस्ताः** द्वित्राः त्रिचतुरो वाऽप **सारेण प्रयोक्तव्याः** । उक्तक्रमेण पूर्वपूर्वासाध्ये उत्तर उत्तरः प्र यथाह मनुः ( ८।१२९ )—'धिग्दण्डं[1] प्रथमं कुर्याद्वाग्दण्डं तदनन्तरम् । धनदण्डं तु वधदण्डमतः परम् ॥' इति ॥ ३६७ ॥

दण्डव्यवस्थानिमित्तान्याह—

**ज्ञात्वाऽपराधं देशं च कालं बलमथापि वा ।**
**वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत् ॥ ३**

**यथापराधं ज्ञात्वा** तदनुसारेण दण्डप्रणयनं कुर्वीत । एवं देश कर्मवित्तानि ज्ञात्वा तदनुसारेण **दण्ड्येषु** दण्डार्हेषु **दण्डप्रणयनं** तथा बुद्धिपूर्वाबुद्धिपूर्वसकृदावृत्त्यनुसारेण च । यद्यपि राजानमधिकृत्यायं कलाप उक्तस्तथापि वर्णान्तरस्यापि विषयमण्डलादिपरिपालनाधिकृतस्य वेदितव्यः । 'राजधर्मान्प्रवक्ष्यामि यथावृत्तो भवेन्नृपः' ( मनु. ७।१ ) इत्य नृपग्रहणात्करग्रहणस्य रक्षार्थत्वात्, रक्षणस्य च दण्डप्रणयनायत्तत्वादिति

इति श्रीपद्मनाभभट्टोपाध्यायात्मजस्य श्रीमत्परमहंसपरिव्राजकविज्ञाने कस्य कृतौ ऋजुमिताक्षरायां याज्ञवल्क्यधर्मशास्त्रविवृतौ सदाचारः प्रथमा

उत्तमोपपदस्येयं शिष्यस्य कृतिरात्मनः ।
धर्मशास्त्रस्य विवृतिर्विज्ञानेश्वरयोगिनः ॥

## — अस्मिन्नध्याये प्रकरणानि —



याज्ञवल्क्यमुनिशास्त्रगतेयं विवृतिर्न कस्य विहिता विदुषः ।
प्रमिताक्षरापि विपुलार्थवती परिषिञ्चति श्रवणयोरमृतम् ॥ १

---

टिप्प०—1 'वाग्दण्डं प्रथमं कुर्याद्धिग्दण्डं तदनन्तरम्' इति मुद्रिते पा

# व्यवहाराध्यायः ।

## साधारणव्यवहारमातृकाप्रकरणम् १

अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनं परमो धर्मः । तच्च दुष्टनिग्रहमन्तरेण न संभवति । दुष्टपरिज्ञानं च न व्यवहारदर्शनमन्तरेण संभवति । तद्व्यवहारदर्शनमहरहः कर्तव्यमित्युक्तं (आ० ३६०)—'व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम्' इति । स च व्यवहारः कीदृशः, कतिविधः, कथं चेतीतिकर्तव्यताकलापो नाभिहितः, तदभिधानाय द्वितीयोऽध्यायः प्रारभ्यते—

**व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।**
**धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ १ ॥**

**व्यवहारानिति** । अन्यविरोधेन स्वात्मसंबन्धितया कथनं **व्यवहारः** । यथा कश्चिदिदं क्षेत्रादि मदीयमिति कथयति, अन्योऽपि तद्विरोधेन मदीयमिति । तस्यानेकविधत्वं दर्शयति बहुवचनेन । **नृप** इति न क्षत्रियमात्रस्यायं धर्मः किंतु प्रजापालनाधिकृतस्यान्यस्यापीति दर्शयति । **पश्येदिति** पूर्वोक्तस्यानुवादो धर्मविशेषविधानार्थः । **विद्वद्भिर्**वेदव्याकरणादिधर्मशास्त्राभिज्ञैः । **ब्राह्मणैर्**न क्षत्रियादिभिः । 'ब्राह्मणैः सह' इति तृतीयानिर्देशादेषामप्राधान्यम् । 'सहयुक्तेऽप्रधाने' (पा. २।३।१९) इति स्मरणात् । अतश्चादर्शनेऽन्यथादर्शने वा राज्ञो दोषो न ब्राह्मणानाम् । यथाह मनुः (८।१२८)—'अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चैव गच्छति ॥' इति । कथम्? **धर्मशास्त्रानुसारेण**, नार्थशास्त्रानुसारेण[2] । देशादिसमयधर्मस्यापि[3] धर्मशास्त्राविरुद्धस्य धर्मशास्त्रविषयत्वान्न पृथगुपादानम् । तथा च वक्ष्यति (व्य० १८६)—'निजधर्माविरोधेन यस्तु सामयिको[4] भवेत् । सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥' इति **क्रोधलोभविवर्जित** इति । 'धर्मशास्त्रानुसारेण' इति सिद्धे 'क्रोधलोभविवर्जितः' इति वचनमादरार्थम् । क्रोधोऽमर्षः, लोभो लिप्सातिशयः ॥ १ ॥

टिप्प०—1 'विप्रतिपद्यमाननरान्तरगताज्ञाताधर्मज्ञापनानुकूलो व्यापारो व्यवहारः । वादिप्रतिवादिकर्तृकः संभवद्भोगसाक्षिप्रमाणको विरोधकोटिव्यवस्थापनानुकूलो व्यापारो वा सः । संप्रतिपत्त्युत्तरे तु व्यवहारपदप्रयोगो भाक्त इति मदनरत्ने' इति व्यवहारमयूखः । 'वि नानार्थेऽव संदेहे हरणं हार उच्यते । नाना संदेहहरणाद्व्यवहार इति स्मृतः ॥' इति कातीयम्. 2 अर्थशास्त्रं नीतिशास्त्रं औशनसादिकम्. 3 देशेति । आदिना गृहादिपरिग्रहः । पारिभाषिकधर्मेण व्यवस्थानं समयः. 4 सामयिको धर्मो यावत्पथिकं जनं देयमसदरातिमण्डलं तुरङ्गादयो न प्रस्थापनीया इत्येवंरूपः.

पाठा०—१ दर्शनेन विनेति व्यवहारदर्शनं ग. २ चाधिगच्छति ख.

सभ्यांश्चाह—

**श्रुताध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः ।**
**राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥**

किंच, **श्रुताध्ययनसंपन्नाः** श्रुतेन मीमांसाव्याकरणादिश्रवणेन अ
च वेदाध्ययनेन संपन्नाः, **धर्मज्ञाः** धर्मशास्त्रज्ञाः, **सत्यवादिनः** स
शीलाः, **रिपौ मित्रे च ये समाः** रागद्वेषादिरहिताः, एवंभूताः स
सभायां संसदि यथा सीदन्त्युपविशन्ति तथा दानमानसत्कारैः **राज्ञा** क
यद्यपि 'श्रुताध्ययनसंपन्नाः' इत्यविशेषेणोक्तं, तथापि ब्राह्मणा एव । य
त्यायनः—'स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्[1]द्विजोत्तमैः । धर्मशास्त्रार्थ
शास्त्रविशारदैः ॥' इति । ते च त्रयः कर्तव्याः; बहुवचनस्यार्थवत्त्वात् '
निषीदन्ति विप्रा वेदविदस्त्रयः' इति ( ८।११ ) मनुस्मरणाच्च । बृहस्पति
पञ्च त्रयो वा सभासदो भवन्तीत्याह—'लोकवेदज्ञधर्मज्ञाः सप्त पञ्च
वा । यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ॥' ( १।११ ) इ
'ब्राह्मणैः सह' इति पूर्वश्लोकोक्तानां ब्राह्मणानां 'श्रुताध्ययनसंपन्नाः' इत्या
षणमिति मन्तव्यम्; तृतीयाप्रथमान्तनिर्दिष्टानां विशेषणविशेष्यभावा
'विद्वद्भिः' इत्यनेन पुनरुक्तिप्रसङ्गाच्च । तथा च कात्यायनेन ब्राह्मणानां
च स्पष्टं भेदो दर्शितः[1]—'सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः ।
प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः ॥' इति । तत्र ब्राह्मणा अनियुक्ताः, स
नियुक्ता इति भेदः । अत एवोक्तम्—'नियुक्तो वाऽनियुक्तो वा धर्मज्ञो व
इति । तत्र नियुक्तानां यथावस्थितार्थकथनेऽपि यदि राजाऽन्यथा करोति
निवारणीयः, अन्यथा दोषः । उक्तं च कात्यायनेन—'अन्यायेनापि त
येऽनुयान्ति सभासदः । तेऽपि तद्भागिनस्तस्माद्बोधनीयः स तैर्नृपः ॥'
अनियुक्तानां पुनरन्यथाभिधानेऽनभिधाने वा दोषो नतु राज्ञोऽनिवारणे
वा न प्रवेष्टव्या[2] वक्तव्यं वा समञ्जसम् । अब्रुवन्विब्रुवन्वापि नरो भवति कि
इति ( ८।१३ ) मनुस्मरणात् 'रिपौ मित्रे च' इति चकाराल्लोकरञ्जनार्थं
वणिग्भिरप्यधिष्ठितं सदः कर्तव्यम् । यथाह कात्यायनः—'कुलशीलवयो
वद्भिरमत्सरैः । वणिग्भिः स्यात्कतिपयैः कुलभूतैर्[2]अधिष्ठितम् ॥' इति ॥

'व्यवहारान्नृपः पश्येत्' ( व्य० १ ) इत्युक्तं, तत्रानुकल्पमाह—

**अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु ।**
**सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥**

कार्यान्तरैर्[3]व्याकुलतया **व्यवहारानपश्यता नृपेण** पूर्वोक्तैः सभ्

टिप्प०—1 मौलैः सेवकत्वेन पितृपितामहादिपरम्परायातैः. 2 कु
परायातैश्च.

पाठा०—१ च भेदः स्पष्टो ग. २ सभां वा न प्रवेष्टव्यं ग. ३
तया ख. ग.

धर्मवित् सर्वान्धर्मशास्त्रोक्तान्सामयिकांश्च धर्मान्वेत्ति विचारयतीति **सर्वधर्मवित् ब्राह्मणो** न क्षत्रियादिर्नियोक्तव्यो व्यवहारदर्शने । तं च कात्यायनोक्तगुणविशिष्टं कुर्यात् । यथाह—'दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम् । परत्रभीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितम् ॥' इति । एवंभूतब्राह्मणासंभवे क्षत्रियं वा नियुञ्जीत, न शूद्रम् । यथाह कात्यायनः—'ब्राह्मणो यत्र न स्यात्तु क्षत्रियं तत्र योजयेत् । वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥' इति । नारदेन त्वयमेव मुख्यो दर्शितः—'धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः । समाहितमतिः पश्येद्व्यवहाराननुक्रमात् ॥' इति । प्राड्विवाकमते स्थितो न स्वमते स्थितः, राजा चारचक्षुषा परसैन्यं पश्यतीतिवत् । तस्य चेयं यौगिकी संज्ञा । अर्थिप्रत्यर्थिनौ पृच्छतीति प्राट्, तयोर्वचनं विरुद्धमविरुद्धं च सभ्यैः सह विविनक्ति विवेचयति वेति विवाकः, प्राट् चासौ विवाकश्च प्राड्विवाकः । उक्तं च—'विवादानुगतं पृष्ट्वा ससभ्यस्तत्प्रयत्नतः । विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः ॥' इति ॥ ३ ॥

प्राड्विवाकादयः सभ्या यदि रागादिना स्मृत्यपेतं व्यवहारं विचारयन्ति तदा राज्ञा किं कर्तव्यमित्यत आह—

**रागाल्लोभाद्भयाद्वाऽपि स्मृत्यपेतादिकारिणः ।**
**सभ्याः पृथक्पृथग्दण्ड्या विवादाद्द्विगुणं दमम् ॥ ४ ॥**

अपि च, पूर्वोक्ताः **सभ्या** रजसो निरङ्कुशत्वेन तदभिभूता **रागा**त्स्नेहातिशयात् **लोभा**ल्लिप्सातिशयाद्**भया**त्संत्रासात्स्मृत्यपेतं स्मृतिविरुद्धं, 'आदि'शब्दादाचारापेतं कुर्वन्तः **पृथक्पृथगे**कैकशो **विवादा**द्विवादपराजयनिमित्ताद्दमा**द्द्विगुणं दण्ड्याः**, न पुनर्विवादास्पदीभूताद्द्रव्यात् । तथा सति स्त्रीसंग्रहणादिषु दण्डाभावप्रसङ्गः । रागलोभभयानामुपादानं रागादिष्वेव द्विगुणो दमो नाज्ञानमोहादिष्विति नियमार्थम् ॥ नच 'राजा सर्वस्येष्टे ब्राह्मणवर्जम्' ( १।१।१ ) इति गौतमवचनान्न ब्राह्मणा दण्ड्या इति मन्तव्यम्; तस्य प्रशंसार्थत्वात् ॥ यत्तु 'षड्भिः परिहार्यो राज्ञाऽवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्च' (गौ. ८।१२–१३ ) इति, तदपि 'स एष बहुश्रुतो भवति लोकवेदवेदाङ्गविद्वाकोवाक्येतिहासपुराणकुशलस्तदपेक्षस्तद्वृत्तिश्चाष्टचत्वारिंशत्संस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतः षट्सु वा सामयाचारिकेष्वभिविनीतः' ( गौ. ८।४–११ ) इति, प्रतिपादितबहुश्रुतविषयं; न ब्राह्मणमात्रविषयम् ॥ ४ ॥

टिप्प०—1 बृहस्पतिस्तु—'विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च । नयपूर्वं वदति प्राड्विवाकस्ततः स्मृतः ॥' इति व्यवहारमयूखे । 2 वाकोवाक्यं उक्तिप्रत्युक्तिमद्वाक्यम्.

पाठा०—१ धर्मान् शास्त्रोक्तान् ग. २ ब्राह्मण एव. ३ विवक्ति विवेचयति वा ग. ४ न ब्राह्मणो दण्ड्य इति क. ग. ५ राज्ञा वध्यश्चावध्यश्च. ६ वेदाङ्गविद्वाक्येतिहास ग.

व्यवहारविषयमाह—

स्मृत्याचारव्यपेतेन मार्गेणाऽऽधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ ५ ॥

**धर्मशास्त्र**[1]**समाचारविरुद्धेन मार्गेण परैराधर्षितो**ऽभिभू प्राड्विवाकाय वा **आवेदयति** विज्ञापयति **चेद्**यदि, तदावेद्यमानं प्रतिज्ञोत्तरसंशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मको **व्यवहार** विषयः । तस्य चेदं सामान्यलक्षणम् । स च द्विविधः—शङ्काभियोग गश्चेति । यथाह नारदः (१।२७)—'अभियोगस्तु विज्ञेयः शङ्का गतः । शङ्काऽसतां तु संसर्गात्तत्त्वं होढाभिदर्शनात् ॥' इति । हो लिङ्ग[2]मिति यावत् । तेन दर्शनं, साक्षाद्वा दर्शनं होढाभिदर्शनं तस्मा भियोगोऽपि द्विविधः—प्रतिषेधात्मको विध्यात्मकश्चेति । यथा-'म दिकं गृहीत्वा न प्रयच्छति', 'क्षेत्रादिकं ममायमपहरति' इति च । त यनेन—'न्याय्यं स्वं नेच्छते कर्तुमन्याय्यं वा करोति यः' इति । स शधा भिद्यते । यथाह मनुः (८।४-७)—'तेषामाद्य[3]मृणादानं नि विक्रयः । संभूय च समुत्थानं दत्तस्यानपकर्म च ॥ वेतन[4]स्यैव चाऽदा दश्च व्यतिक्रमः । क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥ सीमावि[5] पारुष्ये दण्डवाचिके । स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च ॥ विभागश्च द्यूतमाह्वय एव च । पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥' एतान्यपि साध्यभेदेन पुनर्बहुत्वं गतानि । यथाह नारदः (१।२०) मेव प्रभेदोऽन्यः शतमष्टोत्तरं भवेत्[2] । क्रियाभेदान्मनुष्याणां शतशा द्यते ॥' इति ॥ 'आवेदयति चेद्राज्ञे' इत्यनेन स्वयमेवागत्यावेदयति, न तस्तत्पुरुषप्रेरितो वेति दर्शयति । यथाह मनुः (८।४३)—'नोत्पा कार्यं राजा वाप्यस्य पूरुषः । नच प्रापितमन्येन ग्रसेतार्थं कथंचन ॥'

**टिप्प०**—1 लुप्यत इति लोप्त्रं चौर्यधनम्–**बाल०** । 2 लिङ्गं चिह्नमित्यर्थः–**बाल०** । 3 ऋणादानं ऋणस्य न दानमदानम्, निक्षेपः सिन्नर्पणम्, अस्वामिना कृतो विक्रयः, संभूयसमुत्थानं अनेकैर्मिलित्वा वाणिज्याद्युद्यमः क्रियते. दत्तस्यानपकर्म अप्रत्यर्पणम्. 4 कर्मकरस्य भृतेरदान कृतव्यवस्थाया अतिक्रमः, अनुशयः क्रयविक्रये च कृते पश्चात्तापाद्विप्रतिपत्ति पशुपालयोर्विवादः. 5 ग्रामसीमाविप्रतिपत्तिः, वाक्पारुष्यमाक्रोशनादि, ताडनादि, स्तेयं निह्नवेन धनग्रहणम्, साहसं प्रसह्य धनहरणादि, स्त्रिय संपर्कः. 6 स्त्रीसहितस्य पुंसो धर्मे व्यवस्था, विभागः पैतृकादिधनस्य, द्यू क्रीडा, पणव्यवस्थापनपूर्वकं पक्षिमेषादिप्राणियोधनं, समाह्वयस्य प्राणिद्यूत वान्तरविशेषत्वादष्टादशसंख्योपपत्तिः.

पाठा०—१ समयाचार. २ स्मृतम् घ.

ति परेण पराभ्यां परैरित्येकस्यैकेन द्वाभ्यां बहुभिर्वा व्यवहारो भवतीति
ति ॥ यत्पुनः—'एकस्य बहुभिः सार्धं स्त्रीणां प्रेष्यजनस्य च । अनादेयो
दो धर्मविद्भिरुदाहृतः ॥' इति नारद( कात्यायन? )वचनं, तद्भिन्नसा-
विषयम् । 'आवेदयति चेद्राज्ञे' इत्यनेनैव राज्ञा पृष्टो विनीतवेष आवेद-
आवेदितं च युक्तं चेन्मुद्रा[1]दिना प्रत्यर्थ्याह्वानमकल्पा[2]दीनां चानाह्वानमित्या-
सिद्धमिति नोक्तम् । स्मृत्यन्तरे तु स्पष्टार्थमुक्तम् । यथा 'काले कार्यार्थिनं
प्रणन्तं पुरतः स्थितम् । किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव ॥
कस्मिन्कदा कस्मात्पृच्छेदेवं सभागतम् । एवं पृष्टः स यद्ब्रूयात्स सभ्यैर्ब्रा-
सह ॥ विमृश्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम् । मुद्रां वा निक्षिपेत्त-
पुरुषं वा समादिशेत् ॥ [3]अकल्पबालस्थविरविषमस्थक्रियाकुलान् । [4]कार्याति-
व्यसनिनृपकार्योत्सवाकुलान् । मत्तो[5]न्मत्तप्रमत्तार्तान्भृत्यान्नाह्वानयेन्नृपः ॥ न
क्षां युवतिं कुले जातां प्रसूतिकाम् । सर्ववर्णोत्तमां कन्यां ता [6]ज्ञातिप्रभुकाः
: ॥ तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः । नि[7]ष्कुला याश्च पतिता-
सामाह्वानमिष्यते ॥ [8]कालं देशं च विज्ञाय कार्याणां च बलाबले । अकल्पादी-
शनैर्यानैराह्वानयेन्नृपः ॥ ज्ञात्वा[9]भियोगं येऽपि स्युर्वने प्रव्रजितादयः । तान-
नयेद्राजा गुरुकार्येष्वकोपयन् ॥' इति । [10]**आसेधव्यवस्था**प्यर्थसिद्धैव
देनोक्ता ( १।४७-५३ )—'वक्तव्येऽर्थे ह्यतिष्ठन्तमुत्क्रामन्तं च तद्वचः ।
धयेद्वि[11]वादार्थी यावदाह्वानदर्शनम् ॥ [12]स्थानासेधः कालकृतः प्रवासात्कर्मण-
। चतुर्विधः स्यादासेधो नासिद्धस्तं विलङ्घयेत् ॥ आसेधकाल [13]आसिद्ध
यो ऽतिवर्तते । स वि[14]नेयो ऽन्यथा[15]कुर्वन्नासेद्धा[16] दण्डभाग्भवेत् ॥ [17]नदीस-
कान्तारदुर्देशोपप्लवादिषु । आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात् ॥ निवें-

टिप्प०—1 'शिक्षा'परपर्यायगरुडादिचिह्नेन. 2 आधिव्याधिसहितादीनाम्. कल्पो व्याध्याद्यभिभूतः, विषमस्थ उत्पन्नसंकटः. 4 कार्यातिपाती कार्योल्लंघी. तो मादकद्रव्येण, उन्मत्तः उन्मादेन पञ्चविधेन वातपित्तश्लेष्मसन्निपातग्रहसंभवेनोप- प्रमत्तः सर्वदावधानहीनः. 6 ता हीनपक्षादयः ज्ञातिस्वामिका इत्यर्थः. 7 निष्कुलाः ना:. 8 एतत्प्रसङ्गादकल्पाद्याह्वाने पूर्वनिषिद्धेऽपि प्रतिप्रसवमाह—कालमिति । तत्र द्वयं शनैर्यानैरिति. 9 अभियोगोऽभिग्रहः आरोपस्तम्. 10 आसेधो राजाधिका- निरोधः. 11 विवादार्थी वादी, आसेधयेत्प्रत्यर्थिनं निरोधयेत्. 12 आसेध इति । तुर्विधः—१ प्रकृते अस्मात्प्रदेशान्न गन्तव्यमिति स्थानासेधः, २ आसन्ध्यं न गन्त- ति कालासेधः, ३ देशान्तरं प्रति न गन्तव्यमिति प्रवासासेधः, ४ असौ व्यापारो र्तव्य इति कर्मासेधः. 13 आसिद्धो निरुद्धः. 14 विनेयः शिक्षणीयः. 15 अन्यथा अनासेधकाले आसेधं कुर्वन्. 16 आसेद्धा आसेधकर्ता राजपूरुषः. 17 नासिद्धं येदित्यस्य प्रतिप्रसवमाह—नदीति.

पाठा०—१ पृच्छेत्प्रणतं क.

ष्टुकामो[1] रोगार्तो यियक्षुर्[2]व्यसने स्थितः । अभियुक्त[3]स्तथाऽन्येन राजकार्यो
गवां प्रचारे गोपालाः सस्यावापे कृषीवलाः । शिल्पिनश्चापि तत्काल[4]मा
विग्रहे[5] ॥' इति । आसेधो राजाज्ञयाऽवरोधः । अकल्पादयः[6] पुत्रादि
सुहृदं प्रेषयेयुः[१], नच ते परार्थवादिनः; 'यो न भ्राता नच पिता न पुत्रो
गकृत्[7] । परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन्[8] ॥' (२।२३)
वचनात् ॥ ५ ॥

प्रत्यर्थिनि मुद्रालेख्यपुरुषाणामन्यतमेनानीते किं कुर्यादित्यत आह—

**प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना ।**
**समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥ ६ ॥**

अर्थ्यते इत्यर्थः साध्यः, सोऽस्यास्तीत्यर्थी; तत्प्रतिपक्षः **प्रत्यर्थी**,
पुरतो **लेख्यं** लेखनीयम् । **यथा** येन प्रकारेण पूर्वमावेदनकाले
तथा, न पुनरन्यथा; अन्यथावादित्वेन व्यवहारस्य भङ्गप्रसङ्गात् ।—
क्रियाद्वेषी[9] नोपस्थाता[10] निरुत्तरः । आहूतः[२] प्रपलायी च हीनः पञ्चविधः
(नारदः २।३३) इति । आवेदनकाल एवार्तिवचनस्य लिखितत्वाद्
मनर्थकमित्यत आह—**समामासे**त्यादि । संवत्सरमासपक्षतिथि
अर्थिप्रत्यर्थि**नाम**ब्राह्मण**जात्यादिचिह्नितम्** । 'आदि'शब्देन द्रव्य
स्थानवेला[11]क्षमालिङ्गादीनि गृह्यन्ते ॥ यथोक्तम्—'अर्थवद्[12]धर्मसंयुक्तं परि
कुलम् । साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च ॥ प्रसिद्धमविरुद्धं च निश्चि
क्षमम्[३] । संक्षिप्तं निखिलार्थं[४] च देशकालाविरोधि च । वर्षर्तुमासपक्षाहो
प्रदेशवत् । स्थानावसथसाध्याख्याजात्याकारवयोयुतम् ॥ साध्यप्रमाणसं
त्मप्रत्यर्थिनामवत् । परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥ क्षमालिङ्गा
त्कथिताहर्तृदायकम् । यदावेदयते राज्ञे तद्भाषेत्यभिधीयते ॥' इति । भाषा
'पक्ष' इति नार्थान्तरम् । आवेदनसमये कार्यमात्रं लिखितं प्रत्यर्थिनोऽग्र

---

**टिप्प०**—1 निर्वेष्टुकाम आश्रमान्तरं गन्तुकामः, विवाहादावुद्यत
2 यियक्षुर्यष्टुमिच्छुः. 3 अभियुक्तो नियोजितः. 4 तत्कालं शिल्पकाले आयु
धजीविनो योद्धारः. 5 विग्रहे संग्रामे. 6 अकल्पादयः=आधिव्याधिपीडिताः
गकृदाज्ञाकारी. 8 विब्रुवन् व्यवहारेषु विरुद्धं विविधं विशेषेण वा ब्रुवन्. 9
कार्यद्वेषी. 10 नोपस्थाता समीपे न तिष्ठन्. 11 वेलेति दिनमध्येऽपि प्रात
रूपो वा कालविशेष इत्यर्थः. 12 एते पराशरमाधवीये–इति व्य० म० ।
अर्थवत्प्रयोजनवत्, धर्मसंयुक्तं धर्मो गुणः स्वल्पाक्षरत्वप्रभूतार्थवत्त्वादिकस्तेन
पूर्णमध्याहारानपेक्षम्, अनाकुलमसंदिग्धाक्षरं, साध्यवत् सिषाधयिषितार्थसहित
कपदं बहुव्रीहिगौणलाक्षणिकादिरहितं, प्राकृतार्थानुबन्धि पूर्वावेदितार्थानुरोधि.

---

**पाठा०**—१ प्रेषयन्ति ख; प्रेषयिष्यन्ति. २ आहुतव्यपला
३ साधने क्षमम् ख. ४ नियतार्थं ग.

सादिविशिष्टं लिख्यत इति विशेषः। संवत्सरविशेषणं यद्यपि सर्वव्यवहारेषु पयुज्यते, तथाप्याधिप्रतिग्रहक्रयेषु निर्णयार्थमुपयुज्यते; [1]आधौ प्रतिग्रहे क्रीते तु बलवत्तरा' इति वचनात्। अर्थव्यवहारोऽपि एकस्मिन्संवत्सरे यत्संख्याकं व्यं यतो येन गृहीतं प्रत्यर्पितं च पुनरन्यस्मिन्वत्सरे तद्द्रव्यं तत्संख्याकं तत- न गृहीतं, याच्यमानो यदि ब्रूयात्सत्यं गृहीतं प्रत्यर्पितं चेति। वत्सरान्तरे गृहीतं यर्पितं नास्मिन्वत्सरे इत्युपयुज्यते। एवं मासाद्यपि योज्यम्। देशस्थानादयः : स्थावरेष्वेवोपयुज्यन्ते—'देशश्चैव तथा स्थानं संनिवेशस्तथैव च। जातिः ासधिवासश्च प्रमाणं क्षेत्रनाम च॥ पितृ[2]पैतामहं चैव पूर्वराजानुकीर्तनम्। वरेषु विवादेषु दशैतानि निवेशयेत्॥ इति स्म[3]रणात्। **देशो** मध्यदेशादिः। नं वाराणस्यादि। **संनिवेशः** तत्रैव पूर्वापरदिग्विभागपरिच्छिन्नः सम्यङ्निविष्टो क्षेत्रादिः। **जातिः** अर्थिप्रत्यर्थिनोर्ब्राह्मणत्वादिः। **संज्ञा** च देवदत्तादिः। धिवासः समीपदेशनिवासी जनः। **प्रमाणं** निवर्तनादि भूपरिमाणम्। त्रनाम शालिक्षेत्रं क्रमुकक्षेत्रं [4]कृष्णभूमः पाण्डुभूमः इति। पितुः पितामहस्य नामार्थिप्रत्यर्थिनोः पूर्वेषां त्रयाणाम्। राज्ञां नामकीर्तनं चेति। समामासादीनां स्मिन् व्यवहारे यावदुपयुज्यते तत्र तावल्लेखनीयमिति तात्पर्यार्थः॥ एवं पक्ष- णे स्थिते पक्षलक्षणरहितानां पक्षवदवभासमानानां पक्षाभासत्वं सिद्धमेवेति श्वरेण न पृथक्पक्षाभासा उक्ताः। अन्यैस्तु विस्पष्टार्थ[5]मुक्ताः।—अप्रसिद्धं बाधं निरर्थं निष्प्रयोजनम्। असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत्॥' । **अप्रसिद्धं** 'मदीयं शशविषाणं गृहीत्वा न प्रयच्छति' इत्यादि। **निराबाधं** द्गृहदीपप्रकाशेनायं स्वगृहे व्यवहरतीत्यादि। **निरर्थं** अभिधेयरहितं कचटत- डदबेत्यादि। **निष्प्रयोजनं** यथा—अयं देवदत्तोऽस्मद्गृहसंनिधौ सुस्वरमधीत दि। **असाध्यं** यथा—अहं देवदत्तेन सभ्रूभङ्गमुपहसित इत्यादि। एतत्साध- मवादसाध्यम्। अल्पकालत्वान्न साक्षिसंभवो लिखितं दूरतोऽल्पत्वान्न दिव्य- । विरुद्धं यथाहं मूकेन शप्त इत्यादि। [7]**पुरराष्ट्रादिविरुद्धं** [8]वा—'राज्ञा र्जितो यश्च यश्च पौरविरोधकृत्। राष्ट्रस्य वा समस्तस्य [9]प्रकृतीनां तथैव च॥ ये वा ये पुरग्राममहाजनविरोधकाः। अनादेयास्तु ते सर्वे व्यवहाराः प्रकी-

टिप्प०—1 इदमग्रे स्फुटीभविष्यत्यसाधारणव्यवहारमातृकाप्रकरणे. 2 पितृ इति टीकं पृथक्पदं, पितुरिति पाठो वा. 3 इदं कात्यायनवचनमिति—परा० माध०। ष्णोदवपाण्डुल्यच्प्रत्ययो बहुव्रीहेः. 5 अत्र अप्रसिद्धादेः साधयितुमशक्यत्वादनिरा- म् इति ख. पुस्तके विशेषः. 6 पीडारहितमित्यर्थः. 7 विनिगमनाभावादाह—पुरेति. त्र 'एतेषां स्वभावेनैव निराकरणमिति न निराक्रियते। तत्र च अप्रसिद्धादीनां त्यर्थमुपादानं तदप्यनेकपदसंकीर्णस्य निराकरणं न क्रियते' इति क्वचिद्विशेषः. कृतीनां जनानां नगरस्थानाम्.

र्तिताः ॥' इति ॥ [1]यत्तु—'अनेकपदसंकीर्णः पूर्वपक्षो न सिद्ध्यति'
यद्यनेकवस्तुसंकीर्ण इत्युच्यते, तदा न दोषः; मदीयमनेन हिरण्यं
कादि वाऽपहृतमित्येवंविधस्यादुष्टत्वात् । ऋणादानादिपदसंकरे प
चेत्तदपि न । मदीया रूपका अनेन वृद्ध्या गृहीताः सुवर्णं चास
हृतम्, मदीयं क्षेत्रमयमपहरतीत्यादीनां पक्षत्वमिष्यत एव । किंतु
त्क्रमेण व्यवहारो न युगपदित्येतावत् ॥ यथाह कात्यायनः—
यत्कार्यं व्यवहारे सुनिश्चितम् । कामं तदपि गृह्णीयाद्राजा तत्त्वबु
इति । तस्मादनेकपदसंकीर्णः पूर्वपक्षो युगपन्न सिद्ध्यतीति तस्यार्थः ॥
णात्पुत्रपित्रादिग्रहणं तेषामेकार्थत्वात् । नियुक्तस्यापि नियोगेनैव ते
पात् ॥—'अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा । यो यस्य
तयोर्जयपराजयौ ॥' इति स्मरणात् नियुक्तजयपराजयौ मूलस्या
[4]एतच्च भूमौ फलके वा [5]पाण्डुलेखेन लिखित्वा [6]आवापोद्धारेण विशोधितं
निवेशयेत् ।—'पूर्वपक्षं [7]स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत् । पाण्डुले
ततः पत्रे विशोधितम् ॥' इति कात्यायनस्मरणात् । शोधनं च या
कर्तव्यं नातः परम् । अनवस्थाप्रसङ्गात् । अतएव नारदेनोक्तम्—'
वादं तु यावन्नोत्तरदर्शनम् । [8]अवष्टम्भस्योत्तरेण निवृत्तं शोधनं भवेत्
पूर्वपक्षमशोधयित्वैव यदोत्तरं दापयन्ति सभ्यास्तदा 'रागाल्लोभात्' इ
सभ्यान्दण्डयित्वा पुनः प्रतिज्ञापूर्वकं व्यवहारः प्रवर्तनीयो राज्ञेति ॥

एवं शोधितपत्रारूढे पूर्वपक्षे किं कर्तव्यमित्यत आह—

**श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसंनिधौ ।**

श्रुतो भाषार्थो येन प्रत्यर्थिनाऽसौ **श्रुतार्थः**, **तस्योत्तरं** पूर्वप
भवतीत्युत्तरं **लेख्यं** लेखनीयम् । **पूर्वावेदकस्यार्थिनः संनि**
उत्तरं च यत्पूर्वोक्तस्य निराकरणं तदुच्यते । यथाह—'पक्षस्य व्यापकं
दिग्धमनाकुलम् । अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ॥' इति
व्यापकं निराकरणसमर्थम् । सारं न्याय्यं न्यायादनपेतम् । असंदिग्धं
तम् । अनाकुलं पूर्वापराविरुद्धम् । अव्याख्यागम्यं अप्रसिद्धपदप्रयोगे

टिप्प०—1 अप्रसिद्धादीनां पक्षाभासत्वमिवानेकपदसंकीर्णपूर्वपक्षस्यापि अनेकैः पदैः संकीर्णो यः पूर्वपक्षः प्रतिज्ञा सा न सिद्ध्यति आभासरूपा भवति प्रतीतेस्तन्निराकरोति—यत्त्वित्यादिना. 2 तत्र पदशब्दः पद्यते ज्ञायते इति व्यु वस्तुपर उत ऋणादानादिरूपव्यवहारविषयपरः । तत्र न तावदाद्ये पक्षाभास तत्रेति. 3 बहुप्रतिज्ञं बहुपूर्वपक्षम्. 4 अर्थिवेदितमित्यर्थः. 5 पाण्डिति 'खडू' प्रसिद्धः. 6 आवापेति न्यूनाधिक्यपरिहाराय प्रक्षेपनिष्कासनाभ्यामित्यर्थः. 7 न तु छलादिना. 8 उत्तरेणावष्टम्भस्य प्रतिवद्धस्य पूर्ववादस्य शोधनं 9 उत्तरत्र अग्रे. 10 दुःश्लिष्टमसंबद्धम्, अश्लिष्टमित्यपि पाठः.

पाठा०—१ पुत्रपौत्रादीनां क.

क्तिसमासाध्याहाराभिधानेन वा अन्यदेशभाषाभिधानेन वा यद् व्याख्येयार्थं भवति तत्सदुत्तरम् ॥ तच्च चतुर्विधम्—संप्रतिपत्तिः, मिथ्या, प्रत्यवस्कन्दनं, पूर्वन्यायश्चेति । यथाह कात्यायनः—'सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा । पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधम् ॥' इति । तत्र सत्योत्तरं यथा—'रूपकशतं मह्यं धारयति' इत्युक्ते 'सत्यं धारयामि' इति । यथाह—'साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता' इति । मिथ्योत्तरं तु नाहं धारयामीति । तथा च कात्यायनः—'अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवम् । मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः ॥' ॥ तच्च मिथ्योत्तरं चतुर्विधम्—'मिथ्यैतन्नाभिजानामि तदा तत्र न संनिधिः । अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधम् ॥' इति । प्रत्यवस्कन्दनं 'सत्यं गृहीतं प्रतिदत्तं प्रतिग्रहेण लब्धम्' इति वा । यथाह नारदः—'अर्थिना संलिखितो योऽर्थः प्रत्यर्थी यदि तं तथा । प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं स्मृतम् ॥' । प्राङ्न्यायोत्तरं तु यत्राभियुक्त एवं ब्रूयात् 'अस्मिन्नर्थेऽनेनाहमभियुक्तस्तत्र व्यवहारमार्गेण पराजितः' इति । उक्तं च कात्यायनेन—'आचारेणावसन्नोऽपि पुनर्लेखयते यदि । सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते ॥' इति । एवमुत्तरलक्षणे स्थिते उत्तरलक्षणरहितानामुत्तरवदवभासमानानामुत्तराभासत्वसिद्धम् । स्पष्टीकृतं च स्मृत्यन्तरे—'संदिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च । पक्षैकदेशव्याप्यन्यत्तथा नैवोत्तरं भवेत् ॥ यद्व्यस्तपदमव्यापि निगूढार्थं तथाकुलम् । व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये ॥' इति । तत्र संदिग्धं—सुवर्णशतमनेन गृहीत'मित्युक्ते 'सत्यं गृहीतं सुवर्णशतं माषशतं वे'ति । प्रकृतादन्यथा—'सुवर्णशताभियोगे पणशतं धारयामी'ति । अत्यल्पं—'सुवर्णशताभियोगे पञ्चाशतं धारयामी'ति । अतिभूरि—'सुवर्णशताभियोगे द्विशतं धारयामी'ति । पक्षैकदेशव्यापि—'हिरण्यवस्त्राद्यभियोगे हिरण्यं गृहीतं नान्यदि'ति । व्यस्तपदं—ऋणादानाभियोगे पदान्तरेणोत्तरम्, यथा 'सुवर्णशताभियोगे अनेनाहं ताडितः' इति । अव्यापि—देशस्थानादिविशेषणाव्यापि यथा—'मध्यदेशे ...णस्यां पूर्वस्यां दिशि क्षेत्रमनेनापहृत'मिति पूर्वपक्षे लिखिते, 'क्षेत्रमपहृत'मिति । निगूढार्थं यथा—'सुवर्णशताभियोगे किमहमेवास्मै धारयामी'त्यत्र ...ना प्राड्विवाकः सभ्यो वा अर्थी वा अन्यस्मै धारयतीति सूचयतीति निगूढम् । आकुलं पूर्वापरविरुद्धं यथा—'सुवर्णशताभियोगे कृते, सत्यं गृहीतं न धारयामी'ति । व्याख्यागम्यं—दुःश्लिष्टविभक्तिसमाससाध्याहाराभिधानेन

टिप्प०—1 अध्याहारेण सहितं साध्याहारम्. 2 अदेशभाषेत्यपि क्वचित्. 3 प्रत्यवस्कन्दनं कारणोत्तरम्. 4 प्रतिपत्तिः संप्रतिपत्तिः, सत्योत्तरमित्यनर्थान्तरम्. 5 तथा तथैवाङ्गीकृत्येत्यर्थः. 6 व्यवहारेण पराजितोऽपि. 7 अर्धन्यूनतयात्यल्पत्वमस्य. 8 अन्यत् पक्षैकदेशव्यापि चेत्यर्थः. 9 व्यस्तपदं असंबद्धपदकम्. 10 विन्ध्यहिमालयोर्मध्यं मध्यदेशः. 11 ध्वनिना किमादिबोध्येन.

पाठा०—१ अभियुक्तस्य ग.

व्याख्यागम्यम्, अदेशभाषाभिधानेन वा । यथा—'सुवर्णशतविषये
भियोगे, 'गृहीतशतवचनात् सुवर्णानां पितुर्न जानामी'ति । अत्र
पितुर्वचनात् 'सुवर्णानां शतं गृहीतमि'ति न जानामीति । असारं—
यथा 'सुवर्णशतमनेन वृद्धया गृहीतं वृद्धिरेव दत्ता न मूल'मित्यभि
वृद्धिर्दत्ता न मूलं गृहीत'मिति । उत्तरमित्येकवचननिर्देशादुत्तरा
निरस्तः । यथाह कात्यायनः—'पक्षैकदेशे यत्सत्यमेकदेशे च
मिथ्या चैवैकदेशे च संकरात्तदनुत्तरम् ॥' इति । अनुत्तरत्वे च कार
क्रमू—'न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः । न चार्थसिद्धिरुभ
क्रियाद्वयम् ॥' इति । मिथ्याकारणोत्तरयोः संकरे अर्थिप्रत्यर्थिनोर्द्वयोः
प्राप्नोति—'मिथ्या[1] क्रिया पूर्ववादे कारणे[2] प्रतिवादिनि' इति स्मरणात्
भयमेकस्मिन्व्यवहारे विरुद्धम् । यथा—'सुवर्णं रूपकशतं चानेन गृहीत
योगे, 'सुवर्णं न गृहीतं, रूपकशतं गृहीतं प्रतिदत्तं चे'ति । कारणप्राङ्[3]
तु प्रत्यर्थिन एव क्रियाद्वयम्—'प्राङ्न्यायकारणोक्तौ[4] तु प्रत्यर्थी निर्दि
इति । तथा 'सुवर्णं गृहीतं प्रतिदत्तं,—रूपके व्यवहारमार्गेण पराजितः' इ
च प्राङ्न्याये जयपत्रेण वा प्राङ्न्यायदर्शिभिर्वा भावयितव्यम्,[6] कारे
साक्षिलेख्यादिभिर्भावयितव्यमिति[7] विरोधः । एवमुत्तरत्रयसंकरेऽपि[8]
यथा—'अनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानी'त्यभियोगे, 'सत्यं सु
प्रतिदत्तं रूपकशतं न गृहीतं, वस्त्रविषये तु पूर्वन्यायेन पराजितः' इति ।
संकरेऽपि । एतेषां चानुत्तरत्वं यौगपद्येन तस्य तस्यांशस्य तेन तेन
क्रमेणोत्तरत्वमेव[10] । क्रमश्चार्थिनः[11] प्रत्यर्थिनः सभ्यानां चेच्छया भवति
पुनरुभयोः[13] संकरे तत्र यस्य प्रभूतार्थविषयत्वं तत्क्रियोपादानेन[14] पूर्वं
प्रवर्तयितव्यः, पश्चादल्पविषयोत्तरोपादानेन च व्यवहारो द्रष्टव्यः ।
संप्रतिपत्तेरुत्तरान्तरस्य च संकरस्तत्रोत्तरान्तरोपादानेन व्यवहारो

**टिप्प०**—1 न वादिद्वयपरत्वमिति सूचयितुं मिथ्येति । मिथ्योत्तरे इत्यर्थः कर्मण्यण् पूर्ववादिनीत्यर्थः. 2 कारणे कारणोत्तरे. 3 तयोर्मिथः संकरे 4 तयोरुक्तावित्यर्थः । नेदं प्रत्येकपरम् । करणांशे 'कारणे प्रतिवादिनि' इत्य त्वात् । तस्मात्संकरपरमेवेदम् । अत एव समासनिर्देशसंगतिरपि. 5 द्वितीय त्यर्थः. 6 साधयितव्यमेतैः कृत्वा. 7 आदिना दिव्यपरिग्रहः. 8 उत्तरत्रये कारण—प्राङ्न्यायरूपे. 9 चतुःसंकरेति । यथा 'अनेन सुवर्णं रूप्यकशतं वस्त्र च गृहीत'मित्यभियोगे—'सुवर्णं धारयामि, रूपकशतं न गृहीतं, वस्त्राणि प्रतिग्रहेण धान्यविषये पूर्वन्यायेन पराजितः' इति । एवं मिथ्याप्राङ्न्यायसंकरेऽपि 10 क्रमेण त्वित्यर्थः. 11 चेन प्राड्विवाकादेः समुच्चयः. 12 यत्र 13 मिथ्याकारणोत्तरयोः. 14 तत्साधकक्रियाग्रहणेन. 15 सत्योत्तरसंकर पन्यासे बीजं ध्वनयन् तत्र नियामकान्तरमाह—यत्र चेति.

**पाठा०**—१ रूपकशते ग. २ कारणोत्तरे तु ग. ३ प्रतिदा

विपत्तौ क्रियाभावात् ॥ यथा हारीतेन—'मिथ्योत्तरं कारणं च स्यातामेकत्र भे । सत्यं चापि सहान्येन तत्र ग्राह्यं किमुत्तरम् ॥' इत्युक्त्वोक्तम्—'यत्प्रभूविषयं यत्र वा स्यात्क्रियाफलम् । उत्तरं तत्र तज्ज्ञेयमसंकीर्णमतोऽन्यथा ॥' र्णं भवतीति शेषः । शेषापेक्षया ऐच्छिकक्रमं भवतीत्यर्थः । तत्र प्रभूतार्थं —'अनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानी'त्यभियोगे, 'सत्यम्, सुवर्णं कशतं च न गृहीतं, वस्त्राणि तु गृहीतानि प्रतिदत्तानि चे'ति । अत्र मिथ्योत्तरस्य तविषयत्वादर्थिनः क्रियामादाय प्रथमं व्यवहारः प्रवर्तयितव्यः पश्चाद्वस्त्रविव्यवहारः । एवं मिथ्याप्राङ्न्यायसंकरे कारणप्राङ्न्यायसंकरे च योजनीयम् । तस्मिन्नेवाभियोगे, 'सत्यं सुवर्णं रूपकशतं च गृहीतं प्रति दास्यामि, वस्त्राणि गृहीतानि, गृहीतानि प्रतिदत्तानी'ति वा वस्त्रविषये पूर्वं पराजित इति चोत्तरे तिपत्तेर्भूरिविषयत्वेऽपि तत्र क्रियाभावान्मिथ्याद्युत्तरक्रियामादाय व्यवहारः यितव्यः । यत्र तु मिथ्याकारणोत्तरयोः कृत्स्नपक्षव्यापित्वं यथा—शृङ्गग्रातया कश्चिद्वदति 'इयं गौर्मदीया अमुकस्मिन्काले नष्टा, अद्यास्य गृहे दृष्टे'ति । प्रस्तु 'मिथ्यैतत्, प्रदर्शितकालात्पूर्वमेवास्मद्गृहे स्थिता मम गृहे जाता वे'ति ते । इदं तावत्पक्षनिराकरणसमर्थत्वान्नानुत्तरम् । नापि मिथ्यैव; कारन्यासात् । नापि कारणम्; एकदेशस्याप्यभ्युपगमाभावात् । तस्मात्संकामिथ्योत्तरमिदम् ।—अत्र च प्रतिवादिनः क्रिया, 'कारणे प्रतिवादिनि' इति तात् ॥ ननु 'मिथ्या क्रिया पूर्ववादे' इति पूर्ववादिनः कस्मात्क्रिया न ? तस्य शुद्धमिथ्याविषयत्वात् । 'कारणे प्रतिवादिनी'त्येतदपि कस्माच्छुद्धविषयं न भवति । नैतत्; सर्वस्यापि कारणोत्तरस्य मिथ्यासहचरितरूपछुद्धकारणोत्तरस्याभावात् ॥ प्रसिद्धकारणोत्तरे प्रतिज्ञातार्थैकदेशस्याप्यभ्युपगमेशस्य मिथ्यात्वम्—यथा 'सत्यं रूपकशतं गृहीतं न धारयामि, प्रतिदत्तत्वा । प्रकृतोदाहरणे तु प्रतिज्ञातार्थैकदेशस्याप्यभ्युपगमो नास्तीति विशेषः ॥ हारीतेन स्पष्टमुक्तम्—'मिथ्याकारणयोर्वापि ग्राह्यं कारणमुत्तरम्' इति । मिथ्याप्राङ्न्याययोः पक्षव्यापित्वं यथा—'रूपकशतं धारयती'त्यभियोगे, यैतदस्मिन्नर्थे पूर्वमयं पराजितः' इति । अत्रापि प्रतिवादिन एव क्रिया; ङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्' इति वचनात्, शुद्धस्य प्राङ्यस्याभावादनुत्तरत्वप्रसङ्गात्, संप्रतिपत्तेरपि साध्यत्वेनोपदिष्टस्य पक्षस्य

टिप्प०—1 यत् उत्तरम्. 2 संकीर्णोत्तरस्य यौगपद्येन सर्वथाऽनुत्तरत्वे प्राप्ते त्प्रतिप्रसवमाह–यत्र त्विति. 3 तन्न्यायेनेत्यर्थः. 4 कश्चित् वादी. 5 अन्यः प्रतिवादी. त्र कारणस्याप्राधान्यं मिथ्योत्तरस्य प्राधान्यं तस्य तदुपपादकस्यापि संभवात् । अत त्र सहयोगे तृतीया कृता. 7 प्रतिवादिना तस्यैवोक्तत्वमभिप्रेत्य प्राधान्यादरेण —नन्विति. 8 सत्यं गृहीतं प्रतिदत्तं चेत्येवंरूपे प्रागुक्ते. 9 सत्यस्यापि.

पाठा०—१ ऐच्छिकक्रममपेक्षाक्रमं भवतीत्यर्थः ग. २ ऐच्छिकः क्रमो तीत्यर्थः ख. ३ एतत्प्रदर्शित ख.

सिद्धत्वोपन्यासेन साध्यत्वनिराकरणादेवोत्तरत्वम् । यदा तु कारण संकरः यथा—'शतमनेन गृहीत'मित्यभियुक्तः प्रतिवदति 'सत्यं गृही चेत्यस्मिन्नेवार्थे प्राङ्न्यायेनायं पराजितः' इति । तत्र प्रतिवादिनो य क्वचिद्वादिप्रतिवादिनोरेकस्मिन्व्यवहारे क्रियाद्वयप्रसङ्ग इति निर्णयः ॥

एवमुत्तरे पत्रे निवेशिते[1] साध्यसिद्धेः साधनायत्तत्वात्साधननिर्देश दित्यपेक्षित आह—

**ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ॥ ७ ॥**

**तत** उत्तरानन्तरम्[2], **अर्थी** साध्यवान् **सद्य** एवानन्तरमेव **प्रति साधनं लेखयेत्** । प्रतिज्ञातः साध्यः स चासावर्थश्चेति प्रतिज्ञा साधनं साध्यतेऽनेनेति साधनं प्रमाणम्[3] । अत्र 'सद्यो लेखयेत्' इति भिधाने कालविलम्बनमप्यङ्गीकृतमिति गम्यते । तच्चोत्तरत्र विवेचयि प्रतिज्ञातार्थसाधनं लेखयेदिति वदता यस्य साध्यमस्ति स प्रतिज्ञा लेखयेदित्युक्तं, अतश्च प्राङ्न्यायोत्तरे प्राङ्न्यायस्यैव साध्यत्वात्प्रत्यर्थ्य इति स एव साधनं लेखयेत् । कारणोत्तरेऽपि कारणस्यैव साध्यत्वात् वार्थीति स एव लेखयेत् । मिथ्योत्तरे तु पूर्ववाद्येवार्थी स एव साधनं ततोऽर्थी लेखयेदिति वदता अर्थ्येव[5] लेखयेन्नान्य इत्युक्तम् । अतश्च संप्र साध्याभावेन भाषोत्तरत्वादिनोर्द्वयोरप्यर्थित्वाभावात्साधननिर्देश एव तावतैव[6] व्यवहारः परिसमाप्यत इति गम्यते । एतदेव हारीतेन स्प 'प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम् । मिथ्योक्तौ पूर्ववादी पत्तौ न सा भवेत् ॥' इति ॥ ७ ॥

ततः[7] किमित्यत आह—

**तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ।**

**तस्य** साधनस्य प्रमाणस्य वक्ष्यमाणलिखितसाक्ष्यादिलक्षणस्य **सिद्धौ सिद्धिं** साध्यस्य जयलक्षणां **प्राप्नोति** । **अतो**ऽस्मात्प्रकारादन्यथा न्तरेण साधनासिद्धौ विपरीतं साध्यस्यासिद्धिं पराजयलक्षणमाप्नोतीति

एवं व्यवहाररूपमभिधायोपसंहरति—

**चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः ॥ ८ ॥**

'व्यवहारान्नृपः पश्येत्' ( व्य० १ ) इत्युक्तो **व्यवहारः** सोऽयं **ष्पाच्चतुरं**शकल्पनया विवादेषु ऋणादानादि**षूपदर्शितो** वर्णितः । र्थिनोऽग्रतो लेख्यं' इति भाषापादः प्रथमः । 'श्रुतार्थस्योत्तरं लेख्यम्' इति द्वितीयः । ततः 'अर्थी लेखयेत्सद्यः' इति क्रियापादस्तृतीयः । 'तत्सिद्धौ

---

**टिप्प०**—1 निवेशिते लिखिते. 2 अर्थंत इत्यर्थः साध्यं स य 3 प्रमाणं लिखितादि वक्ष्यमाणम्. 4 निर्दिशेल्लेखयेत्. 5 अर्थ्येवेति आक्षेपादे तदुक्तिर्नियमार्थेति भावः. 6 तादृशोत्तरदानेनैव. 7 ततः साधनलेखनोत्तर

ति' इति साध्यसिद्धिपादश्चतुर्थः । यथोक्तम्—'परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु । वाक्यन्यायाद्व्यवस्थानं व्यवहार उदाहृतः ॥ भाषोत्तरक्रियासाध्यसिद्धिभिः प्रवृत्तिभिः । आक्षिप्त[1]चतुरंशस्तु चतुष्पादभि[2]धीयते ॥' इति । संप्रतिपत्त्युत्तरे साधनानिर्देशाद्बाधार्थस्यासाध्यत्वाच्च न साध्यसिद्धिल[3]क्षणः पादोऽस्तीति द्विपादमेव । उत्तराभिधानानन्तरं सभ्यानामर्थिप्रत्यर्थिनोः कस्य क्रिया स्यादिति परामर्शलक्षणस्य प्रत्या[4]कलितस्य योगीश्वरेण व्यवहारपादत्वेनानभिधानाद् व्यवहारसंबन्धाभावाच्च न व्यवहारपादत्वमिति स्थितम् ॥ ८ ॥

इति साधारणव्यवहारमातृकाप्रकरणम् ।

## असाधारणव्यवहारमातृकाप्रकरणम् २

एवं सर्वव्यवहारोपयोगिनीं व्यवहारमातृकामभिधायाधुना क्वचिद्व्यवहारविशेषे तद्विशेषं दर्शयितुमाह—

### अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।

अभियुज्यत इति[5] **अभियोगो**ऽपराधः तमभियोग**मनिस्तीर्या**परिहृत्य अभियोक्तारं **न प्रत्यभियोजयेत्** अपराधेन न संयोजयेत् । यद्यपि अवस्कन्दनं प्रत्यभियोगरूपं तथापि स्वापराधपरिहारात्मकत्वान्नास्य प्रतिषेधविषयत्वम् । अतः स्वाभियोगानुपमर्दनरूपस्य प्रत्यभियोगस्यायं निषेधः । इदं प्रत्यर्थिनमधिकृत्योक्तम् ॥—

अथ अर्थिनं प्रत्याह—

### अभियुक्तं च नान्येन नोक्तं विप्रकृतिं नयेत् ॥ ९ ॥

अभियुक्तं च नान्येनेति । **अन्येना**भियुक्तमनिस्तीर्णा**भियोग**मन्योऽर्थी नाभियोजयेत् । किंच, **उक्त**मावेदनसमये यदुक्तं **तद्विप्रकृतिं** विरुद्धभावं **न नयेत्** न प्रापयेत् । एतदुक्तं भवति—यद्वस्तु येन रूपेणावेदनसमये निवेदितं तद्वस्तु त[7]थैव भाषाकालेऽपि लेखनीयं, नान्यथेति ॥ ननु 'प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना' (व्य० ६) इत्यत्रैवेदमुक्तं, किमर्थं पुनरुच्यते '**नोक्तं विप्रकृतिं नयेत्**' इति? उच्यते,—'यथाऽऽवेदितमर्थिना' (व्य० ६) इत्यनेनाऽऽवेदनसमये यद्वस्तु निवेदितं तदेव भाषासमयेऽपि तथैव लेखनीयम् । ए[8]कस्मिन्नपि प[9]दे न वस्त्वन्तरमित्युक्तम् । यथा—'अनेन रूपकशतं वृद्ध्या गृहीतम्' इत्यावेदनसमये

टिप्प०—1 मुख्यपादत्वासंभवादाह चतुरंशेति. 2 अभिधीयते ऋणादानादिषु प्रमाणेषु. 3 लक्षणोऽपि इति क्वचित्. 4 प्रत्याकलितस्य पौनःपुन्येन विचारणस्येत्यर्थः. 5 अभियुज्यते दोषविषयीक्रियतेऽनेनेति शेषः. 6 सत्यं गृहीतं प्रतिदत्तं चेति कारणोत्तरे अनेन दत्तं स्थितं मया पुनर्दत्तमित्येवं प्रत्यभियोगरूपत्वमित्यर्थः. 7 तथैवेति । अन्यथाऽन्यथावादित्वेन भङ्गप्रसङ्गात्. 8 ऋणादानादिव्यवहारविषये. 9 अत्र प्रकरणे पदशब्दो विषयवाची.

पाठा०—१ इति व्यवहारमातृकाप्रकरणम्. २ साधारणासाधारणव्यवहार.

प्रतिपाद्य प्रत्यर्थिसंनिधौ भाषासमये 'वस्त्रशतं वृद्ध्या गृहीतम्' इति न
तथा सति पदान्तरागमनेऽपि वस्त्वन्तरगमनाद्धीनवादी दण्ड्यः
'नोक्तं विप्रकृतिं नयेत्' इत्यनेनैकवस्तुत्वेऽपि पदान्तरगमनं निषिद्ध्यते
'रूपकशतं वृद्ध्या गृहीत्वाऽयं न प्रयच्छति' इत्यावेदनकालेऽभिधाय
'रूपकशतं बलादपहृतवान्' इति वदतीति। तत्र वस्त्वन्तरगमनं निषि
तु पदान्तरगमनं निषिद्ध्यत इति न पौनरुक्त्यम्। एतदेव स्पष्टीकृतं
'पूर्वपादं परित्यज्य योऽन्यमालम्बते पुनः। पदसंक्रमणाज्ज्ञेयो हीन
नरः॥' इति। हीनवादी दण्ड्यो भवति, न प्रकृतादर्थाद्धीयते। अतः
ऽर्थिनश्च प्रमादपरिहारार्थमेवायम् 'अभियोगमनिस्तीर्य' इत्याद्युपदेशो
र्थसिद्ध्यसिद्धिविषयः। अत एव वक्ष्यति (व्य० १९) 'छलं निरस्य
हारान्नयेन्नृपः' इति। एतच्चार्थव्यवहारे द्रष्टव्यम्। मन्युकृते तु व्यवहा
भिधाने प्रकृतादपि व्यवहाराद्धीयत एव। यथाह नारदः—'सर्वेष्व
वाक्छले नावसीदति। परस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते
अस्यार्थः—सर्वेष्वर्थविवादेषु न मन्युकृतेषु वाक्छले प्रमादाभिधानेऽपि
न पराजीयते। न प्रकृतादर्थाद्धीयत इत्यर्थः। अत्रोदाहरणं परस्त्रीत्यादि
भूम्यृणादाने प्रमादाभिधानेन दण्ड्योऽपि यथा प्रकृतादर्थान्न हीयते, एवं
विवादेष्विति। अर्थविवादग्रहणान्मन्युकृतविवादेषु प्रमादाभिधाने प्रकृ
द्धीयत इति गम्यते। यथा—'अहमनेन शिरसि पादेन ताडित' इत्या
ऽभिधाय भाषाकाले 'पादेन हस्ते ताडित' इति वदन्न केवलं दण्ड्यः
जीयते च॥ ९॥

'अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत्' (व्य० ९) इत्यस्यापवा

## कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च।

**कलहे** वाग्दण्डपारुष्यात्मके **साहसेषु** विषशस्त्रादिनिमित्तप्राण
दिषु **प्रत्यभियोग**संभवे स्वाभियोगमनिस्तीर्याप्यभियोक्तारं प्रत्यभि
नन्वत्रापि पूर्वपक्षानुपमर्दनरूपत्वेनानुत्तरत्वात्प्रत्यभियोगस्य प्रतिज्ञान्त
पद्व्यवहारासंभवः समानः। सत्यम्। नात्र युगपद्व्यवहाराय प्रत्यभियो
अपि तु न्यूनदण्डप्राप्तये अधिकदण्डनिवृत्तये वा। तथा हि—'अनेना
शप्तो वा' इत्यभियोगे, 'पूर्वमहमनेन ताडितः शप्तो वा' इति प्रत्यभि

**टिप्प०**—1 विषयान्तरं प्रत्यगमनेऽपीत्यर्थः. 2 पदान्तरं प्रति गमन
गमनाच्चेत्यर्थः. 3 सिद्ध्यसिद्धीति। हीनवादित्वे प्रकृतार्थासिद्धिस्तथात्वे तत्
4 पूर्वभूतेन सत्येन व्यवहारेण. 5 हीनवादी दण्ड्य एव, न प्रकृतार्थाद्धी
6 मन्युकृते वाक्पारुष्यदण्डपारुष्यादिव्यवहारे. 7 एवं शाब्दमार्थमुक्त्वा
दध्वनितमुच्यते—अर्थेत्यादिना. 8 दण्डेति प्रत्यभियोक्तुरिति भावः

**पाठा०**—१ वदन्केवलं ग.

त्वम्। यथाह नारदः (१।५।९) 'पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक्। पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः॥' इति। यदा पुनर्द्वयोर्युगपत्ताडना-प्रवृत्तिस्तत्राधिकदण्डनिवृत्तिः—'पारुष्ये साहसे वापि युगपत्संप्रवृत्तयोः। विशेषश्चेन्न लभ्येत विनयः स्यात्समस्तयोः॥' इति। एवं युगपद्व्यवहारप्रवृत्त्यसंभवोऽपि कलहादौ प्रत्यभियोगोऽर्थवादृणादानादिषु तु निरर्थक एव॥

अर्थिप्रत्यर्थिनोर्विधिमुक्त्वा ससभ्यस्य सभापतेः कर्तव्यमाह—

**उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये॥ १०॥**

**उभयो**रर्थिप्रत्यर्थिनोः सर्वेषु विवादेषु निर्णयस्य कार्यं **कार्यनिर्णयः।** आहिताग्न्यादिषु पाठात्कार्यशब्दस्य पूर्वनिपातः। निर्णयस्य च यत्कार्यं साधितधनदानं दण्डदानं च तस्मिन्समर्थः **प्रतिभूः** प्रतिभवति तत्कार्यं तद्वद्भवतीति प्रतिभूर्**ग्राह्यः** ससभ्येन सभापतिना। तस्यासंभवेऽर्थिप्रत्यर्थिनो रक्षणे पुरुषा नियोक्तव्याः। तेभ्यश्च ताभ्यां प्रतिदिनं वेतनं देयम्। यथाह कात्यायनः—'अथ चेत्प्रतिभूर्नास्ति कार्ययोग्यस्तु वादिनः। स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनम्॥' इति॥ १०॥

अर्थिप्रत्यर्थिनोर्निर्णयकार्ये ससभ्येन सभापतिना प्रतिभूर्ग्राह्य इत्युक्तम्, किं तन्निर्णयकार्यं यस्मिन्प्रतिभूर्गृह्यत इत्यपेक्षित आह—

**निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम्।**
**मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत्॥ ११॥**

अर्थिना निवेदितस्याभियोगस्य प्रत्यर्थिनाऽ**पह्नवे** कृते यदाऽर्थिना साक्ष्यादिभि**र्भावितो**ऽङ्गीकारितः प्रत्यर्थी तदा **दद्याद्धनं** प्रकृतमर्थिने **राज्ञे च तत्सम**मपलापदण्डम्। अर्थार्थी भावयितुं न शक्नोति तदा स एव **मिथ्याभियोगी** इत्य**भियोगाद**भियुक्तधना**द्द्विगुणं** धनं **दद्यात्** राज्ञे। प्राङ्न्याये प्रत्यवस्कन्दने चेदमेव योजनीयम्। तत्राप्यर्थेवाऽपह्नववादी प्रत्यर्थिना भावितो राज्ञे प्रकृतधनसमं दण्डं दद्यात्। अथ प्रत्यर्थी प्राङ्न्यायं कारणं वा भावयितुं न शक्नोति तदा स एव मिथ्याभियोगीति राज्ञे द्विगुणं धनं दद्यात्। अर्थिने च प्रकृतं

**टिप्प०—**1 आक्षारयेत् कायेन वाचा वा क्षीणं कुर्यात्. 2 विनयो दण्डः. 3 पारुष्यं वाग्दण्डादि. 4 प्रतिभूः 'जामिन' इति भाषाप्रसिद्धोऽयम्. 5 तस्य प्रतिभुवः. 6 वादिन इति द्वयोरेकशेषः, जातावार्षं वा एकवचनम्. तेनार्थिप्रत्यर्थिनोः समासेन ग्रहणम्. 7 प्रकृतधनसममपलापनिमित्तकदण्डम्. 8 भावयितुं समर्थयितुम्. 9 अस्मिन्नर्थेऽयं पूर्वं पराजित इति प्राङ्न्यायोत्तरे गृहीतं प्रतिदत्तमिति कारणोत्तरे च दत्ते पूर्वन्यायं प्रतिदानं च प्रतिज्ञावाद्येवापलपतीति स एवापलापवादीत्यर्थः. 10 भावितः जयपराजयप्राङ्न्यायस्य प्रतिदानस्य च साधनादङ्गीकारितो वादी. 11 मिथ्यावादी.

**पाठा०—१ एवं सति. २ निर्णयस्य कार्यं च ख. ३ प्रतिभूर्ग्राह्य इत्यत आह ग. ४ धनं दद्याद्राज्ञे ख. ५ तत्राप्यर्थेऽपह्नववादी प्रत्य ख.**

धनम् । संप्रतिपत्त्युत्तरे तु दण्डाभाव एव । [1]एतच्च ऋणादानविषये पदान्तरेषु तत्र तत्र दण्डाभिधानाद[3]धनव्यवहारेष्वस्यासंभवाच्च न सर्वविषयम् । 'राज्ञाऽधमर्णिको दाप्यः' (व्य० ४२) इत्यस्य ऋणादानविषयत्वे विशेषं वक्ष्यामः । यद्वा,–एतदेव सर्वव्यवहारविषयत्वेनापि योजनीयम् । अभियोगस्य निह्नवेऽभियुक्तेन कृते यद्यभियोक्ता साक्ष्यादिभिर्भावितवान् तदा [4]तत्समं तत्र तत्र प्रतिपदोक्तमेव । चशब्दोऽवधारणे । धनं दण्डं [5]इत्यनुवादः । अथाभियोक्ता अभियोगं [1]भावयितुं न शक्नोति तदा मिथ्याभि प्रतिपदोक्तं धनं दण्डं द्विगुणं दद्यादिति विधीयते । अत्रापि प्राङ्न्याये न्दने च पूर्ववदेव योजनीयम् ॥ ११ ॥

ततः 'अर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्' (व्य० ७) इति वद लेखने कालप्रतीक्षणं दर्शितं तत्रापवादमाह—

**साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम् ।**
**विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥ [7]**

**साहसं** विषशस्त्रादिनिमित्तं प्राणव्यापादनादि, **स्तेयं** चौर्यम्, वाग्दण्डपारुष्यं वक्ष्यमाणलक्षणम्, **गौ**र्दोग्ध्री, **अभिशापः** पातक **अत्ययः** [6]प्राणधनातिपातस्तस्मिन्, द्वन्द्वैकवद्भावादेकवचनम् । **स्त्रियां** दास्यां च कुलस्त्रियां चारित्रविवादे, दास्यां स्वत्वविवादे, **विवादयेत्** उत्त येत्, **सद्य एव,** न कालप्रतीक्षणं कुर्यात् । **अन्यत्र** विवादान्तरेषु उत्तरदानकालः, **इच्छया**ऽर्थिप्रत्यर्थिसभ्यसभापतीनां **स्मृत** उक्तः ॥

दुष्टलक्षणमाह—

**देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।**
**ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥ १३**
**परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।**
**वाक्चक्षुः पूजयति नो तथौष्ठौ निर्भुजत्यपि ॥ १४**
**स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।**
**अभि[2]योगेऽ[3]थ साक्ष्ये वा दुष्टः स परिकीर्तितः ॥**

**मनोवाक्कायकर्मभिर्यः स्वभावादेव** न भयादिनिमित्ताद्विकृतिं

**टिप्प०**—1 निह्नवे भावितो दद्यादित्येतत्. 2 पदान्तराणि द्विविधानि स अधनानि च । तत्र सधनेष्वाह–पदान्तरेष्विति. 3 अधनेति । वाग्दण्डपारुष्यादि प्रकृतधनसमदण्डदानस्य तद्द्विगुणदानस्य चासंभवाच्चेत्यर्थः. 4 तत्समं व्यवहा 5 अनुवाद इति । तद्व्यवहारे दण्डस्य विशिष्यविहितत्वेन प्राप्तत्वाद्विध्यसंभवेन तस्य सर्वस्य सामान्येनानुवाद इत्यर्थः. 6 प्रागुक्तनिमित्तान्यनिमित्तकोऽत्र प्राणनाशो 7 यदि सद्यो नोत्तरं दातुमिच्छति तदा तदिच्छातोऽन्योऽप्युत्तरकालो भवति

पाठा०—१ वक्तुं. २ योगे च. ३ °थ वा साक्ष्ये A.

ति गच्छति असावभियोगे साक्ष्ये वा[2] दुष्टः परिकीर्तितः। तां विकृतिं भज्य दर्शयति—देशाद्देशान्तरं याति न क्वचिदवतिष्ठते। सृक्किणी ओष्ठपर्यन्तौ[3] परिलेढि जिह्वाग्रेण स्पर्शयति घट्टयतीति कर्मणो विकृतिः। अस्य ललाटं स्विद्यते स्वेदबिन्दुङ्कितं[1] भवति, मुखं च वैवर्ण्यं विवर्णत्वं पाण्डुत्वं वर्णत्वं वा एति गच्छतीति कायस्य विकृतिः। परिशुष्यत्स्खलद्वाक्यः परिशुष्यत्सगद्गदं स्खलद्व्यत्यस्तं वाक्यं यस्य स तथोक्तः। विरुद्धं पूर्वापरविरुद्धं बहु च भाषत इति वाचोविकृतिः। परोक्तां वाचं प्रतिवचनदानेन न पूजयति, चक्षुर्वा प्रतिवीक्षणेन न पूजयतीति मनसो विकृतेर्लिङ्गम्। तथा[4] ओष्ठौ निर्भुजति वक्रयतीत्यपि कायस्य विकृतिः। एतच्च दोषसंभावनामात्रमुच्यते, न दोषनिश्चयाय; स्वाभाविकनैमित्तिकविकारयोर्विवेकस्य[5] दुर्ज्ञेयत्वात्[2]। यदि कश्चिन्निपुणमतिर्विवेकं प्रतिपद्येत तथापि न पराजयनिमित्तं कार्यं भवति। इह मरिष्यतो लिङ्गदर्शनेन मृतकार्यं कुर्वन्ति। एवमस्य पराजयो भविष्यतीति लिङ्गादवगतेऽपि[6] न पराजयनिमित्तकार्यप्रसङ्गः ॥ १३–१५ ॥

संदिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत्।
न चाहूतो वदेत्किंचिद्धीनो दण्ड्यश्च स स्मृतः ॥१६॥

किंच, संदिग्धमर्थमधमर्णेनानङ्गीकृतमेव[7] यः स्वतन्त्रः साधननिरपेक्षः साधयत्यासेधादिना स हीनो दण्ड्यश्च भवति। यश्च स्वयं संप्रतिपन्नं लेखनेन वा साधितं याच्यमानो निष्पतेत् पलायेत, यश्चाभियुक्तो राज्ञा आहूतः सदसि न किंचिद्वदति 'सोऽपि हीनो दण्ड्यश्च स्मृतः' इति संबध्यते। 'अभियोगे च साक्ष्ये वा दुष्टः स परिकीर्तितः' इति प्रस्तुतत्वाद्धीनपरिगणनमात्रमेव मा भूदिति 'दण्ड्य'ग्रहणम्। दण्ड्यस्य चापि 'शास्योऽप्यर्थान्न हीयत' इत्यर्थादहीनत्वदर्शनादत्र तन्मा भूदिति 'हीन'[8]ग्रहणम् ॥ १६ ॥

अथ यत्र द्वावपि युगपद्धर्माधिकरणं[3] प्राप्तौ भाषावादिनौ। तद्यथा—कश्चित्प्रतिग्रहेण क्षेत्रं लब्ध्वा कंचित्कालमुपभुज्य कार्यवशात्सकुटुम्बो देशान्तरं गतः। अन्योऽपि तदेव क्षेत्रं प्रतिग्रहेण लब्ध्वा कंचित्कालमुपभुज्य देशान्तरं गतः। ततो द्वावपि युगपदागत्य 'मदीयमिदं क्षेत्रं मदीयमिदं क्षेत्रम्' इति परस्परं विवदमानौ धर्माधिकरणं[3] प्राप्तौ तत्र कस्य क्रियेत्याकाङ्क्षित[9] आह—

टिप्प०—1 याति गच्छति यातीत्यर्थः। श्लोके गच्छेदित्यस्य लिङर्थाविवक्षायां अस्य पूर्वं विवरणं प्रदर्श्य ततो यातीति प्रदर्शनीयम्. 2 वा चार्थे. 3 पर्यन्तौ प्रान्तौ, सृक्किणी गल्लयोरन्तर्भागौ. 4 तथा वैवर्ण्यादिवत्. 5 विवेकस्य भेदस्य. 6 यत्किंचिद्विकाराद्. 7 साधकबाधकप्रमाणयोरपरीक्षणाद्ग्राह्याग्राह्यत्वेन संदिग्धमर्थम्–अप०। 8 अनेन हीनस्य पञ्चविधत्वमुक्तम्. 9 क्रिया साधनम्.

पाठा०—१ बिन्दुचितं. २ दुर्ज्ञानत्वात् ग. ३ कारिणं ग.

**साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।**
**पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥ १७ ॥**

**उभयतः** उभयोरपि वादिनोः **साक्षिषु** संभवत्सु[1] साक्षिणः पूर्व 'पूर्वस्मिन्काले मया प्रतिग्रहीतमुपभुक्तं च' इति यो वदत्यसौ पूर्ववादी, पूर्वं निवेदयति तस्य साक्षिणः प्रष्टव्याः । यदा त्वन्य[2] एवं वदति 'सत्य प्रतिगृहीतमुपभुक्तं च किंतु राज्ञेदमेव क्षेत्रमस्मादेव क्रयेण लब्ध्वा म इति, 'अनेन वा प्रतिग्रहेण लब्ध्वा मह्यं दत्तम्' इति तत्र पूर्वपक्षोऽ ऽधरीभूतस्तस्मिन्[1]**पूर्वपक्षेऽधरीभूते उत्तर**काले प्रतिगृहीतमुपभु **वादिनः** साक्षिणः प्रष्टव्या **भवन्ति** ॥ इदमेव व्याख्यानं युक्ततरम् त्तरे पूर्ववादिनः साक्षिणो भवन्ति ॥ प्राङ्न्यायकारणोक्तौ पूर्वपक्षेऽधरी रवादिनः साक्षिणो भवन्तीति व्याख्यानमयुक्तम् । अस्यार्थस्य 'ततो[2]ऽ येत्सद्यः प्रतिज्ञातार्थसाधनम्' ( व्य० ७ ) इत्यनेनैवोक्तत्वात्पुनरुक्तिप्रसङ्गा व्याख्यानमेव स्पष्टीकृतं नारदेन—'मिथ्या[3] क्रिया पूर्ववादे कारणे प्रति प्राङ्[4]न्यायविधिसिद्धौ तु जयपत्रं क्रिया भवेत् ॥' इत्युक्त्वा—'द्वयोर्वि द्वयोः सत्सु च साक्षिषु । पूर्व[5]पक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः वदता । एतस्य च पूर्व[6]व्यवहारविलक्षणत्वाद्भेदेनोपन्यासः ॥ १७ ॥

**सपणश्चेद्विवादः स्यात्तत्र हीनं तु दापयेत् ।**
**दण्डं च स्वपणं चैव धनिने धनमेव च ॥ १८ ॥**

अपि च, यदि **विवादो** व्यवहारः **सपणः**–प[7]णनं पणः, तेन सह व सपणः, स्यात्तदा तत्र तस्मिन्सपणे व्यवहारे **हीनं** पराजितं पूर्वो[8]क्तं दण्ड **पणं** रा[9]ज्ञे, **अर्थिने च** विवादास्पदीभूतं **धनं दापयेद्**राजा । यत्र कोपावेशवशात् 'यद्यहमत्र पराजितो भवामि तदा पणशतं दास्यामि' इ जानीते, अन्यस्तु न किंचित्प्रतिजानीते त[10]त्रापि व्यवहारः प्रवर्तते । प्रवृत्ते पणप्रतिज्ञावादी यदि हीयते तदा स एव सपणं दण्डं दाप्यः । पराजितो दण्डं दाप्यः, न पणम्; 'स्वप[3]णं च' इति विशेषोपादानात् । शतम्, अन्यस्तु पञ्चाशतं प्रतिजानीते तत्रापि पराजये स्वकृतमेव पणं 'सपणश्चेद्विवादः स्यात्' इति वदता पणरहितोऽपि विवादो दर्शित इति

टिप्प०—1 उक्तपूर्ववादिभिन्नः. 2 अर्थी साध्यवान्. 3 मिथ्या मिथ्योत्तरे पूर्वो न्यायकरणनिश्चये तु. 5 पूर्वत्र काले गृहीतमुपभुक्तं चेतीत्यर्थः. 6 'सर्वव्यवहार' प्रागुक्तसर्वेभ्य इत्यर्थः. 7 पणनं व्यवहरणं, स्वोक्तिसत्यतासूचनाय यथासंभव ङ्गीकरणमिति यावत्. 8 प्रकृतार्थसममिति 'निह्नवे भावितः' ( व्य० ११ ) इ 9 प्राड्विवाकादिरिति शेषः. 10 तत्र निमित्तसत्त्वादप्रवृत्तौ मानाभावाच्चेति

पाठा०—१ साक्षिषु सत्सु ग. २ स्तस्मिन्पक्षे ग. ३ सपणं ख.

**छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।**
**भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥ १९ ॥**

किंच, छलं प्रमादाभिहितं **निरस्य** परित्यज्य **भूतेन** वस्तुतत्त्वानुसारेण **व्यवहारान्नयेद**न्तं **नृपः** । यस्माद्[1]**भूतमपि** वस्तुतत्त्वमपि **अनुपन्यस्तम**नभिहितं **हीयते** हानिमुपगच्छति **व्यवहारतो**[2] व्यवहारेण साक्ष्यादिभिः । तस्माद्भूतानुसरणं कर्तव्यम् । यथार्थिप्रत्यर्थिनौ सत्यमेव वदतस्तथा ससभ्येन नृपतिना यतितव्यं सामादिभिरुपायैः । तथासति साक्ष्यादिनैरपेक्ष्येणैव निर्णयो भवति ॥ अथ सर्वथापि भूतानुसरणं न शक्यते कर्तुं, तथा सति साक्ष्यादिभिर्निर्णयः कार्य इत्यनुकल्पः । यथोक्तम्—'भूतच्छलानुसारित्वाद्[3]द्विगतिः समुदाहृतः । भूतं तत्त्वार्थसंयुक्तं[2] प्रमादाभिहितं छलम् ॥' इति । तत्र भूतानुसारी व्यवहारो मुख्यः, छलानुसारी त्वनुकल्पः । साक्षिलेख्यादिभिर्व्यवहारनिर्णये कदाचिद्वस्त्वनुसरणं भवति, कदाचिन्न भवति; साक्ष्यादीनां व्यभिचारस्यापि[4] संभवात् ॥ १९ ॥

'भूतमप्यनुपन्यस्तं हीयते व्यवहारतः' ( व्य० १९ ) इत्यत्रोदाहरणमाह—

**निह्नुते[3] लिखितं नैकमेकदेशे विभावितः ।**
**दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥ २० ॥**

**नैकम**नेकं सुवर्णरजतवस्त्रादि लिखितमभियुक्तमर्थिना[5] प्रत्यर्थी यदि सर्वमेव **निह्नुते**ऽपजानीते तदार्थिना**एकदेशे**[6] हिरण्ये साक्ष्यादिभिः प्रत्यर्थी भावितोऽङ्गीकारितः सर्वं रजताद्यर्थं पूर्वलिखितं दाप्योऽर्थिने नृपेण । **न ग्राह्यस्त्वनिवेदितः** 'पूर्वं भाषाकाले अनिवेदितः पश्चादर्थिना पूर्वं मया विस्मृतः' इति निवेद्यमानो न ग्राह्यो नादर्तव्यो[4] नृपेण । एतच्च न केवलं वाचनिकम्[7] । एकदेशे प्रत्यर्थिनो मिथ्यावादित्वनिश्चयादेकदेशान्तरेऽपि मिथ्यावादित्वसंभवात् । अर्थिनः एकदेशे सत्यवादित्वनिश्चयादेकदेशान्तरेऽपि सत्यवादित्वसंभवात् । एवं तर्का[8]ख्यसंभावनाप्रत्ययानुगृहीतादस्मादेव योगीश्वरवचनात्सर्वं दापनीयं नृपेणेति निश्चयः। एवं च तर्कवाक्यानुसारेण निर्णये क्रियमाणे वस्तुनोऽन्यथात्वेऽपि व्यवहारदर्शिनां न दोषः। तथा च गौतमः (११।२३,२४)–'न्यायाधिगमे तर्कोऽभ्युपायस्ते-

**टिप्प०**—1 अनभिहितं अर्थिप्रत्यर्थ्यन्तरेण. 2 व्यवहारतः हीयमानपापयोगाच्चेति तृतीयान्तात्तसिः. 3 भूतच्छले अनुसरति तच्छीलस्तत्त्वात् द्विगतिर्द्विप्रकारः. 4 व्यभिचारस्य अयथार्थवादित्वस्यापि. 5 प्रतिज्ञाकालेऽर्थिनाऽभियोगत्वेनाभिहितम्. 6 पूर्वोक्तार्थैकदेशहिरण्यविषये. 7 किंतु युक्तिसिद्धमपीति भावः. 8 तर्कापरनामिका या संभावना सैव यः प्रत्ययो ज्ञानं तत्सहकृतात् 'निह्नुते' इति योगीश्वरवचनादित्यर्थः. वचनस्य तदनुगृहीतत्वे च.

**पाठा०—१ तस्मात् ख. २ तत्त्वार्थयुक्तं यत्प्रमादाभि. ख. ३ निह्नवे लिखितेऽनेकमेकदेशविभा A. ४ न दापयितव्यो क. ५ न्यायज्ञाने तर्क उपायस्तेन तर्केण न्यायमभ्युह्य निश्चित्य नाभ्युपेत्य ख.**

नाभ्युद्य यथास्थानं गमयेत्' इत्युक्त्वा, 'तस्माद्राजाचार्यावनिन्द्यौ' (
इत्युपसंहरति । न चैकदेशभावितोऽनुपादेयवचनः प्रत्यर्थीत्येतावदिह ग
'एकदेशविभावितो नृपेण सर्वं दाप्यः' इति वचनात् ॥ [1]यत्तु कात्यायनेन
'अनेकार्थाभियोगेऽपि यावत्संसाधयेद्धनी । साक्षिभिस्तावदेवासौ लभते
धनम् ॥' इति, तत्पुत्रादिदेयपित्राद्यृणविषयम् । तत्र हि बहूनर्था
पुत्रादिर्न जानामीति प्रतिवदन्निह्नववादी [2]न भवतीत्येकदेशविभावितोऽपि
दसत्यवादीति 'निह्नुते लिखितं नैकम्' (व्य० १९) इति शास्त्रं तत्र न
निह्नवाभावादपेक्षिततर्काभावाच्च ।—'अनेकार्थाभियोगेऽपि' इति
वचनं तु सामान्यविषयं, [3]विशेषशास्त्रस्य विषयं [4]निह्नवोत्तरं परिहृत्यैव
प्रवर्तते ॥ ननु 'ऋणादिषु विवादेषु [5]स्थिरप्रायेषु निश्चितम् । ऊने
वार्थे प्रोक्ते साध्यं न सिद्ध्यति ॥' इति वदता कात्यायनेनानेकार्थ
साक्षिभिरेकदेशे भाविते ऽधिके वा भाविते साध्यं सर्वमेव न सिद्ध्यती
तथासत्येकदेशे भाविते अभावितैकदेशसिद्धिः कुतस्त्या? उच्यते,
सर्वार्थसाधनतयोपन्यस्तैः साक्षिभिरेकदेशाभिधानेऽधिकाभिधाने वा
साध्यं न सिद्ध्यतीति तस्यार्थः । तत्रापि निश्चितं न सिद्ध्यतीति व
त्संशय एवेति प्रमाणान्तरस्यावसरोऽस्त्येव; 'छलं निरस्य' इति नियमात्
सादौ तु सकलसाध्यसाधनतयोद्दिष्टैः साक्षिभिरेकदेशेऽपि साधिते
सिद्धिर्भवत्येव; तावतैव साहसादेः सिद्धत्वात्, कात्यायनवचनाच्च-
र्थांशेऽपि गदिते साक्षिभिः सकलं भवेत् । स्त्रीसंगे साहसे चौर्ये यत्सा
कीर्तितम् ॥' इति ॥ २० ॥

ननु 'निह्नुते लिखितं नैकम्' (व्य० २०) इतीयं स्मृतिस्तथा 'अने
योगेऽपि' इतीयमपि स्मृतिरेव तत्रानयोः स्मृत्योः परस्परविरोधे सति
धनादप्रामाण्यं कस्मान्न भवति, विषयव्यवस्था किमित्याश्रीयत इत्यत आह

**स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ।**

यत्र **स्मृत्योः** परस्परतो **विरोधस्**तत्र विरोधपरिहाराय विषयव्यव

टिप्प०—1 एवं निश्चितेऽर्थे प्रसक्तविरोधं परिहरति यत्त्विति. 2 न भवती स्यान्यकृत्वेनाज्ञानस्यापि तत्र संभवेनापलापाभावात्. 3 'निह्नुते' इत्यस्य. 4 नि ज्ञात्वापलापो निह्नवः, तद्रूपमुत्तरम्; परिहृत्य परित्यज्य अज्ञानोत्तरे ज्ञानाभावेनो 5 स्थिरेति । लिङ्गदर्शनमात्रेणादृढहेतुनापि स्त्रीसंग्रहणादिरूपसाध्यस्य सि तादृशानामस्थिरत्वम्, ऋणादानादिरूपस्य साध्यस्य तु दृढसाधनेनैव सिद्धि त्वम्. तदपि नाकाशादिवदिति स्थिरप्रायत्वमित्यर्थः. 6 स्थिरप्रायेष्वित्यस्य प्रत्यु साहसादौ त्विति. 7 साध्येति स्त्रीसंग्रहादिके विवादपदत्रये भाषावादिना साध्यत्वेन कथित तत्रानेकसाध्यसाधनतयाभिहितैः साक्षिभिः साध्यार्थजात साधिते सकलं भवेत्सिद्ध्येदित्यर्थः.

पाठा०—१ तत्पुत्राद्यृण ख. २ मीति वदन् ग. ३ उपदिष्टैः ४ विरोधे A. ५ परस्परविरोध ग.

त्सर्गापवादादिलक्षणो **न्यायो बलवान्** समर्थः। स च न्यायः कुतः प्रत्येतव्य
त आह—**व्यवहारत** इति। व्यवहाराद्वृद्धव्यवहारादन्वयव्यतिरेकलक्षणाद-
यते। अतश्च प्रकृतोदाहरणेऽपि विषयव्यवस्थैव युक्ता। एवमन्यत्रापि विष-
व्यवस्थाविकल्पादि यथासंभवं योज्यम्॥

एवं सर्वत्र च प्रसक्तेऽपवादमाह—

**अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः॥ २१॥**

'धर्मशास्त्रानुसारेण' इत्यनेनैवौ[1]शनसाद्यर्थशास्त्रस्य निरस्तत्वात् धर्मशास्त्रान्त-
व राजनीतिलक्षणमर्थशास्त्रमिह विवक्षितम्। [2]अर्थशास्त्रधर्मशास्त्रस्मृत्यो-
धे **अर्थशास्त्राद्धर्मशास्त्रं बलवदिति स्थिति**र्मर्यादा। यद्यपि [3]समा-
कतया अर्थशास्त्रधर्मशास्त्रयोः स्वरूपगतो विशेषो नास्ति तथापि प्रमेयस्य
स्य प्राधान्यादर्थस्य चाप्राधान्याद्धर्मशास्त्रं बलवदित्यभिप्रायः। धर्मस्य च
न्यं [4]शास्त्रादौ दर्शितम्। तस्माद्धर्मशास्त्रार्थशास्त्रयोर्विरोधेऽर्थशास्त्रस्य बाध एव-
षयव्यवस्था, नापि विकल्पः। किमत्रोदाहरणम्? [5]न तावत्—'गुरुं वा बाल-
वा ब्राह्मणं वा बहुश्रुतम्। आततायिनमायान्तं हन्यादेवाविचारयन्॥
तायिवधे दोषो हन्तुर्भवति कश्चन। [1]प्रच्छन्नं वा प्रकाशं वा मन्युस्तं मन्यु-
च्छति॥' (मनुः ८।३५०-५१) तथा—'आततायिनमायान्तमपि वेदान्त[2]गं
। जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्।' इत्याद्यर्थशास्त्रम्, 'इयं
द्धिरुदिता प्रमाप्या[7]कामतो द्विजम्। कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते॥'
: ११।८९) इत्यादि धर्मशास्त्रं, तयोर्विरोधे धर्मशास्त्रं बलवदिति युक्तम्॥
रेकविषयत्वासंभवेन विरोधाभावान्न बलाबलचिन्ताऽवतरति। तथा हि—
द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते' (मनुः ८।३४८) इत्युपक्रम्य—
मनश्च परित्राणे दक्षिणानां च संगरे। स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण [3]न दण्ड-
॥' (मनुः ८।३४९) इत्यात्मरक्षणे दक्षिणादीनां यज्ञोपकरणानां च रक्षणे
च स्त्रीब्राह्मणहिंसायां च—'आततायिनमकूटशस्त्रेण घ्नन्न दण्डभाक्' इत्युक्त्वा

टिप्प०—1 औशनसादि केवलं नीतिशास्त्रम्. 2 एकविषययोर्विरुद्धार्थयोर्हि
योर्मिथो विरोधो नतु भिन्नविषययोरविरुद्धार्थयोर्वा। सति च विरोधे प्रबलदुर्बलभाव,
ता। एवं च पूर्वमेव धर्मशास्त्रानुसारेणैव व्यवहारानुदर्शनस्य विहितत्वादौशनसादि-
शास्त्रस्य न व्यवहारविषये प्रवृत्तिरत एकविषयत्वाभावादर्थशास्त्रधर्मशास्त्रयोः सुतरां
धाभावादनयोः प्रबलदुर्बलभावचिन्तनमेव तावदयुक्तमिति शङ्काशयः. 3 मन्वादिरूपै-
र्निष्पन्नत्वेन. 4 आचाराध्यायस्यादौ. 5 अन्योक्तमुदाहरणमनूद्य खण्डयति—न ताव-
ादि युक्तमित्यन्तेन। न तावदुदाहरणं युक्तमिति व्यवहितेनान्वयः. 6 यतो मन्युरेव
प्रकाशं वा तं मन्युं हिनस्तीत्यर्थः. 7 अकामतो ब्राह्मणं हिंसित्वा स्थितस्येत्यर्थः.

पाठा०—१ प्रकाशं वाऽप्रकाशं वा क. २ वेदान्तपारगम्. ३ न
यति क.

तस्यार्थवादार्थमिदमुच्यते 'गुरुं वा बालवृद्धौ वा' इत्यादि । गुर्वादीन-
प्याततायिनो हन्यात्किमुतान्यानिति । 'वा'शब्दश्रवणात् 'अपि वेद
इत्यत्र 'अपि'शब्दश्रवणान्न गुर्वादीनां वध्यत्वप्रतीतिः; 'नाततायिवधे
गोब्राह्मणवधात्' इति सुमन्तुवचनाच्च, 'आचार्यं च प्रवक्तारं मा
गुरुम् । न हिंस्याद्ब्राह्मणान्गाश्च सर्वांश्चैव तपस्विनः ॥' इति ( ४।१
वचनाच्च । आचार्यादीनामाततायिनां हिंसाप्रतिषेधेनेदं वचनम
हिंसामात्रप्रतिषेधस्य [1]सामान्यशास्त्रेणैव सिद्धत्वात् । 'नाततायिवधे
भवति कश्चन' इत्येतदपि ब्राह्मणादिव्यतिरिक्तविषयमेव । यतः
गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः
'उद्यतासिविषाग्निश्च शापोद्यतकरस्तथा । [3]आथर्वणेन हन्ता च
राजनि ॥ भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः । एवमाद्यान्विजा
वाततायिनः ॥ इति सामान्येनाततायिनो दर्शिताः । अतश्च ब्राह्म
तायिनश्च आत्मादित्राणार्थं हिंसानभिसंधिना निवार्यमाणाः प्रमाद
द्येरंस्तत्र लघु प्रायश्चित्तं राजदण्डाभावश्चेति निश्चयः । तस्मादन्य
वक्तव्यम् । तदुच्यते,—'हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः ।
तत्प्राप्तौ' (आ० ३५१) इत्यर्थशास्त्रम् ।—'धर्मशास्त्रानुसारेण क्रोधलो
( व्य० १ ) इति धर्मशास्त्रम् । तयोः क्वचिद्विषये विरोधो[5] भवति ।
'चतुष्पाद्व्यवहारे प्रवर्तमाने एकस्य जयेऽवधार्यमाणे मित्रलब्धिर्भवति
शास्त्रमनुसृतं भवति । अन्यस्य जयेऽवधार्यमाणे धर्मशास्त्रमनुसृतं भव
लब्धिर्विपरीता, तत्रार्थशास्त्राद्धर्मशास्त्रं बलवत् । अत एव 'धर्म
अर्थग्राहिण एतदेव' इति प्रायश्चित्तस्य गुरुत्वं दर्शितमापस्तम्बेन ।
द्वादशवार्षिकं प्रायश्चित्तं परामृश्यते ॥ २१ ॥

'ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्' ( व्य० ७ ) इत्युक्तं
धनमित्यपेक्षित आह—

**प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।**
**एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥ २२ ॥**

प्रमीयते परिच्छिद्यतेऽनेनेति **प्रमाणम्** । तच्च द्विविधं—मानुषं दैवि
तत्र [2]मानुषं प्रमाणं त्रिविधं—**लिखितं भुक्तिः साक्षिणश्चेति** । कीर्ति

**टिप्प०**—1 'न हिंस्यात्' इत्यादिवचनेनैवेत्यर्थः. 2 उद्यतेत्यत्र असिविष
कृत्वोद्यतशब्देन बहुव्रीहिः. 3 अथर्ववेदप्रतिपादिताभिचारादिकर्मणा. 4
5 अयमस्मिन्नेवाध्यायेऽष्टमश्लोके पूर्वं दर्शितः.

**पाठा०**—१ चतुर्धान्य घ. २ मानवं ख.

...ः । तत्र लिखितं द्विविधं—शासनं चीरकं चेति । शासनमुक्तलक्षणम् । चीरकं ...क्ष्यमाणलक्षणम् । भुक्तिरुपभोगः । **साक्षिणो** वक्ष्यमाणस्वरूपप्रकाराः[2] । ...लिखितस्य साक्षिणां च शब्दाभिव्यक्तिद्वारेण शब्देऽन्तर्भावाद्युक्तं प्रामाण्यम्[3] । ...तु कथं प्रामाण्यम्? उच्यते—भुक्तिरपि कैश्चिद्विशेषणैर्युक्ता[4] स्वत्वहेतुभूत-...दिकमव्यभिचारादनुमापयन्त्यनुपपद्यमाना वा कल्पयन्तीत्यनुमानेऽर्थापत्तौ[5][6] ...र्भवतीति प्रमाणमेव । एषां लिखितादीनां त्रयाणामन्यतमस्याप्यभावे दिव्यानां ...माणस्वरूपभेदानामन्यतमं जातिदेशकालद्रव्याद्यपेक्षया प्रमाणमुच्यते । ...भाव एव दिव्यस्य प्रामाण्यमस्मादेव वचनादवगम्यते; दिव्यस्य स्वरूप-...व्ययोरागमगम्यत्वात् । अतश्च यत्र परस्परविवादेन युगपद्धर्माधिकारिणं ...रेको मानुषीं क्रियामपरस्तु दैवीमवलम्बते तत्र मानुष्येव ग्राह्या । यथाह ...यनः—'यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् । मानुषीं तत्र गृह्णी-...तु दैवीं क्रियां नृपः ॥' इति । यत्रापि प्रधानैकदेशसाधनं[7] मानुषं संभ-... तत्रापि न दैवमाश्रयणीयम् । यथा 'रूपकशतमनया वृद्ध्या गृहीत्वाऽयं ...यच्छती'त्यभियोगापह्नवे[8]—'ग्रहणे साक्षिणः सन्ति नो संख्यायां वृद्धिविशेषे ... अतो दिव्येन भावयामी'त्युक्ते तत्रैकदेशविभावितन्यायेनापि संख्यावृद्धि-[9]...प्रसिद्धेर्न दिव्यस्यावकाशः । उक्तं च कात्यायनेन—'यद्येकदेशव्याप्तापि ...विद्येत मानुषी । सा ग्राह्या नतु पूर्णापि[1] दैविकी वदतां[2] नृणाम् ॥' इति । ...—'गूढसाहसिकानां तु प्राप्तं दिव्यैः परीक्षणम्' इति, तदपि मानुषासंभ-...नियमार्थम् । यदपि नारदेनोक्तम्—'अरण्ये निर्जने रात्रावन्तर्वेश्मनि ...े । न्यासस्यापह्नवे चैव दिव्या संभवति क्रिया ॥' इति, तदपि मानुषासं-[10]...एव । तस्मान्मानुषाभाव एव दिव्येन निर्णय इत्यौत्सर्गिकम् । अस्य चाप-... दृश्यते—'प्रक्रान्ते साहसे वादे पारुष्ये दण्डवाचिके । बलोद्भूतेषु कार्येषु ...णो दिव्यमेव च ॥' इति । तथा लेख्यादीनामपि क्वचिन्नियमो दृश्यते ।

टिप्प०—1 वक्ष्यमाणमग्रे लेख्यप्रकरणे. 2 स्वरूपं च प्रकारश्च वक्ष्यमाणो येषाम्. प्रकारो भेदः, स च दृष्टसाक्षिणः श्रुतसाक्षिण इत्येवमादिः. 3 लिपेः स्फोटकव्यञ्जक-...साक्षिणां ध्वनिद्वारा तदभिव्यञ्जकत्वात्स्वरूपतस्तेषामतत्त्वेऽपि तत्त्वातत्त्वमिति भावः. ...आसेधरहितत्वादिविशेषणैः. 5 अनुमाने इति । क्षेत्रादिकमस्य क्रयादिप्राप्तम् आसेधर-...ते सति चिरकालोपभुक्तत्वात् तदीयगृहादिवत् इत्यनुमानप्रयोगः. 6 तादृशी भुक्तिः ...ऽनुपपद्यमाना तादृशं तत्कल्पयतीत्यर्थापत्तिर्बोध्या. 7 अत्र समस्तस्य प्रधानैकदेश ...विग्रहः. 8 एवंविधो योऽभियोगस्तस्यापह्नवे परेण कृते सति. 9 संख्यावृद्धिविशेषयोः ...: 10 मानुषसंभवकृतनियमार्थमित्यपि क्वचित्.

पाठा०—१ पूर्वापि ग. २ वदतां वादिनां दैवी विवदतां ख.

यथा—'पूग[1]श्रेणीगणादीनां या स्थितिः परिकीर्तिता । तस्यास्तु साक्ष्यं दिव्यं न च साक्षिणः ॥' तथा—'द्वारमार्गक्रिया[2]भोगजलवाहादि भुक्तिरेव तु गुर्वी स्यान्न दिव्यं न च साक्षिणः ॥' तथा—'दत्ता[3]दत्ते... स्वामिनां निर्णये सति । वि[4]क्रयादानसंबन्धे क्रीत्वा धनमनिच्छति ॥ ... ह्वये चैव विवादे समुपस्थिते । साक्षिणः साधनं प्रोक्तं न दिव्यं न च ... इति ॥ २२ ॥

उभ[6]यत्र प्रमाणसद्भावे प्रमाणगतबलाबलविवेके चासति पूर्वापरयोः कस्य बलीयस्त्वमित्यत आह—

**स[1]र्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया ।**

ऋणादिषु **सर्वेष्वर्थविवादेषु उत्तरा क्रिया**—क्रियत इति ... **बलवती** । उत्तरकार्ये साधिते तद्वादी विजयी भवति, पूर्वकार्ये सिद्धे ... पराजीयते । तद्यथा—कश्चिद्ग्रहणेन धारणं साधयति कश्चित्प्रतिदानेन तत्र ग्रहणप्रतिपादनयोः प्रमाणसिद्धयोः प्रतिदानं बलवदिति प्रतिदा... भवति । तथा पूर्वं द्वि[7]कं शतं गृहीत्वा कालान्तरे त्रिकं शतमङ्गीकृतवा... भयत्र प्रमाणसद्भावेऽपि त्रिकशतग्रहणं बलवत् । पश्चाद्भावित्वात्पूर्व... त्पत्तेः । उक्तं च—'पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यति' इति ॥ ...

अस्यापवादमाह—

**आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ॥ २३**

**आध्यादिषु** त्रिषु **पूर्वमेव** कार्यं **बलवत्** । तद्यथा—एकमेव ... स्याऽऽधिं कृत्वा किमपि गृहीत्वा पुनरन्यस्याप्याधाय किमपि गृह्णाति; ... तद्भवति, नोत्तरस्य । एवं **प्रतिग्रहे क्रये** च ॥ नन्वाहितस्य तदानीं ... नराधानमेव न संभवति । एवं दत्तस्य क्रीतस्य च दानक्रयौ नोपपद्येते ... वचनमनर्थकम् । उच्यते—[8]अस्वत्वेऽपि यदि मोहात्कश्चिल्लोभाद्वा पुनः ... करोति तत्र पूर्वं बलवदिति न्यायमूलमेवेदं वचनमित्यचोद्यम् ॥ २३ ॥

---

**टिप्प०**—1 पूगादीनां विवरणमग्रे ३० तमे पद्ये द्रष्टव्यम्. 2 आभोगः ... तेन च परिणाहवदङ्गणादिकं लक्ष्यते. जलवाहो जलनिर्गममार्गः. 3 दत्तेति ... न्तयोर्द्वन्द्वः दत्तादत्तं विद्यते येषु दत्ताप्रदानिकाख्यविवादपदेषु. 4 विक्रयं... नाख्ये. 5 समाह्वयः प्राणिद्यूतम्. 6 वादिप्रतिवाद्युक्तयोः. 7 द्वे वृद्धिर्यस्य... 'तदस्मिन्' इति कन्. 8 आधिकरणेन तु यद्यपि स्वामिभावो न निवर्तते; त... वध्यते । ततश्च तस्य क्षेत्रस्याधिनिवृत्तौ पुरुषान्तरं प्रत्याधित्वं कर्तुं नैव शक्य...

---

**पाठा०**—१ सर्वेष्वेव विवादेषु A. २ जयति ख.

भुक्तेः कैश्चिद्विशेषणैर्युक्तायाः[1] प्रामाण्यं दर्शयिष्यन् कस्याश्चिद्भुक्तेः कार्यान्तरमाह—

**पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ।**

**परेण भुज्यमानाया धनस्य दशवार्षिकी ॥ २४ ॥**

**परेणा**संबद्धेन[1] **भुज्यमानां** भुवं **धनं** वा पश्यतः[2] अब्रुवतः 'मदीयेयं भूः त्वया भोक्तव्या' इत्यप्रतिषेधयतः तस्या **भूमेर्विंशतिवार्षिकी** अप्रतिरवं[3] शतिवर्षोपभोगनिमित्ता **हानि**र्भवति । **धनस्य** तु हस्त्यश्वादेर्**दशवार्षिकी** निः । नन्वेतदनुपपन्नम्, नह्यप्रतिषेधात्स्वत्वमपगच्छति । अप्रतिषिद्धस्य[2] दान-यादिवत्स्वत्वनिवृत्तिहेतुत्वस्य लोकशास्त्रयोरप्रसिद्धत्वात् । नापि विंशतिवर्षोप-गात्स्वत्वम्[4]; उपभोगस्य स्वत्वे प्रमाणत्वात्[5], प्रमाणस्य[6] च प्रमेयप्रत्यनुत्पादक-त्, रिक्थक्रयादिषु स्वत्वकारकहेतुष्वपाठाच्च । तथा हि—'स्वामी[7] रिक्थक्रय-भागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं, क्षत्रियस्य विजितम्[3], निर्विष्टं वैश्य-योः' ( गौ. २।१०, ३९-४२ ) इत्यष्टावेव स्वत्वकारकहेतून् गौतमः पठति न म् । नचेदमेव वचनं[4] विंशतिवर्षोपभोगस्य स्वत्वापत्तिहेतुत्वं प्रतिपादयतीति म् । स्वत्वस्य स्वत्वहेतूनां च लोकप्रसिद्धत्वेन शास्त्रैकसमधिगम्यत्वाभावात् । च विभागप्रकरणे निपुणतरमुपपादयिष्यते । गौतमवचनं तु नियमार्थम् ॥ पे च 'अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापं दण्डये-थिवीपतिः ॥' इत्येतदनागमोपभोगस्य स्वत्वहेतुत्वे विरुद्ध्यते । नच 'अनागमं यो भुङ्क्ते' इत्येतत्परोक्षभोगविषयम्, 'पश्यतोऽब्रुवत' इति प्रत्यक्षभोगविषयमिति वक्तुम् । 'अनागमं तु यो भुङ्क्ते' इत्यविशेषाभिधानात्, 'नोपभोगे बलं माहर्त्रा तत्सुतेन वा । पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः ॥' इति यनवचनाच्च । समक्षभोगे च हानिकारणाभावेन हानेरसंभवात् । न चैत-त्व्यम्—आधिप्रतिग्रहक्रयेषु पूर्वस्याः क्रियायाः प्राबल्यादपवादेन भूविषये तिवर्षोपभोगयुक्तायाः, धनविषये दशवर्षोपभोगयुक्तायाः, उत्तरस्याः[5] क्रियायाः ल्यमनेनोच्यत इति । यतस्तेषूत्तरैव[8] क्रिया तत्त्वतो नोपपद्यते, स्वमेव[6] ह्याधेयं

टिप्प०—1 कैश्चित् आसेधरहितत्वचिरकालत्वादिभिः. 2 पश्यतः वादिनः. शब्दं यथा तथेत्यर्थः. 4 स्वत्वम् । उत्पद्यत इति शेषः. 5 तस्य स्वत्वविषयक-तिजनकत्वादित्यर्थः. 6 प्रमाणस्य=उपभोगस्य प्रमेयं=स्वत्वं प्रति. 7 स्वामीति ादिषु पञ्चसु सत्सु स्वामी भवति । अप्रतिबन्धो दायो रिक्थं, सप्रतिबन्धः संविभागः, प्रसिद्धः, अरण्यादिष्वनन्यपरिगृहीततृणकाष्ठादिस्वीकरणं परिग्रहः, निध्यादिप्राप्ति-गमः, इमे सर्वसाधारणस्वत्वकारकहेतवः । असाधारणास्तु ब्राह्मणस्य प्रतिग्रहादिना ं, क्षत्रस्य परपराजयेन लब्धं, वैश्यशूद्रयोः निर्विष्टं=भोगरूपेण भृतिरूपेण वा लब्धं, धिकं=असाधारणं स्वत्वजनकम्. 8 तेषु आध्यादिषु.

पाठा०—१ असंबन्धेन. २ अप्रतिषेद्धस्य क. ग. ३ विजितं घ.; विनि-तम्. ४ नचेदं वचनं ग. ५ उत्तरविषयक्रियायाः ख. ६ स्वत्वविशिष्ट-—स्वयमेव घ.

देयं विक्रेयं च भवति । न चाहितस्य दत्तस्य विक्रीतस्य वा स्वत्वमस्ति।
दाने प्रतिग्रहे च दण्डः स्मर्यते—'अदेयं यश्च गृह्णाति यश्चादेयं प्र
उभौ तौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसम् ॥' इति। तथाऽऽध्या
णामपवादत्वेऽस्य श्लोकस्याधिसीमादीनामुत्तरश्लोकेऽपवादो[1] नोपपद्यते।
म्यादीनां हानिरनुपपन्नैव[2]; नापि व्यवहारहानिः, यतः—'उपेक्षां
तूष्णींभूतस्य तिष्ठतः। काले विपन्ने पूर्वोक्ते व्यवहारो न सिद्ध्यति ॥' इति
पेक्षालिङ्गाभावकृता[4] व्यवहारहानिरुक्ता, नतु वस्त्वभावकृता। तथा मनु
१४८ )—'अजडश्चेदपौगण्डो विषयश्चास्य[5] भुज्यते। भग्नं तद्व्यवहारेण
नमर्हति ॥' इति व्यवहारतो भङ्गो दर्शितो न वस्तुतः। व्यवहारभङ्गश्चे
किल वदति 'अजडोऽयमपौगण्डोऽबालोऽयमस्य संनिधौ विंशतिवर्षं
मया भुक्तं, तत्र बहवः साक्षिणः सन्ति; यद्यस्य स्वमन्यायेन मया भु
किमित्येतावन्तं कालमुदास्ते' इति, तत्र चायं निरुत्तरो भवतीति। ए
स्यापि वास्तवो व्यवहारो भवत्येव। 'छलं निरस्य भूतेन व्यवहारान्नयेत्
१९ ) इति नियमात् ॥ अथ[6] मतम्। यद्यपि न वस्तुहानिर्नापि व्यवहा
थापि पश्यतोऽप्रतिषेधतो व्यवहारहानिशङ्का भवतीति तन्निवृत्तये तूष्णीं
व्यमित्युपदिश्यत इति। तच्च न,–स्मार्तकालाया[7] भुक्तेर्हानिशङ्काकारण
तूष्णीं न स्थातव्यमित्येतावन्मात्राभिधित्सायां विंशतिग्रहणमविवक्षितं
अथोच्यते–विंशतिग्रहणमूर्ध्वं पत्रदोषोद्भावननिराकरणार्थम्। यथाह का
'शक्तस्य संनिधावर्थो यस्य लेख्येन भुज्यते। विंशतिवर्षाण्यतिक्रान्तं तत्पत्रं
तम् ॥' इति, तदपि न,—आध्यादिष्वपि विंशतेरूर्ध्वं पत्रदोषोद्भावननि
समत्वेनाधिसीमेत्याद्यपवादासंभवात्[3]। यथाह कात्यायनः—'अथ विं
आधिर्भुक्तः सुनिश्चितः। तेन लेख्येन तत्सिद्धिर्लेख्यदोषविवर्जिता ॥' त
माविवादे निर्णीते सीमापत्रं विधीयते। तस्य दोषाः प्रवक्तव्या
विंशतिः ॥' इति। एतेन 'धनस्य दशवार्षिकी' इत्येतदपि प्रत्युक्तम्।
श्लोकस्य सत्योऽर्थो[4] वक्तव्यः। उच्यते—भूमेर्धनस्य च फलहानिरिह[8] वि
वस्तुहानिर्नापि व्यवहारहानिः। तथा हि—निराक्रोशं विंशतिवर्षोपभोगा
स्वामी न्यायतः क्षेत्रं लभते, तथापि फलानुसरणं[9] न लभते; अप्रति
त्स्वापराधादस्माच्च वचनात्। परोक्षभोगे तु विंशतेरूर्ध्वमपि फलानु
एव; 'पश्यतः' इति वचनात्। प्रत्यक्षभोगे च साक्रोशे; 'अब्रुवतः' इति

टिप्प०—1 अपवादोऽपवादत्वम्. 2 स्वत्वहान्या स्वरूपहानिः. 3 त
4 उपेक्षायां यानि लिङ्गानि जडत्वबालत्वादीनि तेषां योऽभावस्तत्कृता. 5 वि
अस्य धनिनः. 6 अथ मतमित्यन्यथा व्याख्यानं. 7 स्मरणविषयतायोग्य
8 इह 'पश्यत' इत्यत्र वचने. 9 तावत्पर्यन्तं ततस्तेन लब्धेत्यादिः.

पाठा०—१ अस्वत्वस्य ख. २ विषये चास्य भुञ्जते. ३ समत्वे
दासंभवात् ख. ४ सत्योऽर्थो निर्दुष्टोऽर्थः. सभ्योऽन्योऽर्थो ग.

शतेः प्राक् प्रत्यक्षे निराक्रोशे च लभते; विंशतिग्रहणात् । ननु तदुत्पन्नस्यापि स्य स्वत्वात्तद्धानिरनुपपन्नैव । बाढम्, तस्य स्वरूपाविनाशेन तथैवावस्थाने —तदुत्पन्नपूगपनसवृक्षादीनां यत्पुनस्तदुत्पन्नमुपभोगान्नष्टं तत्र स्वरूपनाशा- स्वत्वनाशः । 'अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापं ण्डयेत्पृथिवीपतिः ॥' इत्यनेन वचनेन निष्क्रयरूपेण गणयित्वा चौरवत्तत्समं द्रदानं प्राप्तं[1], 'हानिर्विंशतिवार्षिकी' इत्यनेनापोद्यते[2] । राजदण्डः पुनरस्त्येव विंशते- र्ध्वमपि, अनागमोपभोगादपवादाभावाच्च[3] । तस्मात्स्वाम्युपेक्षालक्षणस्यापराधाद- च्च वचनाद्विंशतेरूर्ध्वं फलं नष्टं न लभत इति स्थितम्[4] । एतेन 'धनस्य दश- र्षिकी' इत्येतदपि व्याख्यातम् ॥ २४ ॥

अस्यापवादमाह—

**आधिसीमोपनिक्षेपजडबालधनैर्विना ।**
**तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि ॥ २५ ॥**

आधिश्च सीमा च उपनिक्षेपश्च **आधिसीमोपनिक्षेपाः** । जडश्च बालश्च बालौ, तयोर्धने **जडबालधने,** आधिसीमोपनिक्षेपाश्च जडबालधने च धिसीमोपनिक्षेपजडबालधनानि **तैर्विना** । उपनिक्षेपो नाम रूपकसंख्याप्रदर्श- रक्षणार्थं परस्य हस्ते निहितं द्रव्यम् । यथाह नारदः—'स्वं[5] द्रव्यं यत्र विस्र- न्निक्षिपत्यविशङ्कितः । निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥' इति । उप- धानमुपनिधिः । आध्यादिषु पश्यतोऽब्रुवतोऽपि भूमेर्विंशतेरूर्ध्वं धनस्य च भ्यो वर्षेभ्य ऊर्ध्वमप्युपचयहानिर्न[6] भवति; पुरुषापराधस्य तथाविधस्या- त्, उपेक्षाकारणस्य तत्र[7] तत्र संभवात् । तथा हि—आधेराधित्वोपाधिक भोग इत्युपेक्षायामपि न पुरुषापराधः । सीम्नश्चिरकृततुषाङ्गारादिचिह्नैः ध्यत्वादुपेक्षा संभवति; उपनिक्षेपोपनिध्योर्भुक्तेः प्रतिषिद्धत्वात्, प्रतिषेधाति- पभोगे च सोदयफललाभादुपेक्षोपपत्तिः । जडबालयोर्जडत्वाद्बालत्वादुपेक्षा व; **राज्ञो** बहुकार्यव्याकुलत्वात्, **स्त्रीणा**मज्ञानादप्रागल्भ्याच्च । **श्रोत्रिय-** ध्ययनाध्यापनतदर्थविचारानुष्ठानव्याकुलत्वादुपेक्षा युक्तैव । तस्मादाध्यादिषु त्रोपेक्षाकारणसंभवात्समक्षभोगे निराक्रोशे च न कदाचिदपि फलहानिः ॥२५॥

आध्यादिषु दण्डविशेषप्रतिपादनार्थमाह—

**आध्यादीनां विहर्तारं धनिने दापयेद्धनम् ।**
**दण्डं च तत्समं राज्ञे शक्त्यपेक्षमथापि वा ॥ २६ ॥**

य **आध्यादीनां** श्रोत्रियद्रव्यपर्यन्तानां चिरकालोपभोगबलेन**ापहर्ता** तं विवा-

टिप्प०—1 प्राप्तं, तत् द्रव्यदानम्. 2 अपोद्यते बाध्यते. 3 स्वत्वहेतुः प्रति- क्रयादिरागमः. 4 उक्तवत्तस्यापि फलहानि परतया सुयोज्यत्वात्. 5 यत् स्वं द्रव्यं यत्र हस्ते विस्रम्भाद्विश्वासान्निक्षिपति. 6 उपचयहानिः फलहानिः. 7 तत्र तत्र आध्यादिषु.

पाठा०—१ तस्योपनिधि ग. २ आधित्वनिमित्तकः. ३ सोदयफलभा- त् घ. ४ आध्यादीनां निहन्तारं दापयेद्धनिने धनम् A.

दास्पदीभूतं **धनं स्वामिने दापयेदि**त्यनुवादः । **दण्डं च** तत्स्प-
स्पदीभूतद्रव्यसमं **राज्ञे दापयेदि**ति विधिः[1] । यद्यपि गृहक्षेत्रादिषु त-
न संभवति **तथापि**—'मर्यादायाः प्रभेदे च सीमातिक्रमणे तथा' (
इत्यादिर्वक्ष्यमाणो दण्डो द्रष्टव्यः । अथ तत्समदण्डेनापहर्तुर्दमनं न
धनत्वेन, तदा **शक्त्यपेक्षं धनं दापयेत्** । यावता तस्य दर्पोप-
तावद्दापयेत् । 'दण्डो दमनादित्याहुस्तेनादान्तान्दमयेत्' ( गौ० ११।
दण्डग्रहणस्य दमनार्थत्वात् । यस्य तु तत्सममपि द्रव्यं नास्ति, सोऽपि
पीड्यते तावद्दाप्यः । यस्य पुनः किमपि धनं नास्ति असौ धिग्दण्डा-
नीयः । तथा च मनुः ( ८।१२९ )—'धिग्दण्डं[2] प्रथमं कुर्याद्वाग्दण्डं
रम् । तृतीयं धनदण्डं तु वधदण्डमतः परम् ॥' इति । वधदण्डोऽपि
ब्राह्मणव्यतिरिक्तानां[3] दशधा[4] दर्शितः । तथाह मनुः (८।१२५)—'दश
दण्डस्य मनुः स्वायंभुवोऽब्रवीत् । त्रिषु वर्णेषु यानि स्युरक्षतो[5] ब्राह्मणो
उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् । चक्षुर्नासा च कर्णौ च धनं
च ॥' इति । एतेषां यन्निमित्तापराधस्तत्रैवोपस्थादौ निग्रहः कार्य इति
कर्म वा कारयितव्यो बन्धनागारं वा प्रवेशयितव्यः । यथोक्तं काल
'धनदानासहं बुद्ध्वा स्वाधीनं कर्म कारयेत् । अशक्तौ बन्धनागारं
ब्राह्मणादृते ॥' इति । ब्राह्मणस्य पुनर्द्रव्याभावे कर्मवियोगादीनि प्र
यथाह गौतमः ( १२।४७ )—'कर्मवियोगविख्यापननिर्वासनाङ्ककरणा[6]
इति । नारदेनापि ( १४।८ )—'वधः[7] सर्वस्वहरणं पुरान्निर्वासनाङ्क[8]
च्छेद इत्युक्तो दण्ड उत्तमसाहसः ॥ अविशेषेण सर्वेषामेष दण्डविधिः
इत्युक्त्वोक्तम्—'वधादृते ब्राह्मणस्य, न वधं ब्राह्मणोऽर्हति ॥' इति ।
मुण्डनं दण्डस्तस्य निर्वासनं पुरात् । ललाटे चाभिशस्ताङ्कः प्रयाणं गर्द
( नारदः १४।९ ) इति ॥ अङ्कने च व्यवस्था दर्शिता ( ९।२३७ )—
भगः कार्यः सुरापाने सुराध्वजः । स्तेये तु श्वपदं कार्यं ब्रह्महण्यशिराः
इति । यत्तु—'चक्षुर्निरोधो ब्राह्मणस्य' (२।२७।१७) इत्यापस्तम्बवचनं,
पुरान्निर्वासनसमये वस्त्रादिना चक्षुर्निरोधः कर्तव्य इति तस्यार्थः, न तु
रणम्; 'अक्षतो ब्राह्मणो व्रजेत्' ( मनुः ८।१२३ ) 'न शारीरो ब्राह्मण
( गौतमः १२।४६ ) इत्यादिमनुगौतमादिवचनविरोधादित्यलं प्रसङ्गेन ॥

**टिप्प०**—1 विधिः प्राड्विवाकादेरिति शेषः. 2 धिग्दण्डो धिगिति
वाग्दण्डः परुषवाक्यवचनात्मकः, धनदण्डो धनापहारः, वधदण्डः शारीरो द
जीवितयोगान्तः. 3 व्यतिरिक्तानां तु इत्यपि क्वचित्. 4 नवधा इति क्वचित्पाठः. 5
शारीरसकलवधदण्डरहितः. 6 अवृत्तौ दुराचारे स्वव्यापारनिरोधान्यायप्रख्या
7 वधः प्राणवियोगानुकूलो व्यापारः. 8 यदङ्गकृतोऽपराधस्तच्छेदः.

स्वत्वाव्यभिचारत्वेन भोगस्य स्वत्वे प्रामाण्यमुक्तम्[1] । भोगमात्रस्य स्वत्व-
भिचारित्वात्कीदृशो भोगः प्रमाणमित्यत आह—

**आगमो[1]ऽभ्यधिको भोगाद्विना पूर्वक्रमागतात् ।**

स्वत्वहेतुः प्रतिग्रहक्रयादिः **आगमः** । स भोगा**दभ्यधिको** बलीयान्; स्वत्व-
घने भोगस्यागमसापेक्षत्वात् । यथाह नारदः (१।८५)—'आगमेन विशुद्धेन[2]
गो याति प्रमाणताम् । अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति ॥' इति ।
भोगमात्रात्स्वत्वागमः; परकीयस्याप्यपहारादिनोपभोगसंभवात् । अतएव—
गं केवलतो[3] यस्तु कीर्तयेन्नागमं क्वचित् । भोगच्छलापदेशेन विज्ञेयः स तु
करः ॥' (नारदः १८।६) इति स्मर्यते । अतश्च सागमो दीर्घकालो निरन्तरो
क्रोशः प्रत्यर्थिप्रत्यक्षश्चेति पञ्चविशेषणयुक्तो भोगः प्रमाणमित्युक्तं भवति ।
च स्मर्यते—'सागमो[4] दीर्घकालश्चाविच्छेदोऽपर[2]रवोज्झितः । प्रत्यर्थिसंनिधानश्च
भोगोऽपि पञ्चधा ॥' इति । क्वचिच्चागमननिरपेक्षस्यापि भोगस्य प्रामाण्य-
आह—**विना पूर्वक्रमागता**दिति । **पूर्वेषां** पित्रादीनां त्रयाणां **क्रमः**
क्रमः, तेनागतो यो भोगस्त**स्माद्विना** । आगमोऽभ्यधिक इति संबन्धः । स[5]
रागमादभ्यधिकः आगमनिरपेक्षः । प्रमाणमित्यर्थः । तत्राप्यागमोऽज्ञातनिर-
ो न सत्तानिरपेक्षः । सत्ता तु तेनैवा[6]वगम्यत इति बोद्धव्यम् । 'विना पूर्व-
ागतात्' इत्येतच्च स्मार्त[7]कालप्रदर्शनार्थम् । 'आगमोऽभ्यधिको भोगात्' इति च
र्तकालविषयम् । अतश्च स्मरणयोग्ये काले योग्यानुपलब्ध्या आगमाभाव-
यसंभवादागमज्ञानसापेक्षस्यैव भोगस्य प्रामाण्यम् । अस्मार्ते[8] तु काले योग्या-[9]
लब्ध्यभावेनागमाभावनिश्चयासंभवादागमज्ञाननिरपेक्ष एव संततो भोगः
णम् । एतदेव स्पष्टीकृतं कात्यायनेन—'स्मार्तकाले क्रिया[10] भूमेः सागमा
करिष्यते । अस्मार्तेऽनुगमाभावात्क्रमात्त्रिपुरुषागता ॥' इति । स्मार्तश्च कालो
शतपर्यन्तः; 'शतायुर्वै पुरुषः' इति श्रुतेः । अनुगमाभावादिति योग्यानु-
लब्ध्यभावेनागमाभावनिश्चयासंभवादित्यर्थः । अतश्च वर्षशताधिको भोगः
तोऽप्रतिरवः[11] प्रत्यक्षश्चागमाभावे वाऽनिश्चितेऽव्यभिचारादाक्षिप्तागमः स्वत्वं
यति । अस्मार्तेऽपि कालेऽनागमस्मृतिपरम्परायां सत्यां न भोगः प्रमाणम् ।
त एव 'अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापं
डयेत्पृथिवीपतिः ॥' इत्युक्तम् । नच 'अनागमं तु यो भुङ्क्ते' इत्येकवचननिर्देशात्

टिप्प०—1 पूर्व २४ श्लोके 'पश्यतोऽब्रुवंत' इत्यत्रेत्याशयः. 2 कापट्यरहितेन. केवलम्. 4 सागमो विशुद्धागमसहितः, अविच्छेदो निरन्तरः, अपरवोज्झितो नुक्रोशः. 5 सः पूर्वक्रमागतो भोगः. 6 विशिष्टेनोपभोगेनैव. 7 स्मार्तः स्मरणयोग्य-ः. आगमज्ञानसापेक्षः । 8 आगमज्ञाननिरपेक्षोऽस्मार्तः । 9 योग्यत्वे सत्यनुप-ब्धियोग्यानुपलब्धिस्तस्या अभावे न. 10 क्रिया प्रमाणम्. 11 निरनुक्रोशः.

पाठा०—१ आगमोऽत्यधिको A. २ अपरिवर्जित.

'बह्वन्यब्दशतान्यपि' इति 'अपि'शब्दप्रयोगात्प्रथमस्यैव पुरुषस्य निराग कालोपभोगेऽपि दण्डविधानमिति मन्तव्यम्। द्वितीये तृतीये वा पुरुषे नि भोगस्य प्रामाण्यप्रसङ्गात्। न चैतदिष्यते—'आदौ तु कारणं[1] दानं मध्ये सागमा' ( नारदः २।८७ ) इति नारदस्मरणात्। तस्मात्सर्वत्र निराग 'अनागमं तु यो भुङ्क्ते' इत्येतद्द्रष्टव्यम्। यदपि 'अन्यायेनापि यद्भुक्तं पि तरैस्त्रिभिः। न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम्॥' इति, तद सह पूर्वतरैस्त्रिभिरिति योज्यम्। तत्रापि 'क्रमात्त्रिपुरुषागत'मित्यस्मार्तकाले लक्षणम्। त्रिपुरुषविवक्षायामेकवर्षाभ्यन्तरेऽपि पुरुषत्रयातिक्रमसंभवात् वर्षे निरागमस्य भागस्य प्रामाण्यप्रसंगः। तथा सति 'स्मार्तकाले क्रि सागमा भुक्तिरिष्यते' इति स्मृतिविरोधः, 'अन्यायेनापि यद्भुक्तम्' इत्येत नापि भुक्तमपहर्तुं न शक्यं, किं पुनरन्यायानिश्चये इति व्याख्येयम्; 'अ श्रवणात्। यच्चोक्तं हारीतेन—'यद्विनाऽऽगममत्यन्तं भुक्तं पूर्वैस्त्रिभि[2] तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम्॥' इति, तत्राप्यत्यन्तमागमं अत्यन्तमुपलभ्यमानमानमागमं विनेति व्याख्येयं, न पुनरागमस्वरूपं आगमस्वरूपाभावे भोगशतेनापि न स्वत्वं भवतीत्युक्तम्। 'क्रमात्त्रिपुरुषाग तदुक्तार्थम्[2]। ननु स्मरणयोग्ये काले भोगस्यागमसापेक्षस्य प्रामाण्यमनु तथा हि—यद्यागमः प्रमाणान्तरेणावगतस्तदा[3] तेनैव स्वत्वावगमान स्वत्वे आगमे वा प्रामाण्यम्। अथ प्रमाणान्तरेणागमो नावगतः कथं त भोगः प्रमाणम्? उच्यते,—प्रमाणान्तरेणावगतागमसहित एव निरन्तर कालान्तरे स्वत्वं गमयति। अवगतोऽप्यागमो भोगरहितो न कालान्तरे स्व यितुमलम्[4]। मध्ये दानविक्रयादिना स्वत्वापगमसंभवादिति सर्वमनवद्यम्॥

आगमसापेक्षो भोगः प्रमाणमित्युक्तम्, आगमस्तर्हि भोगनिरपेक्ष एव मित्यत आह—

**आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो॥**

यस्मिन्नागमे **स्वल्पापि भुक्तिर्भोगो नास्ति तस्मिन्नागमे** बलं नैवास्ति। अयमभिसंधिः—स्वस्वत्वनिवृत्तिः परस्वत्वापादनं च दानम्; त्वापादनं च परो यदि स्वीकरोति तदा संपद्यते, नान्यथा। स्वीकारश्च त्रिवि मानसः, वाचिकः, कायिकश्चेति। तत्र मानसो ममेदमिति संकल्परूपः। वा ममेदमित्याद्यभिव्याहारोल्लेखी सविकल्पकः प्रत्ययः। कायिकः[3] पुनरुपादाना नादिरूपोऽनेकविधः। तत्र च नियमः स्मर्यते—'दद्यात्कृष्णाजिनं पृष्ठे गां करिणं करे[5]। केसरेषु तथैवाश्वं दासीं शिरसि दापयेत्॥' इति। आश्व

**टिप्प०**—1 कारणं क्रिया प्रमाणमिति यावत्. 2 असार्तकालोपलक्षणार्थक्रम्. 3 भोगान्येन प्रत्यक्षादिना. 4 अलं समर्थः. 5 करे शुण्डादण्डे.

**पाठा०**—१ प्रथमस्य पुरुषस्य ख. २ भुक्तं पूर्वतरैस्त्रिभिः. ३ कायिक

आह—'अनुमन्त्रयेत[1] प्राण्यभिमृशेद्वप्राणि कन्यां च' इति। तत्र हिरण्यवस्त्रादा-दकदानानन्तरमेवोपादानादिसंभवात् त्रिविधोऽपि स्वीकारः संपद्यते। क्षेत्रादौ तु फलोपभोगव्यतिरेकेण कायिकस्वीकारासंभवात्स्वल्पेनाप्युपभोगेन भवितव्यम्; अन्यथा दानक्रयादेः संपूर्णता न भवतीति फलोपभोगलक्षणकायिकस्वीकारविकल आगमो दुर्बलो भवति तत्सहितादागमात्[1]। एतच्च द्वयोः पूर्वापरकालापरिज्ञाने। पूर्वापरकालपरिज्ञाने तु विगुणोऽपि पूर्वकालागम एव बलीयानिति। अथवा—लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधम्' इत्युक्तं एतेषां समवाये कुत्र यस्य प्राबल्यमित्यत्रेदमुपतिष्ठते—'आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात्। आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो॥' इति। अयमर्थः—आद्ये पुरुषे साक्षिभिर्भावित आगमो भोगादप्यधिको बलवान्। पूर्वक्रमागताद्भोगाद्विना। स तु तृतीयः पूर्वक्रमागतो भोगश्चतुर्थे पुरुषे लिखितेन भावितादागमाद्बलवान्।[2] मध्यमे तु भिन्नोगरहितादागमात्स्तोकभोगसहितोऽप्यागमो बलवानिति। एतदेव नारदेन स्पष्टीकृतम्—'आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा। कारणं भुक्तिरेवैका संतता या चिरन्तनी॥' इति॥ २७॥

'पश्यतोऽब्रुवत' (व्य० २४) इत्यत्र विंशतिवर्षोपभोगादूर्ध्वं भूमेर्धनस्यापि दशवर्षोपभोगादूर्ध्वं फलानुसरणं न भवतीत्युक्तम्, तत्र फलानुसरणवद्दण्डानुसरणमपि न भविष्यतीत्याशङ्क्य पुरुषव्यवस्थया प्रामाण्यव्यवस्थया च दण्डव्यवस्थां दर्शयितुमाह—

**आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत्।**
**न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी॥ २८॥**

येन पुरुषेण भूम्यादेरागमः स्वीकारः कृतः स पुरुषः 'कुतस्ते क्षेत्रादिकम्' इत्यभियुक्तस्तमागमं प्रतिग्रहादिकं[2] लिखितादिभिरुद्धरेत्[3] भावयेत्। अनेन तस्य पुरुषस्यागममनुद्धरतो दण्ड इत्युक्तं भवति। तत्सुतो द्वितीयोऽभियुक्तो नागममुद्धरेत्, किंतु अविच्छिन्नाऽप्रतिरव-समक्ष-भोगम्। अनेन चागममनुद्धरतो द्वितीयस्य न दण्डोऽपि तु विशिष्टं भोगमनुद्धरतो दण्ड इति प्रतिपादितम्। तत्सुतस्तृतीयो नागमं नापि विशिष्टं भोगमुद्धरेत्, अपि तु क्रमागतं भोगमात्रम्। अनेनापि तृतीयस्य क्रमायातभोगानुद्धरणे दण्डो नागमानुद्धरणे न विशिष्टभोगानुद्धरणे चेत्यभिहितम्। तत्र तयोर्द्वितीयतृतीययोर्भुक्तिरेव गरीयसी। सापि द्वितीये गुरुस्तृतीये गरीयसीति विवेक्तव्यम्। त्रिष्वप्यागमानुद्धरणेऽर्थहानिः समानैव, दण्डे तु विशेष इति तात्पर्यार्थः। उक्तं च हारीतेन—'आगमस्तु

टिप्प०—1 प्रतिग्राह्यो यदा प्राणी बलवान् वक्तुं समर्थस्तदा तं प्रतिग्राहं प्रतिग्रहीता अनुमन्त्रयेत. 2 केवलभोगस्य स्मार्तकालत्वात् स्वते अप्रामाण्यात्. 3 प्रतिपादयेत.

पाठा०—१ सहितादागमाभावात् ख. घ; दनुमन्त्रयेत्. २ प्रतिग्रहादीनि ख.

कृतो येन स दण्ड्यस्तमनुद्धरन्। न तत्सुतस्तत्सुतो वा भोग्यहानिस्तयोः
इति ॥ २८ ॥

अस्मार्तकालोपभोगस्यागमज्ञाननिरपेक्षस्य प्रामाण्यमुक्तं 'विना पूर्वक
(व्य० २७) इत्यत्र, तस्यापवादमाह—

**योऽभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत्।**
**न तत्र कारणं भुक्तिरागमेन विना कृता ॥ २९**

यदा पुनराहर्त्रादिर**भियुक्तो**ऽकृतव्यवहारनिर्णय एव **परेतः स्यात्**
गतो भवेत्तदा **तस्य रिक्थी** पुत्रादिस्तमागमम**नुद्धरेत्**। यस्मात्तत्र
वहारे **भुक्तिरागमरहिता** साक्ष्यादिभिः साधितापि **न प्रमाणम्**;
गेन भोगस्य सापवादत्वात्। नारदेनाप्युक्तम् (१।९३)—'तथारूढविवाद
व्यवहारिणः। पुत्रेण सोऽर्थः संशोध्यो न तं भोगो निवर्तयेत् ॥' इति।

अनिर्णीतव्यवहारे व्यवहर्तरि प्रेते व्यवहारो न निवर्तत इति
निर्णीतेऽपि व्यवहारे, स्थिते च व्यवहर्तरि, व्यवहारः क्वचित्प्रवर्तते क्व
र्तत इति व्यवस्थासिद्धये व्यवहारदर्शिनां बलाबलमाह—

**नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च।**
**पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम् ॥ ३०**

**नृपेण** राज्ञा **अधिकृताः**[2] व्यवहारदर्शने नियुक्ताः—'राज्ञा सभासद
(व्य० २) इत्यादिनोक्ताः **पूगाः** समूहाः, भिन्नजातीनां भिन्नवृत्तीनां ए
निवासिनां,—यथा ग्रामनगरादयः, **श्रेणयो** नानाजातीनामेकजातीनामप्येक
पजीविनां संघाताः,—यथा हेडावुकादीनां[3] ताम्बूलिककुविन्द[4]चर्मकारा
**कुलानि** ज्ञातिसंबन्धिबन्धूनां समूहाः, एतेषां नृपाधिकृतादीनां चतुर्णां
यद्यत्पूर्वं पठितं तत्तद्गुरु बलवज्ज्ञेयं वेदितव्यम्। **नृणां** व्यवहर्तॄणां, व्य
**विधौ** व्यवहारदर्शनकार्ये। एतदुक्तं भवति—नृपाधिकृतैर्निर्णीते व्यवह
जितस्य यद्यप्यसंतोषः कुदृष्टिबुद्ध्या भवति, तथापि न पूगादिषु पुन
भवति। एवं पूगनिर्णीतेऽपि न श्रेण्यादिगमनम्। तथा श्रेणिनिर्णीते कुल
भवति। कुलनिर्णीते तु श्रेण्यादिगमनं भवति। श्रेणिनिर्णीते पूगादि
पूगनिर्णीते नृपाधिकृतगमनं भवतीति। नारदेन पुनर्नृपाधिकृतैर्निर्णीतेऽ
हारे नृपगमनं भवतीत्युक्तम्—'कुलानि श्रेणयश्चैव गणाश्चा[5]धिकृता नृपाः[3]।
व्यवहाराणां गुर्वेषामुत्तरोत्तरम्' इति। तत्र च नृपगमने सोत्तरसभ्ये[4]

---

टिप्प०—1 भोग्येति। भोग्यहानिरर्थहानिस्तदनुद्धरणे तयोर्द्वितीयतृतीययो
2 अधिकृताः प्राड्विवाकादयः. 3 देशान्तरं गत्वा प्रस्थाप्य वाऽश्वविक्रेतारो हे
4 कुविन्दस्तन्तुवायः. 5 हीनवर्णानां संघातो गणः.

---

पाठा०—१ नवारूढः ख. ग. २ निवारयेत् घ. ३ नृपैः ग. ४
रेति उत्तरश्चासौ सभ्यश्चेति तत्सहितेन. स्वोत्तर ख.

पूर्वैः सभ्यैः सपणव्यवहारे[1] निर्णीयमाने यद्यसौ कुदृष्टवादी पराजितस्तदाऽसौ दण्ड्यः। अथासौ जयति तदाऽधिकृताः सभ्या दण्ड्याः ॥ ३० ॥

दुर्बलैर्व्यवहारदर्शिभिर्दृष्टो व्यवहारः परावर्तते, प्रबलदृष्टस्तु न निवर्तत इत्युक्तम्; इदानीं प्रबलदृष्टोऽपि व्यवहारः कश्चिन्निवर्तेत इत्याह—

**बलोपाधिविनिर्वृत्तान्व्यवहारान्निवर्तयेत् ।**
**स्त्रीनक्तमन्तरागारबहिःशत्रुकृतांस्तथा ॥ ३१ ॥**

**बलेन** बलात्कारेण **उपाधिना** भयादिना **विनिर्वृत्ता**न्निष्पन्नान्**व्यवहारा**न्**निवर्तयेत्**। तथा **स्त्री**भिः, **नक्तं** रात्रावस्त्रीभिरपि, **अन्तरागारे** गृहाभ्यन्तरे, **बहि**र्ग्रामादिभ्यः, **शत्रुभिश्च कृतान्** व्यवहारान् '**निवर्तयेत्**' इति संबन्धः ॥ ३१ ॥

असिद्धव्यवहारिण आह—

**मत्तोन्मत्तार्तव्यसनिबालभीतादियोजितः ।**
**असंबद्धकृतश्चैव व्यवहारो न सिद्ध्यति ॥ ३२ ॥**

अपि च, **मत्तो** मदनीयद्रव्येण, **उन्मत्त** उन्मादेन पञ्चविधेन वातपित्तश्लेष्मसंनिपातग्रहसंभवेनोपसृष्टः, **आर्तो** व्याध्यादिना, **व्यसन**मिष्टवियोगोऽनिष्टप्राप्तिजनितं दुःखं, तद्वान्व्यसनी; बालो व्यवहारायोग्यः, **भीतो**ऽरातिभ्यः, 'आदि'ग्रहणात्पुरराष्ट्रादिविरुद्धः ।—'पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विसर्जितः। अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः ॥' इति मनुस्मरणात् । एतै**र्योजितः** व्यवहारो न सिद्ध्यति । अनियुक्ता**संबद्धकृतोऽपि व्यवहारो न सिद्ध्यती**ति संबन्धः । यत्तु स्मरणम्—'गुरोः शिष्ये पितुः पुत्रे दम्पत्योः स्वामिभृत्ययोः । विरोधे तु मिथस्तेषां व्यवहारो न सिद्ध्यति ॥' इति, तदपि गुरुशिष्यादीनामात्यन्तिकव्यवहारप्रतिषेधपरं न भवति; तेषामपि कथंचिद्व्यवहारदृष्टत्वात् । तथा हि—'शिष्यादिशिष्टिरवधेन शक्तौ रज्जुवेणुविदलाभ्यां तनुभ्यां, पुनरन्येन घ्नन् राज्ञा शास्यः' ( २।४२।४ ) इति गौतमस्मरणात् । 'नोत्तमाङ्गे कथंचन' ( ८।३०० ) इति मनुस्मरणाच्च । यदि गुरुः कोपावेशवशान्महता दण्डेनादिनोत्तमाङ्गे ताडयति, तदा स्मृतिव्यपेतेन मार्गेणाधर्षितः शिष्यो यदि राज्ञे निवेदयति, तदा भवत्येव व्यवहारपदम् ॥ तथा—'भूर्या पितामहोपात्ता' (व्य० १२१) इत्यादिवचनात्पितामहोपात्ते भूम्यादौ पितापुत्रयोः स्वाम्ये समाने, यदि पिता विक्रयादिना पितामहोपात्तं भूम्यादि नाशयति तदा पुत्रो यदि धर्माधिकरणं प्रवे-

टिप्प०—1 सपणे उभयकारितपणसहिते. 2 अनियुक्तत्वेनाप्रेपितत्वेन प्रकृतव्यवहारासंबद्धो यस्तत्कृतः. 3 शिष्टिः शिक्षा, अवधेन अताडनेन.

पाठा०—१ बलोपधि घ. तत्रोपधिः कैतवं. २ उपधिना भयेन घ. ३ असंबन्धकृतः ख. ४ वियोगोऽनिष्टप्राप्तिस्तज्जनितं ख. ग. ५ धिकारिणं विशति ग.

शयति तदा पितापुत्रयोरपि भवत्येव व्यवहारः ॥ यथा—'दुर्भिक्षे धर्म
व्याधौ संप्रतिरोधके । गृहीतं स्त्रीधनं भर्ता नाकामो दातुमर्हति ॥' इति
दुर्भिक्षादिव्यतिरेकेण यदि स्त्रीधनं भर्ता व्ययीकृत्य विद्यमानधनोऽपि
न ददाति तदा दम्पत्योरपीष्यत एव व्यवहारः । तथा भक्तदासस्य स्वा
व्यवहारं वक्ष्यति । गर्भदासस्यापि, गर्भदासादीनधिकृत्य—'यश्चैषां स्वामि
न्मोचयेत्प्राणसंशयात् । दासत्वात्स विमुच्येत पुत्रभागं लभेत च ॥'
दोक्तत्वात्, तदमोचने पुत्रभागादाने च स्वामिना सह व्यवहारः केन
तस्माद्दृष्टादृष्टयोः श्रेयस्करो न भवति गुर्वादिभिर्व्यवहार इति प्रथमं
निवारणीयाः राज्ञा ससभ्येनेति 'गुरोः शिष्ये' इत्यादिश्लोकस्य तात्पर्यार्थः
न्तनिर्बन्धे तु शिष्यादीनामप्युक्तरीत्या प्रवर्तनीयो व्यवहारः । यदपि—
बहुभिः सार्धं स्त्रीणां प्रेष्यजनस्य च । अनादेयो भवेद्वादो धर्मविद्भिरुदा
इति नारदवचनम्, तत्रैकस्यापि—'गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च
(व्य० १८७) तथा—'एकं घ्नतां बहूनां च' (व्य० २२१) इत्यादिस्मरणा
र्बहुभिः सार्धं व्यवहार इष्यत एवेति भिन्नार्थैर्बहुभिरेकस्य युगपद्व्यवहारो
तीति द्रष्टव्यम् । स्त्रीणामित्यपि गोपशौण्डिकादिस्त्रीणां स्वातन्त्र्याद्व्यवहारो भ
तदन्यासां कुलस्त्रीणां पतिषु जीवत्सु तत्पारतन्त्र्यादनादेयो व्यवहार इ
ख्येयम् । 'प्रेष्यजनस्य च' इत्येतदपि प्रेष्यजनस्य स्वामिपारतन्त्र्यात्स्वार्थ
ऽपि स्वाम्यनुज्ञयैव व्यवहारो नान्यथेति व्याख्येयम् ॥ ३२ ॥

परावर्त्यं व्यवहारमुक्त्वा इदानीं परावर्त्यं द्रव्यमाह—

**प्रनष्टाधिगतं देयं नृपेण धनिने धनम् ।**
**विभावयेन्न चेल्लिङ्गैस्तत्समं दण्डमर्हति ॥ ३३ ॥**

**प्रनष्टं** हिरण्यादि शौल्किकस्थानपालादिभिर**धिगतं** राज्ञे समर्पितं
**धनिने दातव्यम्** । यदि धनी रूपसंख्यादिभिर्लिङ्गैर्भावयति । यदि न
तदा तत्समं दण्ड्यः; असत्यवादित्वात् । अधिगमस्य स्वत्वनिमित्तत
प्राप्ते तत्परावृत्तिरनेनोक्ता । अत्र च कालावधिं वक्ष्यति (व्य० १७३)—'शौ
स्थानपालैर्वा नष्टापहृतमाहृतम् । अर्वाक्संवत्सरात्स्वामी हरेत परतो नृपः ॥'
मनुना पुनः संवत्सरत्रयमवधित्वेन निर्दिष्टम् (८।३०)—'प्रनष्टस्वामिकं रिक्थं
त्र्यब्दं निधापयेत् । अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत् ॥' इति
वर्षत्रयपर्यन्तमवश्यं रक्षणीयम् । तत्र यदि संवत्सरादर्वाक् स्वाम्याग

**टिप्प०**—1 संप्रतिरोधकं नाम सर्वस्वहरणं कृत्वा दुर्गादौ परबलैर्निरोध
2 भक्तमन्नम्. तेनान्नार्थी दास इति गम्यते. 3 दाप्यम्.

**पाठा०—१ व्यवहारान् ख. व्यवहारपदं घ. २ जीवत्सु स
३ योजनीयम् ख. ४ रूपकसंख्या ग.**

कलमेव दद्यात्। यदा पुनः संवत्सरादूर्ध्वमागच्छति, तदा किंचिद्भागं रक्षणमूल्यं गृहीत्वा शेषं स्वामिने दद्यात्, यथाह—'आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः। दशमं द्वादशं वापि सतां धर्ममनुस्मरन्॥' (मनु० ८।३०) इति। तत्र प्रथमे वर्षे सकलमेव दद्यात्, द्वितीये द्वादशं भागं, तृतीये दशमं, चतुर्थादिषु षष्ठं भागं गृहीत्वा शेषं दद्यात्। राजभागस्य चतुर्थोऽशोऽधिगन्त्रे दातव्यः। स्वाम्यनागमे तु सकलस्य धनस्य चतुर्थमंशमधिगन्त्रे दत्त्वा शेषं राजा गृह्णीयात्। तथाह गौतमः (१०।३६–३८)—'प्रनष्टस्वामिकमधिगम्य संवत्सरं राज्ञा रक्ष्यम्। ऊर्ध्वमधिगन्तुश्चतुर्थोऽशो राज्ञः शेषम्' इत्यत्र संवत्सरमित्येकवचनमविवक्षितम्। 'राजा त्र्यब्दं निधापयेत्' इति स्मरणात् 'हरेत परतो नृपः' इत्येतदपि स्वामिन्यनागते त्र्यब्दादूर्ध्वं व्ययीकरणाभ्यनुज्ञानपरम्। ततः परमागते तु स्वामिनि व्ययीभूतेऽपि द्रव्ये राजा स्वांशमवतार्य तत्समं दद्यात्। एतच्च हिरण्यादिविषयम्। पश्वादिविषये वक्ष्यति (व्य० १७४)—'पणानेकशफे दद्यात्' इत्यादिना॥३३॥

रथ्याशुल्कशालादिनिपतितस्य सुवर्णादेर्नष्टस्याधिगमे विधिमुक्त्वा अधुना भूमौ निरनिखातस्य सुवर्णादेर्निधिशब्दवाच्यस्याधिगमे विधिमाह—

**राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्धं द्विजः पुनः।**
**विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः॥ ३४॥**
**इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत्।**
**अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव च॥ ३५॥**

उक्तलक्षणं **निधिं**[1] **राजा लब्ध्वा** अर्धं **ब्राह्मणेभ्यो दत्त्वा** शेषं कोशे प्रवेशयेत्। **ब्राह्मणस्तु विद्वान्** श्रुताध्ययनसंपन्नः सदाचारो यदि निधिं लभेत तदा **सर्वमेव गृह्णीयात्, यस्मादसौ सर्वस्य** जगतः **प्रभुः। इतरेण** राजविद्वद्ब्राह्मणव्यतिरिक्तेन अविद्वद्ब्राह्मणक्षत्रियादिना **निधौ लब्धे राजा षष्ठांशम**धिगन्त्रे दत्त्वा शेषं निधिं स्वय**माहरेत्।** यथाह वसिष्ठः—'अप्रज्ञायमानं वित्तं योऽधिगच्छेद्राजा तद्धरेत्, अधिगन्त्रे षष्ठमंशं, प्रदद्यात्' इति। गौतमोऽपि (गौ०१०।३।५)—'निध्यधिगमो राजधनं भवति, न ब्राह्मणस्याभिरूपस्य, अब्राह्मणोऽप्याख्याता षष्ठमंशं लभेतेत्येके' इति। अनिवेदित इति कर्तरि निष्ठा। अनिवेदितश्चासौ विज्ञातश्च राज्ञेऽप्य**निवेदितविज्ञातः**, यः कश्चिन्निधिं लब्ध्वा राज्ञे न निवेदितवान् विज्ञातश्च राज्ञा स सर्वं **निधिं दाप्यो दण्डं** च शक्त्यपेक्षया। अथ निधेरपि स्वाम्यागत्य रूपकसंख्यादिभिः स्वत्वं भावयति तदा तस्मै राजा निधिं

टिप्प०—1 निखातायां भूमौ गुप्तं स्थापितं धनं निधिः, वर्षशतिका वर्षसहस्रिकाश्च निधयो भवन्ति। ते च राजधनम्; 'निध्यधिगमो राजधनम्' (गौ. १०।४३) इति वचनमसर्गमाणनिधातृके निधौ इति द्रष्टव्यम्। 2 तद्धरेदधिगन्त्रे षष्ठांशं दद्यात्।

पाठा०—१ षड्भागं ग. २ चतुर्थो भागः शेषं राज्ञ इति घ. ३ दद्याद्द्विजेभ्योऽर्धं घ. ४ राजधनं न ब्राह्मणस्य ग. घ. ५ रूपकसंख्यादिभिः ख. ग.

दत्त्वा षष्ठं द्वादशं वांऽशं स्वयमाहरेत् । यथाह मनुः ( ८।३५ )—'मम
यो ब्रूयान्निधिं सत्येन मानवः । तस्माद्दीत षड्भागं राजा द्वादशमेव वा ॥'
अंशविकल्पस्तु वर्णकालाद्यपेक्षया वेदितव्यः ॥ ३४–३५ ॥

चौरहृतं प्रत्याह—

**देयं चौरहृतं द्रव्यं राज्ञा जानपदाय तु ।**
**अददद्धि समाप्नोति किल्बिषं यस्य तस्य तत् ॥ ३६ ॥**

**चौरैर्हृतं** द्रव्यं चौरेभ्यो विजित्य **जानपदाय** स्वदेशनिवासिने
द्रव्यं तस्मै राज्ञा दातव्यम् । **हि** यस्मात् **अददत्** अप्रयच्छन्
**तदपहृतं** द्रव्यं **तस्य किल्बिषमाप्नोति** । **तस्य** चौरस्य **च** । यथाह
(८।४०)—'दातव्यं सर्ववर्णेभ्यो राज्ञा चौरैर्हृतं धनम् । राजा तदुपयुञ्जान
स्याप्नोति किल्बिषम् ॥' इति । यदि चौरहस्तादादाय स्वयमुपभुङ्क्ते तदा
किल्बिषमाप्नोति । अथ चौरहृतमुपेक्षते तदा जानपदस्य किल्बिषम् । अथ चौर
हरणाय यतमानोऽपि न शक्नुयादाहर्तुं तदा तावद्धनं स्वकोशाद्दद्यात् ।[1]
गौतमः—(१०।४६) 'चौरहृतमवजित्य यथास्थानं गमयेत्कोशाद्वा दद्यात्'
कृष्णद्वैपायनोऽपि—'प्रत्याहर्तुं न शक्तस्तु धनं चौरैर्हृतं यदि । स्वकोशात्
स्यादशक्तेन महीक्षिता ॥' इति ॥ ३६ ॥

इत्यसाधारणव्यवहारमातृकाप्रकरणम् ।

---

## अथ ऋणादानप्रकरणम् ३

साधारणासाधारणरूपां व्यवहारमातृकामभिधायाधुनाष्टादशानां व्यवहार[2]
नामाद्यमृणादानपदं दर्शयति—'अशीतिभागो वृद्धिः स्यात्' इत्यादिना,
आधिस्तद्रुत्पन्ने प्रविष्टे द्विगुणे धने' ( व्य० ६४ ) इत्येवमन्तेन । तच्च ऋण
सप्तविधम्—ईदृशमृणं देयं, ईदृशमदेयं, अनेनाधिकारिणा देयं, अस्मिन्
देयं, अनेन प्रकारेण देयम्, इत्यधमर्णे पञ्चविधम् । उत्तमर्णे दानविधिः, आ
विधिश्चेति द्विविधमिति । एतच्च नारदेन स्पष्टीकृतम् (१।१।४)—'ऋणं
मदेयं च येन यत्र यथा च यत् । दानग्रहणधर्माभ्यामृणादानमिति स्मृतम्'[3]
इति । तत्र प्रथममुत्तमर्णस्य दानविधिमाह, तत्पूर्वकत्वादितरेषाम्—

**अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।**
**वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा ॥ ३७ ॥**

**मासि मासि** प्रतिमासं बन्धकं विश्वासार्थं यदाधीयते, आधिरिति यावत्

---

टिप्प०—1 'यच्चौरैर्हृतमशक्यप्रत्यायनं तत् राज्ञा स्वकोशाद्दातव्यम्' इत्यादि।
2 अग्रे ६४ तमपद्यव्याख्याने द्रष्टव्यम्.

---

पाठा०—१ तदुपभुञ्जानः ग. घ. २ व्यवहाराणामाद्य घ. ३ ध
ऋणादान ख. ग.

बन्धकेन सह वर्तत इति सबन्धकः प्रयोगः, तस्मिन्**सबन्धके** प्रयोगे प्रयुक्तस्य द्रव्यस्य **अशीतितमो भागो वृद्धि**र्धर्म्या भवति । **अन्यथा** बन्धकरहिते प्रयोगे **वर्णानां** ब्राह्मणादीनां **क्रमेण द्वित्रिचतुष्पञ्चकं शतं** धर्म्यं **भवति**। ब्राह्मणेऽधमर्णे द्विकं शतं, क्षत्रिये त्रिकं, वैश्ये चतुष्कं, शूद्रे पञ्चकम्। मासि मासीत्येव द्वौ वा त्रयो वा चत्वारो वा पञ्च वा द्वित्रिचतुःपञ्चाः, अस्मिन् शते वृद्धिर्दीयते इति द्वित्रिचतुःपञ्चकं शतम्। 'संख्याया अतिशदन्तायाः कन्' (पा. ५।१।२२) इत्यनुवृत्तौ 'तदस्मिन्वृद्धयायलाभशुल्कोपदा दीयते' (पा. ५।१।४७) इति कन्। (वृद्धेर्वृद्धिश्चक्रवृद्धिः प्रतिमासं तु कालिका । इच्छाकृता कारिता स्यात्कायिका कायकर्मणा ॥) इयं च वृद्धिर्मासि मासि गृह्यत इति कालिका । इयमेव वृद्धिर्दिवसगणनया विभज्य प्रतिदिवसं गृह्यमाणा कायिका भवति । तथा च नारदेन (१।१०२,४)—'कायिका कालिका चैव कारिता च तथा परा । चक्रवृद्धिश्च शास्त्रेषु तस्य वृद्धिश्चतुर्विधा ॥' इत्युक्त्वोक्तम्—'कायाविरोधिनी शश्वत्पणपादादिकायिका । प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका मता ॥ वृद्धिः सा कारिता या ऽधमर्णिकेन स्वयं कृता । वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता ॥' (१।१०३-४) इति ॥ ३७ ॥

ग्रहीतृविशेषेण वृद्धेः प्रकारान्तरमाह—

**कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् ।**

कान्तारमरण्यं तत्र गच्छन्तीति कान्तारगाः । ये वृद्धया धनं गृहीत्वाधिकलाभार्थमतिगहनं प्राणधनविनाशशङ्कास्थानं प्रविशन्ति ते दशकं शतं दद्युः । ये [1]समुद्रगास्ते विं[2]शकं शतम् । मासि मासीत्येव । एतदुक्तं भवति—कान्तारगेभ्यो दशकं शतं, सामुद्रेभ्यश्च विंशकं शतं, उत्तमर्ण आदद्यात्; मूलविनाशस्यापि शङ्कितत्वादिति ॥–

इदानीं कारितां वृद्धिमाह—

**दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ॥ ३८ ॥**

सर्वे वा ब्राह्मणादयोऽधमर्णाः अबन्धके सबन्धके वा स्वकृतां स्वाभ्युपगतां वृद्धिं सर्वासु जातिषु दद्युः । क्वचिदकृतापि वृद्धिर्भवति; यथाह नारदः (१।१०८)—'न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् । अनकारितमप्यूर्ध्वं वत्सरार्धाद्विवर्धते ॥' इति । यस्तु याचितकं गृहीत्वा, देशान्तरं गतस्तं प्रति कात्यायनेनोक्तम्—'यो याचितकमादाय तमदत्त्वा दिशं व्रजेत् । ऊर्ध्वं संवत्सरात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥' इति । यश्च याचितकमादाय याचितोऽप्यदत्त्वा देशान्तरं [3]व्रजति तं

टिप्प०—1 सामुद्राः समुद्रव्यवहारिणः । केचित्तु—कान्तारं वर्णापशदत्वं ये गच्छन्ति ते कान्तारगाः वर्णापशदाः । सह मुद्रया नियमेन वर्तन्त इति समुद्रो वर्णाश्रमविषयः, तमतिलंघयंति ये ते विपरीतलक्षणया वा सामुद्रा विकर्मस्था इत्याचख्युः । कान्तारगादीनामेव स्वकृता सर्वजातिविषया साधारणी वृद्धिर्न सर्वेषाम्—मेधा० ।

पाठा०—१ ख-पुस्तकेऽधिकोऽयम्. २ विंशतिकं ख. ३ याति घ.

प्रति तेनैवोक्तम्—'कृतोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत् । ऊर्ध्वं
त्रयात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥' इति । यः पुनः स्वदेशे स्थित एव
याचितकं न ददाति तं याचितकालादारभ्याकारितां वृद्धिं दापयेद्राजा ।
'स्वदेशेऽपि स्थितो यस्तु न दद्याद्याचितः क्वचित् । तं ततोऽकारितां वृद्धिमनि-
च्छन्तं च दापयेत् ॥' इति । अनाकारितवृद्धेरपवादो नारदेनोक्तः—'
भृतिर्न्यासो दण्डो यश्च प्रकल्पितः । वृथादानाक्षिकपणा वर्धन्ते नाविवक्षिताः ॥'
इति । अविवक्षिता अनाकारिता इति ॥ ३८ ॥

अधुना द्रव्यविशेषेण वृद्धिविशेषमाह—

**सन्ततिस्तु पशुस्त्रीणां**

**पशुस्त्रीणां सन्ततिरेव वृद्धिः** । पशूनां स्त्रीणां पोषणासमर्थस्य
सन्ततिकामस्य प्रयोगः संभवति । ग्रहणं च क्षीरपरिचर्यार्थिनः ॥

अधुना प्रयुक्तस्य द्रव्यस्य वृद्धिग्रहणमन्तरेणापि चिरकालावस्थितस्य
द्रव्यस्य कियती परा वृद्धिरित्यपेक्षित आह—

**रसस्याष्टगुणा परा ।**

**वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ॥ ३९ ॥**

**रसस्य** तैलघृतादेर्वृद्धिग्रहणमन्तरेण चिरकालावस्थितस्य स्वकृतया
वर्धमानस्य **अष्टगुणा** वृद्धिः **परा**, नातः परं वर्धते । तथा **वस्त्रधान्यहिर-
ण्यानां** यथासंख्यं **चतुर्गुणा त्रिगुणा द्विगुणा** च वृद्धिः **परा** । वसिष्ठेन तु
रसस्य त्रैगुण्यमुक्तम् ( २।४४।७ ) 'द्विगुणं हिरण्यं त्रिगुणं धान्यं । धान्येनैव
व्याख्याताः पुष्पमूलफलानि च । तुलाधृतमष्टगुणम्' इति । मनुना तु
पुष्पमूलफलादीनां च पञ्चगुणत्वमुक्तम्—'धान्ये शदे लवे वाह्ये नातिक्रामति,
पञ्चताम्' इति । शदः क्षेत्रफलं पुष्पमूलफलादि, लवो मेषोर्णाचमरीकेशादिः,
वलीवर्दतुरगादिः । धान्यशदलववाह्यविषया वृद्धिः पञ्चगुणत्वं नातिक्रामति ।
तत्राधमर्णयोग्यतावशेन दुर्भिक्षादिकालवशेन च व्यवस्था द्रष्टव्या । एतच्च
त्प्रयोगे सकृदाहरणे च वेदितव्यम् । पुरुषान्तरसंक्रमणेन प्रयोगान्तर
तस्मिन्नेव वा पुरुषे अनेकशः रेकसेकाभ्यां प्रयोगान्तरकरणे सुवर्णादिकं द्वै
घतिक्रम्य पूर्ववद्वर्धते । सकृत्प्रयोगेऽपि प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं
वृद्ध्याहरणेऽधमर्णदेयस्य द्वैगुण्यासंभवात्पूर्वाहृतवृद्ध्या सह द्वैगुण्यमति
वर्धत एव । यथाह मनुः ( ८।१५१ )—'कुसीदवृद्धिर्द्वैगुण्यं नात्येति

**टिप्प०**—1 आक्षिकपणाक्षक्रीडासंबन्धिनः. 2 फलभोग्यत्वेनार्पितानां या
सा धनिकस्य, तुशब्दात् संततिरेव नापरा. 3 सदं फलं वार्क्षम्, धान्यस्य
पादानात्, लव उदीच्ये ऊर्णाविषयः—**मेधातिथिः** ।

**पाठा०**—१ याचन ग. २ रभ्य वृद्धिं ख. ग. ३ विशेषे क. ४ तु
त्रितय ख. ग. तृतीयमष्ट घ. ५ वृक्षफलं घ. ६ गान्तरीकरणे घ.

।' इति । सकृदाहृतेत्यपि पाठोऽस्ति । उपचयार्थं प्रयुक्तं द्रव्यं कुसीदं, तस्य कुसीदवृद्धिः, सा द्वैगुण्यं नात्येति नातिक्रामति । यदि सकृदाहिता सकृत्प्र-। पुरुषान्तरसंक्रमणादिना प्रयोगान्तरकरणे द्वैगुण्यमत्येति । सकृदाहृतेति तु शनैःशनैः प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं वाऽधमर्णादाहृता द्वैगुण्यमत्येतीति त्येयम् । तथा गौतमेनाप्युक्तम् ( १२।३१ )—'चिरस्थाने द्वैगुण्यं प्रयोगस्य' । 'प्रयोगस्य' इत्येकवचननिर्देशात्प्रयोगान्तरकरणे द्वैगुण्यातिक्रमोऽभिप्रेतः । रस्थान' इति निर्देशात् शनैःशनैर्वृद्धिग्रहणे द्वैगुण्यातिक्रमो दर्शितः ॥ ३९ ॥

ऋणप्रयोगधर्मा उक्ताः; सांप्रतं प्रयुक्तस्य धनस्य ग्रहणधर्मा उच्यन्ते—

**प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत् ।**
**साध्यमानो नृपं ग[1]च्छन्दण्ड्यो दाप्यश्च तद्धनम् ॥४०॥**

प्रपन्नमभ्युपगतमधमर्णेन धनं साक्ष्यादिभिर्भावितं वा **साधयन्** प्रत्याहृ-धर्मादिभिरुपायैरुत्तमर्णो **नृपतेर्वाच्यो** निवारणीयो **न भवति** ॥ धर्मा-द्योपाया मनुना दर्शिताः ( मनुः ८।४९ )—'धर्मेण व्यवहारेण छलेनाचरितेन प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥' इति । धर्मेण प्रीतियुक्तेन सत्यवच-व्यवहारेण साक्षिलेख्या[3]द्युपायेन, छलेन उत्सवादिव्याजेन भूषणादिग्रह-अचरितेन अभोजनेन, पञ्चमेनोपायेन बलेन निगडबन्धनादिना, उप-र्थं प्रयुक्तं द्रव्यमेतैरुपायैरात्मसात्कुर्यादिति । 'प्रपन्नं साधयन्नर्थं न वाच्य' वदन् अप्रतिपन्नं साधयन् राज्ञा निवारणीय इति दर्शयति । एतदेव स्पष्टी-त्यायनेन—'पीडयेद्यो धनी कश्चिद्दणिकं न्यायवादिनम् । तस्मादर्थात्स तत्समं चा[4]प्नुयाद्दमम् ॥' इति । यस्तु धर्मादिभिरुपायैः प्रपन्नमर्थं **साध्य-मानो** याच्यमानो **नृपं गच्छेद्**राजानमभिगम्य साधयन्तमभियुङ्क्ते स **दण्ड्यो** ति, शक्त्यनुसारेण धनिने **तद्धनं दाप्यश्च**। राज्ञा दापने च प्रकारा दर्शिताः—णा तु स्वामिने विप्रं सान्त्वेनैव प्रदापयेत् । देशाचारेण चान्यांस्तु दुष्टान्सं-दापयेत् ॥ रिक्थिनं सुहृदं वापि छलेनैव प्रदापयेत् ॥' इति । 'साध्यमानो गच्छन्' इत्येतत् 'स्मृत्याचारव्यपेतेन' इत्यस्य प्रत्युदाहरणं बोद्धव्यम् ॥४०॥

बहुषूत्तमर्णिकेषु युगपत्प्राप्तेष्वेकोऽधमर्णिकः केन क्रमेण दाप्यो राज्ञेत्यपेक्षित ह—

**गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः ।**
**दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम् ॥ ४१ ॥**

समानजातीयेषु धनिषु **येनैव क्रमेण धनं गृहीतं** तेनैव **क्रमेणाधम-र्णो राज्ञा दाप्यः** । भिन्नजातीयेषु तु ब्राह्मणादिक्रमेण ॥ ४१ ॥

टिप्प०—1 तत्र 'सकृत्' शब्दो न निश्चितार्थः, न्यायस्तु परित्यक्तः, स्वकृतश्च : सात्त्वी मानवी स्मृतिः—मेधातिथिः ।

पाठा०—१ गच्छेत् क. ग. A. २ प्रपन्नं साधयन्नर्थं घ. ३ लेख्याद्यु-पायेन घ. ४ प्राप्नुयात् घ.

यदा पुनरुत्तमर्णो दुर्बलः प्रतिपन्नमर्थं धर्मादिभिरुपायैः साधयितुम... ज्ञा साधितार्थो भवति तदाऽधमर्णस्य दण्डमुत्तमर्णस्य च भृतिदानमाह—

**राज्ञाऽधमर्णिको दाप्यः साधिताद्दशकं शतम्।**
**पञ्चकं च शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः ॥**

**अधमर्णिको राज्ञा** प्रतिपन्नार्थात्**साधिताद्दशकं शतं दाप्य...** पन्नस्य साधितार्थस्य दशममंशं राजाऽधमर्णिकाद्दण्डरूपेण गृह्णीयादित्यर्थः ... **मर्णस्तु प्राप्तार्थः पञ्चकं शतं** भृतिरूपेण **दाप्यः**। साधितार्थस्य ... तमं भागमुत्तमर्णाद्राजा भृत्यर्थं गृह्णीयादित्यर्थः। अप्रतिपन्नार्थसाधने ... भागो दर्शितः—'निह्नवे भावितो दद्यात्' (व्य० ५) इत्यादिना ॥ ४...

सधनमधमर्णिकं प्रत्युक्तम्, अधुना निर्धनमधमर्णिकं प्रत्याह—

**हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत्।**
**ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥ ४...**

**ब्राह्मणादि**जातिरुत्तमर्णो **हीनजातिं** क्षत्रियादिजातिं **परिक्षीण... णार्थं** ऋणनिवृत्त्यर्थं **कर्म** स्वजात्यनुरूपं **कारयेत्** तत्कुटुम्बाविरोधेन ... **णस्तु पुनः परिक्षीणो** निर्धनः **शनैःशनैः यथोदयं** यथा... **दाप्यः**। अत्र च 'हीनजाति'ग्रहणं समानजातेरप्युपलक्षणम्। अतश्च ... तिमपि परिक्षीणं यथोचितं कर्म कारयेत्। 'ब्राह्मण'ग्रहणं च श्रेयोजातेरु... अतश्च क्षत्रियादिरपि परिक्षीणो वैश्यादेः शनैःशनैर्दाप्यो यथोदयम्। ... मनुना स्पष्टीकृतम् (८।१७७)—'कर्मणापि समं कुर्याद्धनिकेनाधम... समोऽपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः ॥' इति। उत्तमर्णेन समं ... र्णाधमर्णव्यपदेशमात्मानमधमर्णः कर्मणा कुर्यादित्यर्थः ॥ ४३ ॥

मध्यस्थस्थापितं न वर्धते—

**दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम्।**
**मध्यस्थस्थापितं चेत्स्याद्वर्धते न ततः परम् ॥ ४...**

किंच, उपचयार्थं प्रयुक्तं धनं अधमर्णेन **दीयमान**मुत्तमर्णो वृद्धिलो... **गृह्णाति** तदाऽधमर्णेन **मध्यमहस्ते स्थापितं यदि स्यात्तदा** ततः... दूर्ध्वं **न वर्धते**। अथ स्थापितमपि याच्यमानो न ददाति ततः ... एव ॥ ४४ ॥

**टिप्प०**—1 'स्वकं धनम्' इति वचनादात्मनेपदप्रयोगाच्च स्वं निहितधनि... मेतत्। 2 निर्धनः कर्म कारयितव्यः, प्रेष्यत्वं व्रजेत्...कर्म कुर्वतश्च स... दास्यान्मोक्षः—मेधा०।

पाठा०—१ मृणार्थं कर्म घ. २ ऋणिकायाधमर्णिकः. ३ स्थितं ... घ. ४ तस्मात् A. ५ पूर्वं वर्धत एव ग. घ.

इदानीं देयमृणं यदा येन च देयं तदाह—

**अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत् ।**
**दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥ ४५ ॥**

अविभक्तैर्बहुभिः कुटुम्बार्थमेकैकेन वा यदृणं कृतं तदृणं कुटुम्बी दद्यात् । तस्मिन्प्रेते प्रोषिते वा तद्रिक्थिनः सर्वे दद्युः ॥ ४५ ॥

येन देयमित्यत्र प्रत्युदाहरणमाह—

**न योषित्पतिपुत्राभ्यां न पुत्रेण कृतं पिता ।**
**दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ॥ ४६ ॥**

पत्या कृतमृणं योषिद्भार्या नैव दद्यात् । पुत्रेण कृतं योषिन्माता न दद्यात् । तथा पुत्रेण कृतं पिता न दद्यात् । तथा भार्याकृतं पतिर्न दद्यात् । 'कुटुम्बार्थादृते' इति सर्वशेषः[1] । अतश्च कुटुम्बार्थं येन केनापि कृतं कुटुम्बिना देयम् । तदभावे तद्दायहरैर्देयमित्युक्तमेव ॥ ४६ ॥

'पुत्रपौत्रैर्ऋणं देयम्' ( व्य० ५० ) इति वक्ष्यति तस्य पुरस्तादपवादमाह—

**सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम् ।**
**वृथादानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥ ४७ ॥**

सुरापानेन यत्कृतमृणं कामकृतं स्त्रीव्यसननिमित्तं[2] द्यूते पराजयनिमित्तं दण्डशुल्कयोरवशिष्टं वृथादानं धूर्तबन्दिमल्लादिभ्यो यत्प्रतिज्ञातम्—'धूर्ते बन्दिनि मल्ले च कुवैद्ये कितवे शठे । चाटचारणचौरेषु दत्तं भवति निष्फलम् ॥' इति स्मरणात् । एतदृणं पित्रा कृतं पुत्रादिः शौण्डिकादिभ्यो न दद्यात् । अत्र 'दण्डशुल्कावशिष्टक'मित्यवशिष्टग्रहणात्सर्वं दातव्यमिति न मन्तव्यम् ।—'दण्डं वा दण्डशेषं वा शुल्कं तच्छेषमेव वा । न दातव्यं तु पुत्रेण यच्च न व्यावहारिकम् ॥' इत्यौशनसस्मरणात् । गौतमेनाप्युक्तम्—'मद्यशुल्कद्यूतदण्डा न पुत्रानध्यावहेयुः'[3] इति । न पुत्रस्योपरि भवन्तीत्यर्थः । अनेनादेयमृणमुक्तम् ॥ ४७ ॥

'न पतिः स्त्रीकृतं तथा' ( व्य० ४६ ) इत्यस्यापवादमाह—

**गोपशौण्डिकशैलूषरजकव्याधयोषिताम् ।**
**ऋणं दद्यात्पतिस्तेषां[4] यस्माद्वृत्तिस्तदाश्रया ॥ ४८ ॥**

गोपो गोपालः, शौण्डिकः सुराकारः, शैलूषो नटः, रजको वस्त्राणां रञ्जकः, व्याधो मृगयुः, एतेषां योषिद्भिर्यदृणं कृतं तत्तत्पतिभिर्देयम् । यस्मात्तेषां वृत्तिर्जीवनं तदाश्रया योषिदधीना । 'यस्माद्वृत्तिस्तदाश्रया' इति हेतुनिर्देशादन्येऽपि ये योषिदधीनजीवनास्तेऽपि योषित्कृतमृणं दद्युरिति गम्यते ॥ ४८ ॥

---

पाठा०—१ सर्वविशेषणं ख. २ निर्वृत्तं ख. ग. ३ पुत्रानध्यावहेयुः ग. ४ तासां क. ग.

'पतिकृतं भार्या न दद्यात्' (व्य० ४६) इत्यस्यापवादमाह—

**प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम् ।**
**स्वयंकृतं वा यदृणं नान्यत्स्त्री दातुमर्हति ॥ ४९ ॥**

मुमूर्षुणा प्रवत्स्यता वा पत्या नियुक्तया ऋणदाने यत्**प्रतिपन्नं**... मृणं देयम् । यच्च **पत्या सह भार्यया ऋणं** कृतं तदपि भर्त्र... अपुत्रया देयम् । यच्च स्वयंकृतं ऋणं तदपि देयम् । ननु 'प्रतिपन्नादि... देयम्' इति न वक्तव्यम्; संदेहाभावात् । उच्यते—'भार्या पुत्रश्च ... एवाधनाः स्मृताः । यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥' इति ... न्निर्धनत्वेन प्रतिपन्नादिष्वदानाशङ्कायामिदमुच्यते—'प्रतिपन्नं स्त्रिया दे... न चानेन वचनेन स्त्र्यादीनां निर्धनत्वमभिधीयते; पारतन्त्र्यमात्रप्रतिपाद... एतच्च विभागप्रकरणे स्पष्टीकरिष्यते । 'नान्यत्स्त्री दातुमर्हति' इत्येतत्त... व्यम्; विधानेनैवान्यत्र प्रतिषेधसिद्धेः । उच्यते—'प्रतिपन्नं स्त्रिया दे... सह यत्कृतम्' इत्येतयोरपवादार्थमुच्यते । अन्यत्सुराकामादिवचनोपात्त... मपि पत्या सह कृतमपि **न देय**मिति ॥ ४९ ॥

पुनरपि यदृणं दातव्यं, येन च दातव्यं, यत्र च काले दातव्यं, तत्रि...

**पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा ।**
**पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ॥ ५० ॥**

**पिता** यदि दातव्यमृणमदत्त्वा **प्रेतः, दूरदेशं गतः,** असाध्य... **व्याध्याद्यभिभूतो वा** तदा तत्कृतमृणमाख्यापनेऽवश्यं देयम् पुत्रेण पौत्रेण वा पितृधनाभावेऽपि पुत्रत्वेन पौत्रत्वेन च, तत्र क्रमोऽप्य... पित्रभावे पुत्रः, पुत्राभावे पौत्र इति । पुत्रेण पौत्रेण वा **निह्नवे** ... **साक्षादिभिर्भावितमृणं देयं पुत्रपौत्रै**रित्यन्वयः । अत्र 'पितरि... इत्येतावदुक्तम्, कालविशेषस्तु नारदेनोक्तो द्रष्टव्यः—'नार्वाक्संवत्सरा... त्पितरि प्रोषिते सुतः । ऋणं दद्यात्पितृव्ये वा ज्येष्ठे भ्रातर्यथापि... इति । प्रेतेऽप्यप्राप्तव्यवहारकालो न दद्यात्, प्राप्तव्यवहारकालस्तु... स च कालस्तेनैव दर्शितः—'गर्भस्थः सदृशो ज्ञेय अष्टमाद्वत्सरा... बाल आ षोडशाद्वर्षात्पौगण्डश्चेति शब्द्यते ॥ परतो व्यवहारज्ञः... पितरावृते ॥' इति । यद्यपि पितृमरणादूर्ध्वं बालोऽपि स्वतन्त्रो ... नर्णभाग्भवति । यथाह—'अप्राप्तव्यवहारश्चेत्स्वतन्त्रोऽपि हि ... स्वातन्त्र्यं हि स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतम् ॥' इति । तथा... धाह्वाननिषेधश्च दृश्यते—'अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती । ... स्थाश्च नासेध्या न चैतानाह्वयेन्नृपः ॥' इति । तस्मात् 'अतः पुत्रेण ... स्वार्थमुत्सृज्य यत्नतः । ऋणात्पिता मोचनीयो यथा नो नरकं व्रजेत् ॥...

---

पाठा०—१ स्वयमेव ख. २ शंकयेदमुच्यते घ. ३ कृतमृणम... ४ अष्टमात् ख. ग.

[ऋ]ण व्यवहारज्ञतया जातेन निष्पन्नेनेति व्याख्येयम् । श्राद्धे तु बालस्याप्यधि- [कारः]—'न ब्रह्माभि[1]व्याहारयेदन्यत्र स्वधानिनयनात्' इति गौतमस्मरणात् । [पुत्र]पौत्रै'रिति बहुवचननिर्देशाद्बहवः पुत्रा यदि विभक्ताः स्वांशानुरूपेण ऋणं [दद्युः] । अविभक्ताश्चेत्संभूयसमुत्थानेन गुणप्रधानभावेन वर्तमानानां प्रधानभूत [एव] वा दद्यादिति गम्यते । यथाह नारदः ( १।१४ )—'अत ऊर्ध्वं पितुः पुत्रा [ऋणं] दद्युर्यथांशतः । अविभक्ता विभक्ता वा य[2]स्तावद्वहते धुरम् ॥' इति । अत्र [य]द्यपि 'पुत्रपौत्रैर्ऋणं देय'मित्यविशेषेणोक्तं, तथापि पुत्रेण यथा पिता सवृद्धिकं [दा]ति [3]तथैव देयम् । पौत्रेण तु समं मूलमेव दातव्यं, न वृद्धिरिति विशेषोऽवग- [म्य]ते । 'ऋणमात्मीयवत्पित्र्यं देयं पुत्रैर्विभावितम् । पैतामहं समं देयमदेयं [त]त्सुतस्य तु ॥' इति बृहस्पतिवचनात् । अत्र 'विभावित'मित्यविशेषोपादानात्सा- [क्षिभिर्वि]भावितमित्यत्र साक्षिग्रहणं प्रमाणोपलक्षणम् । समं यावद्गृहीतं तावदेव देयं, [न] वृद्धिः । तत्सुतस्य प्रपौत्रस्यादेयमगृहीतधनस्य । एतच्चोत्तरश्लोके [4]स्पष्टी- [करिष्य]ते ॥ ५० ॥

ऋणापाकरणे ऋणी तत्पुत्रः पौत्र इति त्रयः कर्तारो दर्शितास्तेषां च समवाये [क्रमो]ऽपि दर्शितः । इदानीं कर्त्रन्तरसमवाये च क्रममाह—

**रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च ।**
**पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थि[5]नः ॥ ५१ ॥**

अन्यदीयं द्रव्यमन्यस्य क्रयादिव्यतिरेकेण यत्स्वीयं भवति तद्रि[1]क्थम् । [त]त् रिक्थं गृह्णातीति **रिक्थग्राहः**, स **ऋणं दाप्यः** । एतदुक्तं भवति— यदीयं द्रव्यं रिक्थरूपेण गृह्णाति स तत्कृतमृणं दाप्यो न चौरादिरिति । योषितं [य]ां गृह्णातीति **योषिद्[2]ग्राहः**, स **तथैवर्णं दाप्यः** । यो यदीयां योषितं गृह्णाति स [त]त्कृतमृणं दाप्यः । योषितोऽविभाज्यद्रव्यत्वेन रिक्थव्यपदेशानर्हत्वाद्भेदेन निर्देशः । [पुत्र]श्चानन्याश्रितद्रव्य ऋणं दाप्यः, अन्यमाश्रितमन्याश्रितं, अन्याश्रितं पितृसंबन्धि द्रव्यं यस्यासावन्याश्रितद्रव्यः, न अन्याश्रितद्रव्योऽनन्याश्रित- [द्रव्]यः, **पुत्रहीनस्य रिक्थिनः ऋणं दाप्य** इति संबन्धः । एतेषां [3]समवाये [च] पाठक्रम एव । 'रिक्थग्राह ऋणं दाप्यः, तदभावे योषिद्ग्राहः, तदभावे पुत्र [इति]' । नन्वेतेषां समवाय एव नोपपद्यते; 'न भ्रातरो न पितरः पुत्रा रिक्थहराः [पितुः]' इति पुत्रे सत्यन्यस्य रिक्थग्रहणासंभवात् । योषिद्ग्राहोऽपि नोपपद्यते;

टिप्प०—1 पितृधनं रिक्थम्, ततश्च पुत्रो रिक्थग्राहः प्रथमतः, तदभावे क्षेत्र- [जादि]ः पुत्रप्रतिनिधिः, तदभावे पत्नी दुहित्रादिः, अत्र न पुत्रपरो 'रिक्थग्राह'शब्दः; [पुत्रपौ]त्रैर्ऋणं देयम्' ( व्य० ५० ) इत्यनेनैव पित्र्यं धनं पुत्रेणापाकरणीयमित्युक्तत्वात् । [2] शौण्डिकादिविषयं वा—अप० । 3 समवाय एककालावच्छेदेन प्राप्तिः.

पाठा०—१ व्याहरेदन्यत्र ख. २ यस्तां चोद्वहते ग. ३ तथैव ऋणं ख. ४ स्पष्टयिष्यते ख. ग. ५ ऋक्थिनः A.

( मनुः ५।१६२ )—'न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते' इति
तथा तदृणं पुत्रो दाप्य इत्यप्ययुक्तम्; 'पुत्रपौत्रैर्ऋणं देयम्' (व्य०५
त्वात्। 'अनन्याश्रितद्रव्य' इति विशेषणमप्यनर्थकम्; पुत्रे सति द्रव्य
णासंभवात्, संभवे च रिक्थग्राह इत्यनेनैव गतार्थत्वात्। 'पुत्रहीनस्य
इत्येतदपि न वक्तव्यम् । पुत्रे सत्यपि 'रिक्थग्राह ऋणं दाप्यः' इति
असति पुत्रे रिक्थग्राहः सुतरां दाप्य इति सिद्धमेवेति। अत्रोच्यते—
प्यन्यो रिक्थग्राही संभवति; क्लीबान्धबधिरादीनां पुत्रत्वेऽपि रिक्थहा
तथा च क्लीबादीननुक्रम्य 'भर्तव्याः[2] स्युर्निरंशकाः' (व्य० १४०) इति
'सवर्णापुत्रोऽप्यन्यायवृत्तिर्न लभेतैकेषाम्' इति गौतमस्मरणात्। अतश्च
पुत्रेषु सत्सु अन्यायवृत्ते च सवर्णापुत्रे सति रिक्थग्राही पितृव्यतत्पुत्रा
द्ग्राहो यद्यपि शास्त्रविरोधेन न संभवति तथाप्यतिक्रान्तनिषेधः
र्णापाकरणाधिकारी भवत्येव। योषिद्ग्राहो यश्चतसृणां स्वैरिणीनामन्ति
यश्च पुनर्भुवां तिसृणां प्रथमाम्, यथाह नारदः—'परपूर्वाः स्त्रियस्त
प्रोक्ता यथाक्रमम्। पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा॥ क
निर्या पाणिग्रहणदूषिता । पुनर्भूः प्रथमा[3] प्रोक्ता पुनःसंस्कारकर्मणा॥
नवेक्ष्य स्त्री गुरुभिर्या प्रदीयते । उत्पन्नसाहसाऽन्यस्मै सा द्वितीया प्र
उत्पन्नसाहसा उत्पन्नव्यभिचारा।—'असत्सु देवरेषु स्त्री बान्धवैर्या
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्तिता॥ स्त्री प्रसूताऽप्रसूता वा
जीवति । कामात्समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा॥ कौमारं पति
त्वन्यं पुरुषं श्रिता। पुनः पत्युर्गृहं यायात्सा द्वितीया प्रकीर्तिता॥
तु प्राप्तान्देवरादीनपास्य या। उपगच्छेत्परं कामात्सा तृतीया प्रकीर्तिता
देशाद्धनक्रीता क्षुत्पिपासातुरा च या। तवाहमित्युपगता सा चतुर्थी प्र
अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम्। ऋणं तयोः पतिकृतं
उपाश्रितः॥' इति । तथाऽन्योऽपि योषिद्ग्राह ऋणापाकरणेऽधि
दर्शितः—'या तु सप्रधनैव स्त्री सापत्या वाऽन्यमाश्रयेत् । सोऽस्या
भर्तुरुत्सृजेद्वा तथैव ताम्॥' प्रकृष्टेन धनेन सह वर्तत इति सप्रधना,
यावत्। तथा 'अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम्। ऋणं[5] वोढुः
सैव चास्य धनं स्मृतम्॥' इति पुत्रस्य पुनर्वचनं क्रमार्थम्। 'अ
द्रव्य' इति बहुषु पुत्रेषु रिक्थाभावेऽप्यंशग्रहणयोग्यस्यैवर्णापाकरणेऽधि
ग्यस्यान्धादेरित्येवमर्थम्। 'पुत्रहीनस्य रिक्थिन' इत्येतदपि पुत्रपौत्रहीनस्य
दयो यदि रिक्थं गृह्णन्ति तदा ऋणं दाप्याः, नान्यथेत्येवमर्थम्। पुत्रपौत्रौ
ग्रहणाभावेऽपि दाप्यावित्युक्तम्, यथाह नारदः (१।४)—'क्रमादव्या

टिप्प०—1 अन्धादिपुत्रा अन्याश्रितद्रव्यत्वेन न पितृणापकरणे
सुबो०।

पाठा०—१ रिक्थग्राहाभावात् ख. २ भर्तव्यास्तु ख. भर्त
३ प्रथमा नाम ख. ग. ४ प्राप्ता देशाद्धरात्क्रीता ग. ५ ऋणमोढुः

र्यर्णमुद्धृतम् । दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्तते ॥' इति सर्वं निरव-
॥ यद्वा,–योषिद्ग्राहाभावे पुत्रो दाप्य इत्युक्तम् । पुत्राभावे योषिद्ग्राहो दाप्य
च्यते। 'पुत्रहीनस्य रिक्थिनः' इति 'रिक्थ'शब्देन योषिदेवोच्यते। 'सैव चास्य
स्मृतम्' इति स्मरणात्, 'यो यस्य हरते दारान्स तस्य हरते धनम्' इति च ॥
योषिद्ग्राहाभावे पुत्रो ऋणं दाप्यः, पुत्राभावे योषिद्ग्राह इति परस्परविरुद्धम्।
यसद्भावे न कश्चिद्दाप्य इति । नैष दोषः; अन्तिमस्वैरिणीग्राहिणः प्रथमपुन-
ग्राहिणः सप्रधनस्त्रीहारिणश्चाभावे पुत्रो दाप्यः; पुत्राभावे तु निर्धननिरपत्ययो-
ग्राही दाप्य इति। एतदेवोक्तं नारदेन(१।२३)—'धनस्त्रीहारिपुत्राणामृणभाग्यो
हरेत्। पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः' ॥ इति । धनस्त्रीहा-
त्राणां समवाये यो धनं हरेत्स ऋणभाक् पुत्रोऽसतोः स्त्रीधनिनोः, स्त्री च
च स्त्रीधने, ते विद्येते ययोस्तौ स्त्रीधनिनौ, तयोः स्त्रीधनिनोरसतोः पुत्र एव
भाक् भवति । धनिपुत्रयोरसतोः स्त्रीहार्येवर्णभाक् । स्त्रीहार्यभावे पुत्र ऋण-
, पुत्राभावे स्त्रीहारीति विरोधा[1]भासपरिहारः पूर्ववत् । 'पुत्रहीनस्य रिक्थिनः'
स्यान्या व्याख्या—एते धनस्त्रीहारिपुत्रा ऋणं कस्य दाप्या इत्य[2]पेक्षायां उत्त-
स्य दाप्याः, तदभावे त[3]त्पुत्रादेः; पुत्राद्यभावे कस्य दाप्या इत्यपेक्षायामिदमुप-
ते-'पुत्रहीनस्य रिक्थिनः' इति। पुत्राद्यन्वयहीनस्योत्तमर्णस्य यो रिक्थी रिक्थ-
योग्यः सपिण्डादिस्तस्य रिक्थिनो दाप्याः । तथा च नारदेन ( १।११२ )
णस्य तु यद्देयं सान्वयस्य च[4] नास्ति चेत् । निर्वपेत्तत्सकुल्येषु तद[5]भावेऽस्य
षु ॥' इत्यभिहितम्—'यदा तु न सकुल्याः स्युर्न च संबन्धिबान्धवाः ।
द्द्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेत् ॥' नारदः (१।११३) इति ॥५१॥

अधुना पुरुषविशेषे ऋणग्रहणं प्रतिषेधयन्प्रसङ्गादन्यदपि प्रतिषेधति—

**भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।**
**प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ॥ ५२ ॥**

प्रतिभुवो भावः **प्रातिभाव्यं, भ्रातॄणां दम्पत्योः पितापुत्रयोश्चा-**
**भक्ते द्रव्ये** द्रव्यविभागात्प्राक्प्रातिभाव्यमृणं **साक्ष्यं च न स्मृतं** मन्वा-
भिः । अपि तु प्रतिषिद्धं; साधारणधनत्वात् । प्रातिभाव्यसाक्षित्वयोः पक्षे
व्यय[6]ावसानत्वात्, ऋणस्य चावश्यप्रतिदेयत्वात् । एतच्च परस्परानुमतिव्यति-
, परस्परानुमत्या त्वविभक्तानामपि प्रातिभाव्यादि भवत्येव । विभागादूर्ध्वं
परस्परानुमतिव्यतिरेकेणापि भवति ॥ ननु दम्पत्योर्विभागात्प्राक्प्रातिभाव्यादि-

टिप्प०—1 दर्शनविश्वासदानाङ्गीकर्ता प्रतिभूः-अप० । 2 अत्र 'अविभक्त'ग्रहणं
विषयं, पितापुत्रविषयं वा, न जायापतिविषयम्; नहि तयोर्धनविभागोऽस्ति । पतिधने
या स्वामिनी; जायात्वादेव । अतो दंपत्योः साधारणं धनमशक्यं विभक्तुम् ।

पाठा०—१ विरोधप्रतिभासः ख. २ इति विवक्षायां ख. ३ तत्स्त्रीपुत्रादेः
४ न चास्ति चेत् घ. ५ भावे स्वबन्धुषु ख. ६ द्रव्यव्ययावसानत्वात्.

प्रतिषेधो न युज्यते; तयोर्विभागाभावेन विशेषणानर्थक्यात्। विभाग... स्तम्बेन दर्शितः ( आप० ध० २।१४-१६ )—'जायापत्योर्न विभागो वि[1]... सत्यम्; श्रौतस्मार्ताग्निसाध्येषु कर्मसु तत्फलेषु च विभागाभावो न पुनः... द्रव्येषु वा। तथा हि—'जायापत्योर्न विभागो विद्यते' इत्युक्त्वा किमिति... इत्यपेक्षायां हेतुमुक्तवान्—'पाणिग्रहणाद्धि सहत्वं कर्मसु', 'तथा पुण्य... ( आप० ध० २।१४,१७-१८ ) इति। हि यस्मात्पाणिग्रहणादारभ्य ... श्रूयते—'जायापती अग्निमादधीयाताम्' इति, तस्मादाधाने सहाधिका... सिद्धाग्निसाध्यकर्मसु सहाधिकारः। तथा 'कर्म स्मार्तं विवाहाग्नौ' (... इत्यादिस्मरणाद्विवाहसिद्धाग्निसाध्येषु कर्मसु सहाधिकार एव। अतश्चो... निरपेक्षेषु कर्मसु पूर्तेषु जायापत्योः पृथगेवाधिकारः संपद्यते। तथा पुण्य... स्वर्गादिषु जायापत्योः सहत्वं श्रूयते—'दिवि ज्योतिरजरमारभेताम्'... येषु पुण्यकर्मसु सहाधिकारस्तेषां फलेषु सहत्वमिति बोद्धव्यं, न पुन... भर्त्रनुज्ञयानुष्ठितानां फलेष्वपि॥ ननु द्रव्यस्वामित्वेऽपि सहत्वमुक्तम्; ... ग्रहेषु च' 'नहि भर्तृर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ति' (आप० ... १४।१८-२० ) इति। सत्यम्; द्रव्यस्वामित्वं पत्न्या दर्शितमनेन, न पुनः... भावः। यस्मात् 'द्रव्यपरिग्रहेषु च' इत्युक्त्वा तत्र कारणमुक्तम्—'भ... नैमित्तिकेऽवश्यकर्तव्ये दानेऽतिथिभोजनभिक्षाप्रदानादौ हि यस्मान्न ... शन्ति मन्वादयस्तस्माद्भार्याया[1] अपि द्रव्यस्वामित्वमस्ति, अन्यथा ... इति। तस्माद्भर्तुरिच्छया भार्याया अपि द्रव्यविभागो भवत्येव, न स्वेच्छ... वक्ष्यति ( व्य० ११५ )—'यदि कुर्यात्समानंशान्पत्न्यः कार्याः सम... इति॥ ५२॥

अधुना प्रातिभाव्यं निरूपयितुमाह—

**दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते।**
**आद्यौ तु वितथे दाप्याावितरस्य सुता अपि॥ ५...**

**प्रातिभाव्यं** नाम विश्वासार्थं पुरुषान्तरेण सह समयः, तच्च ... त्रिधा भिद्यते। यथा **दर्शने** 'दर्शनापेक्षायां एनं दर्शयिष्यामी'ति ... विश्वासे, 'मम प्रत्ययेनास्य धनं प्रयच्छ, नायं त्वां वञ्चयिष्यते, यतोऽमुकस्य... उर्वराप्रायभूरस्य[2] ग्रामवरोऽस्ती'[2]ति। **दाने** 'यद्ययं न ददाति तदा... दास्यामी'ति। 'प्रातिभाव्यं विधीयत' इति प्रत्येकं संबध्यते[3]। आद्यौ तु द... यप्रतिभुवौ वितथे अन्यथाभावे अदर्शने विश्वासव्यभिचारे च दाप्यौ राज्ञा...

**टिप्प०**—1 'जायापत्योर्न विभागो विद्यते पाणिग्रहणाद्धि सहत्वं कर्मसु, त... फलेषु द्रव्यपरिग्रहेषु च' **इत्यापस्तम्बः**। 2 उर्वरा सर्वसस्याढ्या प्रायः बाहुल्ये...

**पाठा०**—१ भार्यायामपि ख. २ वरोऽस्तीति वा. घ. ३ संबन्ध...

...मुत्तमर्णस्य । इतरस्य दानप्रतिभुवः सुता अपि दाप्याः ॥ वितथ इत्येव ...न निर्धनत्वेन वाऽधमर्णेऽप्रतिकुर्वति 'इतरस्य सुता अपि' (१।११९) इति ...ता पूर्वयोः सुता न दाप्या इत्युक्तम् । 'सुता' इति वदता न पौत्रा दाप्या इति ...तम् ॥ ५३ ॥

एतदेव स्पष्टीकर्तुमाह—

**दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा ।**
**न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय यः स्थितः ॥ ५४ ॥**

यदा तु **दर्शनप्रतिभूः** प्रात्ययिको वा प्रतिभूर्दिवं[2] **गतस्तदा तयोः** ...ः प्रातिभाव्यायातं पैतृकमृणं **न दद्युः । यस्तु दानाय स्थितः** प्रतिभू- ...[3] गतस्तस्य पुत्रा दद्युः, न पौत्राः । ते च मूलमेव दद्युर्न वृद्धिम् । 'ऋणं पैता- ...पौत्रः प्रातिभाव्यागतं सुतः । समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चयः ॥' ...व्यासवचनात् । प्रातिभाव्यव्यतिरिक्तं पैतामहमृणं पौत्रः समं यावद्गृहीतं ...देव दद्यान्न वृद्धिम् । तथा तत्सुतोऽपि प्रातिभाव्यागतं पित्र्यमृणं सममेव ...त् । तयोः पौत्रपुत्रयोः सुतौ प्रपौत्रे-पौत्रावप्रातिभाव्यायातं प्रातिभाव्यायातं ...ऋणं यथाक्रममगृहीतधनौ न दाप्याविति । यदपि स्मरणम्—'खादको वित्त- ...ः साल्लग्नको वित्तवान्यदि । मूलं तस्य भवेद्देयं न वृद्धिं दातुमर्हति ॥' इति,— ...पि लग्नकः प्रतिभूः, खादकोऽधमर्णः, लग्नको यदि वित्तवान्मृतस्तदा तस्य ...ण मूलमेव दातव्यं न वृद्धिरिति व्याख्येयम् । यत्र दर्शनप्रतिभूः प्रत्ययप्रति- ...बन्धकं पर्याप्तं गृहीत्वा प्रतिभूर्जातस्तत्र तत्पुत्रा अपि तस्मादेव बन्धकात् ...तिभाव्यायातमृणं दद्युरेव । यथाह कात्यायनः—'गृहीत्वा बन्धकं यत्र दर्शने- ...स्थितो भवेत् । विना पित्रा धनात्तस्माद्दाप्यः स्यात्तदृणं सुतः ॥' इति । ...र्शन'ग्रहणं प्रत्ययस्योपलक्षणम् । विना पित्रा पितरि प्रेते दूरदेशं गते वेति ॥५४॥

यस्मिन्ननेकप्रतिभूसंभवस्तत्र कथं दाप्यस्तत्राह[4]—

**बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ।**
**एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ॥ ५५ ॥**

यद्येकस्मिन्प्रयोगे द्वौ **बहवो वा प्रतिभुवः** स्युस्तदृणं संविभज्य **स्वांशेन** ...ः । एकच्छायाश्रितेषु प्रतिभूषु एकस्याधमर्णस्य छाया सादृश्यं तामाश्रिता **एकच्छायाश्रिताः** । अधमर्णो यथा कृत्स्नद्रव्यदानाय स्थितस्तथा दानप्रतिभुवो-[5] ...प्रत्येकं कृत्स्नद्रव्यदानाय स्थिताः । एवं दर्शने प्रत्यये च । **तेष्वेकच्छाया-**[6] ...तेषु प्रतिभूषु सत्सु **धनिकस्योत्तमर्णस्य यथारुचि** यथाकामम् । अतश्च

टिप्प०—1 वितथेऽन्यथाभावे. 2 दानप्रतिभुवः. 3 दर्शनप्रत्ययप्रतिभुवोः.

पाठा०—१ ये स्थिताः A. २ दिष्टं गतः घ. ३ पौत्रप्रपौत्रौ क. ग. ...तद्यस्मिंस्तत्र आह ख. ५ दाने प्रतिभुवः घ. ६ तथैकच्छाया ख.

धनिको वित्ताद्यपेक्षायां[1] स्वार्थं [2]यं प्रार्थयते स एव कृत्स्नं दाप्यः[3], नांश... च्छायाश्रितेषु[4] यदि कश्चिद्देशान्तरं गतस्तत्पुत्रश्च संनिहितस्तदा धनिके... दाप्यः। मृते तु कस्मिंश्चित्तत्सुतः स्वपित्रंशमवृद्धिकं दाप्यः। यथाह का... 'एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते । प्रोषिते तत्सुतः स... मृते[5] समम् ॥' इति ॥ ५५ ॥

प्रातिभाव्ये ऋणदानविधिमुक्त्वा प्रतिभूदत्तस्य प्रतिक्रियाविधिमाह—

**प्रतिभूर्दापितो यत्तु प्रकाशं धनिनो[6] धनम् ।**
**द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत् ॥ ५६ ॥**

**यद्द्रव्यं प्रतिभू**स्तत्पुत्रो वा धनिकेनोपपीडितः **प्रकाशं** सर्व... राज्ञा **धनिनो दापितो** न पुनर्द्वैगुण्यलोभेन स्वयमुपेत्य दत्तम्। यथा... (१।१२१) 'यं चार्थं प्रतिभूर्दद्याद्धनिकेनोपपीडितः। ऋणिकस्तं[8] प्रतिभु... प्रतिदापयेत्[9] ॥' इति। ऋणिकैरधमर्णैस्तस्य प्रतिभुवस्तद्द्रव्यं द्विगुणं प्र... स्यात्। तच्च कालविशेषमनपेक्ष्य सद्य एव द्विगुणं दातव्यम्; वचनारम्भ... एतच्च हिरण्यविषयम् ॥ ननु [1]इदं[10] प्रतिभूरिति वचनं द्वैगुण्यमात्रं प्र... तच्च पूर्वोक्तकालकलाक्रमाबाधेनाप्युपपद्यते। यथा [2]जातेष्टिविधानं शुचित... अपि च सद्यः सवृद्धिकदानपक्षे पशुस्त्रीणां सद्यः संतत्यभावान्मूलदान... तीति,-तदसत्; 'व[11]स्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा' (व्य०३९)... कालकलाक्रमेण द्वैगुण्यादिसिद्धेः द्वैगुण्यमात्रविधाने चेदं वचनमनर्थ... पशुस्त्रीणां तु कालक्रमपक्षेऽपि संतत्यभावे स्वरूपदानमेव । यदा प्र... द्रव्यदानानन्तरं कियतापि कालेनाधमर्णेन संघटते तदा संततिरपि[12] सं... यद्वा पूर्वसिद्धसंतत्या सह पशुस्त्रियो दास्यन्तीति न किंचिदेतत् । ... भाव्यं प्रीतिकृतम्[13], अतश्च प्रतिभुवा दत्तं प्रीतिदत्तमेव। नच प्रीतिद... नात्प्राग्वृद्धिरस्ति; यथाह (नारदः १।१०९)—'प्रीतिदत्तं तु यत्किंचि... त्वयाचितम्। याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ॥' इति। अतश्चा... दत्तस्यायाचितस्यापि दानदिवसादारभ्य यावद्द्विगुणं कालक्रमेण वृद्धि... वचनेनोच्यत इति, तदप्यसत्,-अस्यार्थस्यास्माद्वचनादप्रतीतेः 'द्विगुणं प्र... व्यम्' इत्येतावदिह प्रतीयते। तस्मात्कालक्रममनपेक्ष्यैव द्विगुणं प्रतिदात... नारम्भसामर्थ्यादिति सुष्ठूक्तम् ॥ ५६ ॥

**टिप्प०**—1 ननु कालकलाक्रमादिकम्. 2 आशौचानन्तरकालनिर्णाय... न्या० ४।३।१७।३८.

**पाठा०**—१ वित्ताद्यपेक्षया घ. २ यः प्रार्थयते ख. ३ दद्यान्नांश... ४ तेष्वेकच्छाया ख. ५ मृते सति घ. ६ धनिनां घ; धनिने ध... ७ तत्र दातव्य A. ८ ऋणिकं तं ग. ९ प्रतिपादयेत् ख. १० इदं... ग. घ. ११ वस्त्रदान ख. १२ संततिरेवं ख. १३ प्रीतिकृतं च ख.

प्रतिभूदत्तस्य सर्वत्र द्वैगुण्ये प्राप्तेऽपवादमाह—

**संततिः स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च ।**
**वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा ॥ ५७ ॥**

हिरण्यद्वैगुण्यवत्कालानादरेणैव स्त्रीपश्वादयः प्रतिपादितवृद्ध्या दाप्याः । ...कस्तु व्याख्यात एव । यस्य द्रव्यस्य यावती वृद्धिः पराकाष्ठोक्ता तद्द्रव्यं ...तिभूदत्तं खादकेन तया वृद्ध्या सह कालविशेषमनपेक्ष्यैव सद्यो दातव्यमिति ...त्पर्यार्थः । यदा तु दर्शनप्रतिभूः संप्रतिपन्ने काले अधमर्णं दर्शयितुमसमर्थ- ...दा तदन्वेषणाय तस्य पक्षत्रयं दातव्यम् । तत्र यदि तं दर्शयति तदा मोक्तः- ...ऽन्यथा प्रस्तुतं धनं दाप्यः; 'नष्टस्यान्वेषणार्थं तु दाप्यं पक्षत्रयं परम् । ...यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत् ॥ काले व्यतीते प्रतिभूर्यदि तं नैव ...र्शयेत् । निबन्धं दापयेत्तं तु प्रेते चैष विधिः स्मृतः ॥' इति कात्यायनवच- ...त् । लग्नके विशेषनिषेधश्च तेनैवोक्तः—'न स्वामी न च वै शत्रुः स्वामिना- ...धिकृतस्तथा । निरुद्धो दण्डितश्चैव संदिग्धश्चैव न क्वचित् ॥ नैव रिक्थी न ...त्रं च न चैवात्यन्तवासिनः । राजकार्यनियुक्ताश्च ये च प्रव्रजिता नराः ॥ न ...क्तो धनिने दातुं दण्डं राज्ञे च तत्समम् । जीवन्वापि पिता यस्य तथैवेच्छा- ...वर्तकः ॥ नाविज्ञाय ग्रहीतव्यः प्रतिभूः स्वक्रियां प्रति ॥' इति । संदिग्धो- ...भिशस्तः । अत्यन्तवासिनो नैष्ठिकब्रह्मचारिणः ॥ इति प्रतिभूविधिः ॥ ५७ ॥

धनप्रयोगे द्वौ विश्वासहेतू—प्रतिभूराधिश्च । यथाह नारदः ( १।११९ )— 'विश्रम्भहेतू द्वावत्र प्रतिभूराधिरेव च' इति । तत्र प्रतिभूर्निरूपितः, इदानीमा- ...र्निरूप्यते । आधिर्नाम गृहीतस्य द्रव्यस्योपरि विश्वासार्थमधमर्णेनोत्तमर्णोऽधि- ...क्रियते, आधीयत इत्याधिः । स च द्विविधः—कृतकालोऽकृतकालश्च । पुनश्चैकैकशो ...विधः—गोप्यो भोग्यश्च । यथाह नारदः (१।१२४-२५)—'अधिक्रियत इत्याधिः ...विज्ञेयो द्विलक्षणः । कृतकालोऽपनेयश्च यावद्देयोद्यतस्तथा ॥ स पुनर्द्विविधः प्रोक्तो ...प्यो भोग्यस्तथैव च ॥' इति । कृते काले आधानकाल एवामुष्मिन्काले दीपोत्स- ...दौ 'मयायमधमर्णिको मोक्तव्योऽन्यथा तवैवाधिर्भविष्यती'त्येवं निश्चिते काले ...नेय आत्मसमीपं नेतव्यः, मोचनीय इत्यर्थः । देयं दानम् । देयमनतिक्रम्य ...वद्देयम् । उद्यतः नियतः, स्थापित इत्यर्थः । यावद्देयमुद्यतो यावद्देयोद्यतः, ...हीतधनप्रत्यर्पणावधिरनिरूपितकाल इत्यर्थः । गोप्यो रक्षणीयः ॥ ५७ ॥

एवं चतुर्विधस्याधेर्विशेषमाह—

**आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते ।**
**काले कालकृतो नश्येत्फलभोग्यो न नश्यति ॥ ५८ ॥**

प्रयुक्ते **धने** स्वकृतया वृद्ध्या कालक्रमेण **द्विगुणीभूते** यद्याधिरधमर्णेन

टिप्प०—1 खादकेनाधमर्णेन. 2 लग्नकः प्रतिभूः. 3 विश्रम्भो विश्वासः.

पाठा०—१ तदन्वेषणाय क. ख. २ मोक्तव्यो नान्यथा क. ख. ३ दापयेत्तु प्रेते चैव ख. ४ प्रयुक्तास्तु घ. ५ नाविज्ञातो. ६ माधिर्मो. निरूपिते ख. ग.

द्रव्यदानेन **न मोक्ष्यते तदा नश्यति** । अधमर्णस्य धनं प्रयोक्तुः स्वं **कालकृतः** कृतकालः, आहिताग्न्यादिषु पाठात् कालशब्दस्य पूर्वनिपातः। निरूपिते प्राप्ते **नश्येत्** द्वैगुण्यात्प्रागूर्ध्वं वा । **फलभोग्यः** फलं भोग्यं फलभोग्यः,—क्षेत्रारामादिः, स कदाचिदपि **न नश्यति** । कृतकालस्य भोगस्य च तत्कालातिक्रमे नाश उक्तः—'काले कालकृतो नश्येत्' इति । कालस्य भोग्यस्य नाशाभाव उक्तः—'फलभोग्यो न नश्यती'ति । पारि प्रणश्येदित्येतदकृतकालगोप्याधिविषयमवतिष्ठते । द्वैगुण्यातिक्रमेण निर्ह तिक्रमेण च विनाशे चतुर्दशदिवसप्रतीक्षणं कर्तव्यं; बृहस्पतिवचनात् (११ 'हिरण्ये द्विगुणीभूते पूर्णे काले कृतावधेः[1] । बन्धकस्य धनी स्वामी द्विसप्ता च ॥ तदन्तरा धनं दत्त्वा ऋणी बन्धकमाप्नुयात् ॥' इति ॥ नन्वाधिः त्यनुपपन्नम् । अधमर्णस्य स्वत्वनिवृत्तिहेतोर्दानविक्रयादेरभावात् । धनिनः हेतोः प्रतिग्रहक्रयादेरभावात् मनुवचनविरोधाच्च । (८।१४३)— कालसंरोधान्निसर्गोऽस्ति न विक्रयः' इति । कालेन संरोधः कालसंरोधः मवस्थानं तस्मात्कालसंरोधाच्चिरकालावस्थानादाधेर्न निसर्गोऽस्ति, नान्यत्र मस्ति, नच विक्रयः । एवमाधीकरणविक्रयप्रतिषेधाद्धनिनः स्वत्वाभावे इति । उच्यते—आधीकरणमेव लोके सोपाधिकस्वत्वनिवृत्तिहेतुः । आ रश्च सोपाधिकस्वत्वापत्तिहेतुः प्रसिद्धः । तत्र धनद्वैगुण्ये निरूपितका द्रव्यदानस्यात्यन्तनिवृत्तेरनेन वचनेनाधमर्णस्यात्यन्तिकी स्वत्वनिवृत्तिः चात्यन्तिकं स्वत्वं भवति । नच मनुवचनविरोधः । यतः मनुः (८। 'नत्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात्' इति । भोग्याधिं प्रस्तुत्येदम् 'न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः' इति । भोग्यस्याधेश्चि स्थानेऽप्याधीकरणविक्रयनिषेधेन धनिनः स्वत्वं[4] नास्तीति । इहाप्युक्तं 'फ न नश्यती'ति । गोप्याधौ तु पृथगारब्धं मनुना (८।१४४)—'न बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत्' इति । इहापि वक्ष्यते—गोप्याधिभोगे रिति । आधिः प्रणश्येद्द्विगुणे इति तु गोप्याधिं प्रत्युच्यत इति रुद्धम् ॥ ५८ ॥

**गोप्याधिभोगे नो वृद्धिः सोपकारे च[5] हापिते ।**
**नष्टो देयो विनष्टश्च दैवराजकृतादृते ॥ ५९ ॥**

किंच, **गोप्याधे**स्ताम्रकटाहादेरु**पभोगेन वृद्धिर्भवति** । अल्पे महत्यपि वृद्धिर्हातव्या; समयातिक्रमात् । तथा **सोपकारे** उपकार[1] बलीवर्दताम्रकटाहादौ भोग्याधौ सवृद्धिके **हापिते** हानिं व्यवहाराक्षमत्वं नो वृद्धिः इति संबन्धः । **नष्टो** विकृतिं गतः ताम्रकटाहादिश्छिद्रभेद

टिप्प०—1 वाहदोहादियुक्तो गवादिः सोपकारः, अविकाराशङ्कया पृथ

पाठा०—१ कृतावधौ घ. २ काले प्राप्ते च ख. ३ श्चिरन्तनका ४ स्वत्वं न भवति ख. ५ ऽथ हापिते ख; V; A.

पूर्ववत्कृत्वा **देयः**। तत्र **गोप्याधिर्नष्ट**श्चेत्पूर्ववत्कृत्वा **देयः**। उपभुक्तोऽपि वृद्धिरपि हातव्या । भोग्याधिर्यदि नष्टस्तदा पूर्ववत्कृत्वा देयः । वृद्धिसद्भावे वृद्धिरपि हातव्या। **विनष्ट** आत्यन्तिकं नाशं प्राप्तः, सोऽपि देयो मूल्यादिद्वारेण। दाने सवृद्धिकं मूल्यं लभते धनी । यदा न ददाति तदा मूलनाशः; 'विनष्टे मूलनाशः स्याद्दैवराजकृतादृते' (१।१२६) इति नारदवचनात् । **दैवराजकृता-दृते**—दैवमग्न्युदकदेशोपप्लवादि । दैवकृताद्विनाशाद्विना, तथा स्वापराधरहिताद्रा-जकृतात् । दैवराजकृते तु विनाशे सवृद्धिकं मूल्यं दातव्यमधमर्णेनाऽऽध्यन्तरं वा । यथाह—'स्रोतसापहृते क्षेत्रे राज्ञा चैवापहारिते । आधिरन्योऽथ कर्तव्यो देयं वा धनिने धनम् ॥' इति । तत्र 'स्रोतसापहृत' इति दैवकृतोपलक्षणम् ॥ ५९ ॥

**आधेः स्वीकरणात्सिद्धी रक्ष्यमाणोऽप्यसारताम् ।**
**यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत् ॥ ६० ॥**

अपि च, **आधे**र्भोग्यस्य गोप्यस्य च **स्वीकरणादु**पभोगादाधिग्रहण**सि-द्धिर्भवति**, न साक्षिलेख्यमात्रेण नाप्युद्देशमात्रेण । यथाह नारदः (१।१३८)—'आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा । सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा ॥' इति । अस्य च फलं—'आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा' (व्य० २३) इति । या स्वीकारान्ता क्रिया सा पूर्वा बलवती, स्वीकाररहिता पूर्वापि न बलवतीति । स चाधिः प्रयत्नेन **रक्ष्यमाणोऽपि** कालवशेन **यद्य-सारताम**विकृत एव सवृद्धिकमूल्यद्रव्यापर्याप्ततां **गतस्तदा**धिरन्यः **कर्तव्यः**, धनिने **धनं वा देयम्** । 'रक्ष्यमाणोऽप्यसारताम्' इति वदता आधिः प्रयत्नेन रक्षणीयो **धनिने**ति ज्ञापितम् ॥ ६० ॥

'आधिः प्रणश्येद्द्विगुणे' (व्य० ५८) इत्यस्यापवादमाह—

**चरित्रबन्धककृतं स वृद्ध्या दापयेद्धनम् ।**
**सत्यंकारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥ ६१ ॥**

चरित्रं शोभनाचरितं, चरित्रेण बन्धकं **चरित्रबन्धकं**, तेन यद्द्रव्यमात्मसा-त्कृतं पराधीनं वा **कृतम्** । एतदुक्तं भवति—धनिनः स्वच्छाशयत्वेन बहुमू-ल्यमपि द्रव्यमाधीकृत्याधमर्णेनाल्पमेव द्रव्यमात्मसात्कृतम्, यदि वाधमर्णस्य स्वच्छाशयत्वेनाल्पमूल्यमाधिं गृहीत्वा बहुद्रव्यमेव धनिनाधमर्णाधीनं कृत**मिति**। तद्धनं **स** नृपो **वृद्ध्या** सह **दापयेत्** । अयमाशयः—एवं च बन्धकं द्विगु-णीभूतेऽपि द्रव्ये न नश्यति, किंतु द्रव्यमेव द्विगुणं दातव्यमिति । तथा **सत्यं-कारकृतं**। करणं कारः। भावे घञ् । सत्यस्य कारः सत्यंकारः—'कारे सत्या-गदस्य' (पा. ६।३।७०) इति मुम् । सत्यंकारेण कृतं सत्यंकारकृतम् । अयमभि-

**टिप्प०**—1 चरित्रधर्मः स एव बन्धकमाधिस्तेन यत्कृतमृणं तद्वृद्धिसहितं उत्तमर्णो ऽधमर्णं दापयेत्–**अप०** । अत्र 'चरित्र'शब्दो न सदाचरणपरः, किंतु तत्फलपरः ।

**पाठा०**—१ नष्टश्चेत्तदा **घ.** २ वृद्धिर्हातव्या **ख.** ३ गोप्यस्य भोग्यस्य **ख.** ४ स्वीकारान्तक्रिया पूर्वा **ख.** ५ प्रतिपादयेत् **घ;** A. ६ एवंविधं **घ.**

सन्धिः—यदा बन्धकार्पणसमय एवेत्थं परिभाषितं 'द्विगुणीभूतेऽपि द्रव्ये द्विगुणं द्रव्यमेव दातव्यं नाधिनाशः' इति, तदा तद्द्विगुणं दापयेदिति भावोऽर्थः। चरित्रमेव बन्धकं चरित्रबन्धकं। 'चरित्र'शब्देन गङ्गास्नानादिजनितमपूर्वमुच्यते। यत्र तदेवाधीकृत्य यद्द्रव्यमात्मसात्कृतं तत्र द्विगुणीभूतं दातव्यम्, नाधिनाश इति। आधिप्रसङ्गादन्यदुच्यते—सत्यंकारकृतमिति। क्रयविक्रयादिव्यवस्थानिर्वाहाय यदङ्गुलीयकादि परहस्ते कृतं तद्व्यतिक्रमे **द्विगुणं दातव्यम्।** तत्रापि येनाङ्गुलीयकाद्यर्पितं स एव चेद्व्यवस्थातिवर्ती तेन तदेव दातव्यम्। इतरश्चेद्व्यवस्थातिवर्ती तदा तदेवाङ्गुलीयकादि द्विगुणं प्रतिदापयेदिति ॥ ६१ ॥

**उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा भवेत्।**
**प्रयोजकेऽसति धनं कुले न्यस्याधिमाप्नुयात् ॥ ६२ ॥**

किंच, धनदानेनाधिमोक्षणायोपस्थितस्याधिर्मोक्तव्यो धनिना, न लोभेन स्थापयितव्यः, **अन्यथा** अमोक्षणे **स्तेन**श्चौरवद्दण्ड्यः **भवेत्।** असंनिहिते पुनः प्रयोक्तरि **कुले** तदाप्तहस्ते सवृद्धिकं **धनं** विधाय स्वीयं **बन्धकं गृह्णीयात्** ॥ ६२ ॥

अथ प्रयोक्ताऽप्यसंनिहितस्तदाप्ताश्च धनस्य ग्रहीतारो न सन्ति, यदि वा संनिहिते प्रयोक्तर्याधिविक्रयेण धनदित्साऽधमर्णस्य तत्र किं कर्तव्यमित्यपेक्षित आह—

**तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः।**

**तस्मिन्काले** यत्तस्याधेर्**मूल्यं** तत्परिकल्प्य तत्रैव धनिनि तमाधिं वृद्धिरहितं **स्थापयेन्न** तत ऊर्ध्वं विवर्धते। यावद्धनी धनं गृहीत्वा तमाधिं मुञ्चति, यावद्वा तन्मूल्यद्रव्यमृणे प्रवेशयति ॥

यदा तु द्विगुणीभूतेऽपि धने द्विगुणं धनमेव ग्रहीतव्यं, न त्वाधिनाश इति विचारितमृणग्रहणकाल एव तदा द्विगुणीभूते द्रव्ये असंनिहिते अधमर्णे धनिना किं कर्तव्यमित्यत आह—

**विना धारणकाद्वापि विक्रीणीत ससाक्षिकम् ॥ ६३ ॥**

**धारणकाद**धमर्णाद्**विना** अधमर्णेऽसंनिहिते **साक्षिभि**स्तदाप्तैश्च सह तमाधिं **विक्रीय** तद्धनं **गृह्णीयाद्**धनी। 'वा'शब्दो व्यवस्थितविकल्पार्थः। यदा ग्रहणकाले द्विगुणीभूतेऽपि धने धनमेव ग्रहीतव्यं, न त्वाधिनाश इति न विचारितं, तदा 'आधिः प्रणश्येद्द्विगुणे' (व्य० ५८) इत्याधिनाशः। विचारिते पूर्वः पक्ष इति ॥ ६३ ॥

टिप्प०—1 इतरो ग्रहीता चेद्व्यवस्थातिक्रमं करोति इत्याशयः। 2 प्रयोक्तृविषयं चैतत्—अप०। 3 केवलं धनमेव ग्रहीतव्यम्, नान्यदित्याशयः।

पाठा०—१ द्विगुणीभूतमेव द्रव्यं घ. २ कृतं तदा तत्र ख. ३ ... चेत् ख. ४ दण्ड्यो भवति ख. ५ कल्पते तत्रैव ख. ६ ऊर्ध्वं धनं ... ग. ७ मृणिने ख. ८ धारणिकात् ख.

भोग्याधौ विशेषमाह—

**यदा तु द्विगुणीभूतमृणमाधौ तदा खलु ।**
**मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥ ६४ ॥**

यदा प्रयुक्तं **धनं** स्वकृतया वृद्ध्या **द्विगुणीभूतं** तदाधौ कृते तदुत्पन्ने ...ध्युत्पन्ने **द्रव्ये द्विगुणे** धनिनः **प्रविष्टे धनिनाऽऽधिर्मोक्तव्यः**। यदि ...दावेवाधौ दत्ते 'द्विगुणीभूते द्रव्ये त्वयाधिर्मोक्तव्यः' इति, परिभाषया कारणा...तरेण वा भोगाभावेन यदा द्विगुणीभूतमृणं तदा, आधौ भोगार्थं **धनिनि ...विष्टे तदुत्पन्ने द्रव्ये द्विगुणे[1] सत्याधिर्मोक्तव्यः**। अधिकोपभोगे तदपि ...यम्। सर्वथा सवृद्धिकमूलर्णापाकरणार्थाध्युपभोगविषयमिदं वचनम्[1] । तमेनं ...याधिमाचक्षते लौकिकाः । यत्र तु वृद्ध्यर्थं एवाध्युपभोग इति परिभाषा, तत्र ...गुण्यातिक्रमेऽपि यावन्मूलदानं[2] तावदुपभुङ्क्त एवाधिम् । एतदेव स्पष्टीकृतं बृहस्प...ना (११।३३-४)—'ऋणी बन्धमवाप्नुयात् । फलभोग्यं पूर्णकालं दत्त्वा द्रव्यं ...सामकम् ॥ यदि प्रकर्षितं तत्स्यात्तदा न धनभाग्धनी । ऋणी च न लभेद्बन्धं ...रस्परमतं विना ॥' इति । अस्यार्थः—फलं भोग्यं यस्यासौ फलभोग्यः बन्धक[3] ...आधिः। स च द्विविधः–सवृद्धिकमूला[4]पाकरणार्थो वृद्धिमात्रापाकरणार्थश्च । तत्र सवृद्धिमूला[4]पाकरणार्थं बन्धं पूर्णकालं पूर्णः कालो यस्यासौ पूर्णकालस्तमा...प्नुयादृणी । यदा सवृद्धिकं मूलं[4] फलद्वारेण धनिनः प्रविष्टं तदा बन्धमा...प्नुयादित्यर्थः । वृद्धिमात्रापाकरणार्थं तु बन्धकं सामकं दत्त्वाप्नुयादृणी । ...मूलं[4], सममेव सामकम् ॥ अस्यापवादमाह—यदि प्रकर्षितं तत्स्यात् । तत् ...न्धकं प्रकर्षितमतिशयितं वृद्धेरप्यधिकफलं यदि स्यात् 'तदा न धनभाग्धनी' ...सामकं न लभेत् धनी । मूलमदत्त्वैव[5] ऋणी बन्धमवाप्नुयादिति यावत् । ...अथ स्वप्रकर्षितं तद्बन्धकं वृद्धयेऽप्यपर्याप्तं, तदा सामकं दत्त्वापि बन्धं न ...लभेताधमर्णः । वृद्धिशेषमपि[6] दत्त्वैव लभेतेत्यर्थः । पुनरुभयत्रापवादमाह[2]— ...परस्परमतं विना' उत्तमर्णाधमर्णयोः परस्परानुमत्यभावे 'यदि प्रकर्षितम्' इत्या...दिकम्, परस्परानुमतौ तूत्कृष्टमपि बन्धकं यावन्मूल[4]दानं तावदुपभुङ्क्ते धनी, ...निकृष्टमपि मूलमात्रदाने नैवाधमर्णो लभत इति ॥ ६४ ॥

इति ऋणादानप्रकरणम् ।

---

टिप्प०—1 'आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते' (व्य० ५८) इत्यनेन ...विरोधोऽत्र नाशंकनीयः; विषयान्तरत्वात्. 2 'यदि प्रेत्य', 'ऋणी च' इत्यत्रेयुन्नेयम् ।

---

पाठा०—१ मूल्यापाकरणार्था ख; मूलर्णापाकरण. २ मूल्यदानं ख. ३ बन्धः आधिः ग. ४ मूला ख. ५ मूल्यमदत्त्वैव ख. ६ वृद्धिशेष ...मदत्त्वैव ख.

## अथ उपनिधिप्रकरणम् ४

उपनिधिं प्रत्याह—

**वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते ।**
**द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥ ६५ ॥**

निक्षेप[1]द्रव्यस्याधारभूतं द्रव्यान्तरं वासनं करण्डादि, तत्स्थं **वासनस्थं** रूपसंख्यादिविशेष**मनाख्याय** अकथयित्वा मुदित**मन्यस्य हस्ते** विस्रम्भा**दर्प्यते** स्थाप्यते तद्द्रव्य**मौ[2]पनिधिक**मुच्यते। यथाह नारदः—ख्यातमविज्ञातं समुद्रं यन्निधीयते । तज्जानीयादुपनिधिं निक्षेपं गणितं विदुः इति । **प्रतिदेयं तथैव तत् ।** यस्मिन्स्थापितं तेन यथैव पूर्वमुद्रादिविशिष्टमर्पितं तथैव स्थापकाय प्रतिदेयं प्रत्यर्पणीयम् ॥ ६५ ॥

'प्रतिदेयम्' ( व्य० ६५ ) इत्यस्यापवादमाह—

**न दाप्योऽपहृतं तं[2] तु राजदैविकतस्करैः ।**

**तमु**पनिधिं **राज्ञा दैवेनोदका**दिना **तस्करैर्वाऽपहृतं** नष्टं **न दाप्यः** यस्मिन्नुपनिहितम् । धनिन एव तद्द्रव्यं नष्टं यदि जिह्मकारितं न भवति। नारदः ( ११९ )—'ग्रहीतुः सह योऽर्थेन नष्टो नष्टः स दायिनः । दैव[3]तद्वन्न चेत्तज्जिह्मकारितम् ॥' इति ॥—

अस्यापवादमाह—

**भ्रेषं[4]श्चेन्मार्गितेऽदत्ते दाप्यो दण्डं च तत्समम् ॥ ६६ ॥**

स्वामिना **मार्गिते** याचिते यदि **न ददाति तदा तदु**त्तरकाले ... राजादिभि**र्भ्रेषो** नाशः संजातस्तथापि **तद्द्रव्यं** मूल्यकल्पनया धनिने **दाप्यो** राज्ञे च **तत्समं दण्डम्** ॥ ६६ ॥

भोक्तारं प्रति दण्डमाह—

**आजीवन्स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयम् ।**

यः **स्वेच्छया** स्वाम्यननुज्ञयोपनिहितं द्रव्य**माजीवन्नु**पभुङ्क्ते व्यवहार-प्रयोगादिना लाभार्थमसावुपभोगानुसारेण लाभानुसारेण च **दण्ड्यः**, **तं** चो**-सोदय**मुपभोगे सवृद्धिकं व्यवहारे सलाभं धनिने **दा[3]प्यः** । वृद्धिप्र...

टिप्प०—1 निक्षेपोपनिध्योः स्वल्प एव विशेष इति दर्शयति–निक्षेपेति । ...क्षणं चोक्तं **नारदेन**–'अन्यद्रव्यव्यवहितं द्रव्यमव्याकृतं च यत् । निक्षिप्यते ... तदौपनिधिकं स्मृतम् ॥' इति । अन्यत्र च 'असंख्यातमविज्ञातं समुद्रं यन्निधीयते ... जानीयादुपनिधिं निक्षेपं गणितं विदुः ॥' इत्यपि लक्षणम् । 3 कात्यायनस्तु–'... स्तूपनिधिः काले कालहीनं तु वर्जयेत् । कालहीनं ददद्दण्डं द्विगुणं च प्रदाप्यते ॥' ...

पाठा०—१ निक्षेप. २ तत्तु A. ३ तद्वन्नवेत्तजिह्म ख; तद्वन्नवेद... ४ भ्रंशश्चेन्मा° A. ५ आजीवस्युप ख. आजीवनफलं भुंक्ते ग.

कात्यायनेनोक्तम्—'निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च । याच्यमानो न चेद्द्याद्वर्धते पञ्चकं शतम् ॥' इति । एतच्च भक्षिते द्रष्टव्यम् । उपेक्षाज्ञाननष्टे तु तेनैव विशेषो दर्शितः—'भक्षितं सोदयं दाप्यः समं दाप्य उपेक्षितम् । किंचिन्न्यूनं प्रदाप्यः स्याद्द्रव्यमज्ञाननाशितम् ॥' इति । 'किंचिन्न्यूनम्' इति चतुर्थांशहीनम् ॥

उपनिधेर्धर्मान्याचितादिष्वतिदिशति—

**याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः ॥ ६७ ॥**

विवाहाद्युत्सवेषु वस्त्रालंकारादि याचित्वाऽऽनीतं **याचितम्** । यदेकस्य हस्ते निहितं द्रव्यं तेनाप्यनु पश्चादन्यहस्ते स्वामिने देहीति निहितं तद**न्वाहितम्** । **न्यासो** नाम गृहस्वामिनेऽदर्शयित्वा तत्परोक्षमेव गृहजनहस्ते प्रक्षेपो गृहस्वामिने समर्पणीयमिति । समक्षं तु समर्पणं **निक्षेपः** । 'आदि'शब्देन सुवर्णकारादिहस्ते कटकादिनिर्माणाय न्यस्तस्य सुवर्णादेः, प्रतिन्यासस्य च परस्परप्रयोजनापेक्षया[2] 'त्वयेदं मदीयं रक्षणीयं, मयेदं त्वदीयं रक्ष्यते' इति न्यस्तस्य ग्रहणम् । यदाह नारदः ( २।१४ )—'एष एव विधिर्दृष्टो याचितान्वाहितादिषु । शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च ॥' इति । **एतेषु**[1] याचितान्वाहितादि**ष्वयं विधिः** उपनिधेर्यः प्रतिदानादिविधिः स एव **वेदितव्यः** ॥ ६७ ॥

इति उपनिधिप्रकरणम्[3] ।

---

## अथ साक्षिप्रकरणम् ५

'प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्' ( व्य० २२ ) इत्युक्तं, तत्र भुक्तिर्निरूपिता; सांप्रतं साक्षिस्वरूपं निरूप्यते । साक्षी च साक्षाद्दर्शनाच्छ्रवणाच्च भवति । यथाह मनुः ( ८।७४ )—'समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिद्ध्यति' इति । स च द्विविधः—कृतोऽकृतश्चेति । साक्षित्वेन निरूपितः कृतः[2] । अनिरूपितोऽकृतः । तत्र कृतः पञ्चविधोऽकृतश्च षड्विध इत्येकादशविधः । यथाह नारदः ( १।१७८ )—'एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः । कृतः पञ्चविधो ज्ञेयः षड्विधोऽकृत उच्यते ॥' इति । तेषां च भेदस्तेनैव दर्शितः—'लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च । गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः स्मृतः ॥' ( नारदः १।१४० ) इति । लिखितादीनां च स्वरूपं कात्यायनेनोक्तम्—'अर्थिना स्वयमानीतो यो लेख्ये संनिवेश्यते । स साक्षी लिखितो नाम स्मारितः पत्रकादृते ॥' इति । 'स्मारितः पत्रकादृत' इत्यस्य विवरणं तेनैव कृतम्—'यस्तु कार्य-

टिप्प०—1 याचितादयस्तु–'यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते' ( मनुः ८।१९१ ) इत्यादिनोक्ताः, 'आदि'ना निक्षेपग्रहणम् । 2 प्रजापतिस्तु–'साक्षी द्विभेदो विज्ञेयः कृत एकोऽपरोऽकृतः । लेख्यारूढः कृतो ज्ञेयो मुक्तकोऽकृत उच्यते ॥' इत्याह ।

पाठा०—१ याच्यमानं ग. २ पेक्षायां त्वयेदं ख. ३ निक्षेपप्रकरणम्.

प्रसिद्ध्यर्थं दृष्ट्वा कार्यं पुनः पुनः। स्मार्यते ह्यर्थिना साक्षी स स्मारित इ
इति। यस्तु यदृच्छयागतः साक्षी क्रियते स यदृच्छाभिज्ञः। अनयोः प
त्वेऽपि भेदस्तेनैव दर्शितः—'प्रयोजनार्थमानीतः प्रसङ्गादागतश्च यः। द्वौ
त्वलिखितौ पूर्वपक्षस्य साधकौ॥' इति, तथा—'अर्थिना स्वार्थसिद्ध्यर्थं
वचनं स्फुटम्। यः श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यते॥' इति,
'साक्षिणामपि यः साक्ष्यमुपर्युपरि भाषते। श्रवणाच्छ्रावणाद्वापि स
संज्ञितः॥' इति। षड्विधस्याप्यकृतस्य भेदो नारदेन दर्शितः (१।१५
'ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम्। कार्येष्वधिकृतो यः स
प्रहितश्च यः॥ कुल्याः कुलविवादेषु विज्ञेयास्तेऽपि साक्षिणः॥' इति।
वाक'ग्रहणं लेखकसभ्योपलक्षणार्थम्; 'लेखकः प्राड्विवाकश्च सभ्याश्चैवा[२]
नृपे पश्यति तत्कार्यं साक्षिणः समुदाहृताः॥' इति॥

तेऽपि साक्षिणः कीदृशाः, कियन्तश्च भवन्तीत्यत आह—

**तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः।**
**धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः॥ ६८**
**त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः।**
**यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः॥ ६९**

**तपस्विनस्**तपःशीलाः, **दानशीला** दाननिरताः, **कुलीना**
प्रसूताः, **सत्यवादिनः** सत्य[३]वदनशीलाः, **धर्मप्रधाना** न त्वार्थकामप्र
**ऋजवो**ऽकुटिलाः, **पुत्रवन्तो** विद्यमानपुत्राः, **धनान्विता** बहुसुव
युक्ताः, **श्रौतस्मार्तक्रियापराः** नित्यनैमित्तिकानुष्ठानरताः, एवंभूताः
**त्र्यवराः साक्षिणो भवन्ति**। त्रयः अवरा न्यूना येषां ते
त्रिभ्योऽर्वाक् न भवन्ति। परतस्तु यथाकामं भवन्तीत्यर्थः। जातिमन
**यथाजाति**। जातयो मूर्धावसिक्ताद्याः अनुलोमजाः प्रतिलोमजाश्च
मूर्धावसिक्तानां मूर्धावसिक्ताः साक्षिणो भवन्ति। एवमम्बष्ठादिष्वपि द्र
वर्णमनतिक्रम्य **यथावर्णम्**। वर्णा ब्राह्मणादयः। तत्र ब्राह्मणानां
एवोक्तलक्षणा उक्तसंख्याकाः साक्षिणो भवन्ति। एवं क्षत्रियादिष्वपि
तथा स्त्रीणां साक्ष्यं स्त्रिय एव कुर्युः। यथाह मनुः (८।६८)—'स्त्रीणां
स्त्रियः कुर्युः' इति। सजातिसवर्णासंभवे **सर्वे** मूर्धावसिक्तादयो ब्राह्म
**सर्वेषु** मूर्धावसिक्तादिषु ब्राह्मणादिषु च यथासंभवं साक्षिणो **भवन्ति**।
लक्षणानां साक्षिणामसंभवे प्रतिषेधरहितानामन्येषामपि साक्षित्वप्रतिपाद
मसाक्षिणो वक्तव्याः। ते च पञ्चविधा नारदेन दर्शिताः—'असाक्ष्यपि हि

पाठा०—१ श्रावितः ख. २ सभ्यश्चैव ग. ३ सत्यवादन ख. ४
पराः ग.

: पञ्चविधो बुधैः । वचनाद्दोषतो भेदात्स्वयमुक्तिर्मृतान्तरः ॥' इति । के र्वचनात् असाक्षिण इत्यत आह—'श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः । साक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः ॥' (१।१५८) इति । तापसा वानप्रस्थाः । आदि'शब्देन पित्रा विवदमानादीनां ग्रहणम् । यथाह शङ्खः—'पित्रा विवद-गुरुकुलवासिपरिव्राजकवानप्रस्थनिर्ग्रन्था असाक्षिणः' इति । दोषादसाक्षिणो र्शिताः—'स्तेनाः साहसिकाश्चण्डाः कितवा वञ्चकास्तथा । असाक्षिणस्ते दुष्टत्वात्तेषु त्यं न विद्यते ॥' (नारदः १।१५९) इति । चण्डाः कोपनाः, कितवा द्यूतकृतः । दसाक्षिणां च स्वरूपं तेनैव दर्शितम्—'साक्षिणां लिखितानां च निर्दिष्टानां वादिनाम् । तेषामेकोऽन्यथावादी भेदात्सर्वे न साक्षिणः ॥' इति । तथा स्वय-क्तस्वरूपं चोक्तम्—'स्वयमुक्तिरनिर्दिष्टः स्वयमेवैत्य यो वदेत् । सूचीत्युक्तः स ष्षु न स साक्षित्वमर्हति ॥' (१।१६१) इति । मृतान्तरस्यापि लक्षणमुक्तम्—ऽर्थः श्रावयितव्यः स्यात्तस्मिन्नसति चार्थिनि । क्व तद्वदतु साक्षित्वमित्यसाक्षी न्तरः ॥' (१।१६२) इति । येनार्थिना प्रत्यर्थिना वा साक्षिणां योऽर्थः श्राव-तव्यो भवेत् 'यूयमत्रार्थे साक्षिणः' इति तस्मिन्नर्थिनि प्रत्यर्थिनि वा असति मृतेऽर्थे निवेदिते, साक्षी क्व कस्मिन्नर्थे कस्य वा कृते साक्ष्यं वदत्विति मृतान्तरः क्षी न भवति । यत्र तु मुमूर्षुणा स्वस्थेन वा पित्रा पुत्रादयः श्राविता 'अस्मि-ऽमी साक्षिणः' इति तत्र मृतान्तरोऽपि साक्षी । यथाह नारदः (१।९६)—न्तरोऽर्थिनि प्रेते मुमूर्षुश्राविताद्दते' । तथा—'श्रावितोऽनातुरेणापि यस्त्वर्थो संहितः । मृतेऽपि तत्र साक्षी स्यात्षट्सु चान्वाहितादिषु ॥' इति ॥६८–६९॥

तानसाक्षिणो दर्शयति—

**स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः ।**
**रङ्गावतारिपाखण्डिकूटकृद्विकलेन्द्रियाः ॥ ७० ॥**
**पतिताप्तार्थसंबन्धिसहायरिपुतस्कराः ।**
**साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः ॥ ७१ ॥**

स्त्री प्रसिद्धा, **बालो**ऽप्राप्तव्यवहारः, **वृद्धो**ऽशीतिकावरः, 'वृद्ध'ग्रहणं वचन-पिदानामन्येषामपि श्रोत्रियादीनामुपलक्षणार्थम्; **कितवो**ऽक्षदेवी, **मत्तः** नादिना, **उन्मत्तो** ग्रहाविष्टः, **अभिशस्तो**ऽभियुक्तो ब्रह्महत्यादिना, **रङ्गाव-री** चारणः। **पाखण्डिनो** निर्ग्रन्थप्रभृतयः । **कूटकृत्** कपटलेख्यादिकारी ।

---

पाठा०—१ स्वयमुक्तिर्मृतान्तरम् घ; स्वयमुक्तेः ख. २ वानप्रस्था निर्ग्र-न्थासा ख; निर्ग्रन्था निगडस्थाः ग. ३ वधकास्तथा ग. ४ वादिना साक्षिणः घ. ६ मुक्तिर्हि निर्दिष्टः ग. ७ साक्षित्वं कस्मिन्नर्थे ख. साक्षास्यात् ख. ९ वतारपाखण्डकूट घ. १० पाषाण्डि A. ११ निर्धूतश्चेत्यसा० A. १२ भूताविष्टः ग.

**विकलेन्द्रियः** श्रोत्रादिरहितः, **पतितो** ब्रह्महादिः, **आप्तः** सुहृत्, **संबन्धी** विप्रतिपद्यमानार्थसंबन्धी, **सहाय** एककार्यः, **रिपुः** शत्रुः, स्तेनः, **साहसी** बलावष्टम्भकारी । **दृष्टदोषो** दृष्टविरुद्धवचनः, बन्धुभिस्त्यक्तः, 'आद्य'शब्दादन्येषामपि स्मृत्यन्तरोक्तानां दोषादसाक्षि साक्षिणां स्वयमुक्तेर्मृतान्तरस्य च ग्रहणम् । **एते** स्त्रीबालादयः **साक्षि भवन्ति** ॥ ७०-७१ ॥

'त्र्यवराः साक्षिणो ज्ञेयाः' ( व्य० ६९ ) इत्यस्यापवादमाह—

**उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् ।**

ज्ञानपूर्वकं नित्यनैमित्तिककर्मानुष्ठायी **धर्मवित्** स **एकोऽप्युभया**श्चेत्**साक्षी भवति** । 'अपि'शब्दबलाद्द्वावपि । यद्यपि 'श्रौतस्मार्तक्रि (व्य०६९) इति त्र्यवराणामपि धर्मवित्त्वं समानं, तथापि तेषामुभयानुमत साक्षित्वं भवति । एकस्य द्वयोर्वोभयानुमत्यैव साक्षित्वं भवतीत्यर्थवत् ग्रहणम् ॥—

'तपस्विनो दानशीलाः' ( व्य० ६८ ) इत्यस्यापवादमाह—

**सर्वः साक्षी संग्रहणे चौर्यपारुष्यसाहसे ॥ ७२ ॥**

**संग्रहणादीनि** वक्ष्यमाणलक्षणानि **तेषु सर्वे** वचननिषिद्धास्तपःप्र रहिताश्च **साक्षिणो भवन्ति** । दोषादसाक्षिणो भेदादसाक्षिणः स्वयमुक्ति वादी साक्षिणो न भवन्ति; सत्याभावादिति हेतोरत्रापि विद्यमानत्वात् ।—'स्यान्तरम रणं चौर्यं परदाराभिमर्शनम् । पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम् ( नारदः १४।१ ) इति वचनाद्यद्यपि स्त्रीसंग्रहणचौर्यपारुष्याणां साहसत्वं तेषां स्वबलावष्टम्भेन जनसमक्षं क्रियमाणानां साहसत्वम् । रहसि क्रिय तु 'संग्रहणादि'शब्दवाच्यत्वमिति तेषां साहसात्पृथगुपादानम् ॥ ७२ ॥

साक्षिश्रावणमाह—

**साक्षिणः श्रावयेद्वादिप्रतिवादिसमीपगान् ।**

**अर्थिप्रत्यर्थिसंनिधौ साक्षिणः समवेतान्** 'नासमवेताः प्रब्रूयुः' (१३।५) इति गौतमवचनात्, वक्ष्यमाणं **श्रावयेत्** । तत्रापि यनेन विशेषो दर्शितः—'सभान्तः साक्षिणः सर्वानर्थिप्रत्यर्थिसंनिधौ । प्रा

---

**टिप्प०—1** अयमपि 'न स्त्रीबाले'त्यादिनिषिद्धसंग्रहः, अत एवाविरोधः । 'साहस'शब्देन मनुष्यमारणमेव विवक्षितम्, न चौर्यादिकं तस्य स्वशब्देनैवोक्त 'साहस'शब्दश्च न चौर्यादिमात्रवाचकः, किं तु तद्विशेषस्य । यथाह नारदः— क्रियते कर्म यत्किंचिद्बलदर्पितैः । तत्साहसमिति प्रोक्तं, सहो बलमिहोच्यते ॥' इ

---

**पाठा०—१ स्वबला ख. २ दृष्टवितथवचनः ख. ३ अपिशब्दाद्द्वाव घ. ४ त्यर्थं च त्र्यवर ग. ५ सत्यवादित्वहेतोः ख. ६ पृथगपृष्टाः ग.**

[य]ुञ्जीत विधिनाऽनेन सान्त्वयन्। देवब्राह्मणसांनिध्ये साक्ष्यं पृच्छेदृतं द्विजान्। उद-[ङ्मु]खान्प्राङ्मुखान्वा पूर्वाह्णे वै शुचिः शुचीन्॥' (मनुः ८।७९,८७) 'आहूय साक्षिणः [पृ]ष्टेन्नियम्य शपथैर्भृशम् । समस्तान्विदिताचारान्विज्ञातार्थान्पृथक्पृथक्॥' [ना]रदः १।१९८ ) इति । तथा ब्राह्मणादिषु श्रावणे मनुना नियमो दर्शितः [(८]।११३ )—'सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः । गोबीजकाञ्चनैर्वैश्यं शूद्रं [सर्वै]स्तु पातकैः ॥' इति । ब्राह्मणमन्यथा [१]ब्रुवतः सत्यं ते नश्यतीति शापयेत् । [क्ष]त्रियं वाहनायुधानि तव विफलानीति, गोबीजकाञ्चनादीनि तव विफलानि [भ]विष्यन्तीति वैश्यम्, शूद्रमन्यथा ब्रुवतस्तव सर्वाणि पातकानि भविष्यन्तीति [शा]पयेत्। अत्र चापवादस्तेनैव दर्शितः (८।१०२)—'गोरक्षकान्वाणिजिकांस्तथा [का]रुकुशीलवान् । प्रेष्यान्वार्धुषिकांश्चैव विप्राञ्शूद्रवदाचरेत्॥' इति । 'विप्र'ग्रहणं [क्ष]त्रियवैश्ययोरुपलक्षणार्थम् । कुशीलवा गायकाः । प्रतिवादिना साक्षिदूषणे दत्ते [सा]क्षियोग्यदूषणेषु बाल्यादिषु तथैव निर्णयः । अयोग्येषु तु तद्वचनाल्लोकतश्च [यो]ग्यो न साक्ष्यन्तरेणेति नानवस्था । यदि साक्षिदोषमुद्भाव्य साधयितुं न शक्नोति [प्रति]वादी, तदाऽसौ दोषा[२]नुसारेण दण्ड्यः । अथ साधयति, तदा न साक्षिणः । [आ]ह—'असाध[३]यन्दमं दाप्यो दूषणं साक्षिणां स्फुटम् । भाविते साक्षिणो वर्ज्याः [सा]क्षिधर्मनिराकृताः ॥' इति । उद्दिष्टेषु च सर्वेषु साक्षिषु दुष्टेष्वर्थी यदा क्रिया-[नि]रपेक्षस्तदा पराजितो भवति; 'जितः स विनयं दाप्यः शास्त्रदृष्टेन कर्मणा । [य]दि वादी निराकाङ्क्षः साक्षिसत्ये व्यवस्थितः ॥' इति स्मरणात् । साकाङ्क्षश्चे-[त्सा]क्ष्यान्तरमवलम्बेतेत्यभिप्रायः ॥—

[क]थं श्रावयेदित्यत आह—

> [४]ये पातककृतां लोका महापातकिनां तथा ॥ ७३ ॥
> अग्निदानां च ये लोका ये च स्त्रीबालघातिनाम् ।
> स तान्[५]सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत् ॥ ७४ ॥
> सुकृतं यत्त्वया किंचिज्जन्मान्तरशतैः कृतम् ।
> तत्सर्वं तस्य जानीहि यं पराजयसे मृषा ॥ ७५ ॥

'पातकोपपातकमहापातककारिणामग्निदानां स्त्रीबालघातिनां च लोकास्तान्सर्वानसावाप्नोति यः साक्ष्यमनृतं वदति । त[६]था [जन्]मान्तरशतैर्यत्सुकृतं कृतं, तत्सर्वं तस्य भवति, य[७]स्तेऽनृतवदनेन [परा]जितो भवति' इति, 'इति श्रावयेत्' इति संबन्धः । एतच्च शूद्रविषयं

---

पाठा०—१ ब्रुवन्तं घ. २ सारानुसारेण ग. घ. ३ असाधयन् अभा-[व]न्. ४ ये च पातकिनां लोकाः A. ५ तान्सर्वान्समवा A. ६ यथा ख. ७ यस्तेऽनृतवचनेन ग. यस्तेनोऽनृतवदनेन घ.

द्रष्टव्यम्; 'शूद्रं सर्वैस्तु पातकैः' ( मनुः ८।१२३ ) इति शूद्रे सर्वपातक विहितत्वात् । गोरक्षकादिद्विजातिविषयं च; 'गोरक्षकान्वाणिजिकान्' ( ८।१०२ ) इत्युक्तत्वात् । अन्यानेकजन्मार्जितसुकृतसंक्रमणस्य महापातक प्राप्तेश्चानृतवचनमात्रेणानुपपत्तेः, साक्षिसंत्रासार्थमिदमुच्यते । यथाह ( १।२०० )—'पुराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्तनैः । अनृतस्यापवा मुत्रासयेदिमान् ॥' इति ॥ ७३–७५ ॥

यदा तु श्राविताः साक्षिणः कथंचिन्न ब्रूयुस्तदा किं कर्तव्यमित्यत आ

**अब्रुवन्हि नरः साक्ष्यमृणं सदशबन्धकम् ।**
**राज्ञा सर्वं प्रदाप्यः स्यात्षट्चत्वारिंशकेऽहनि ॥ ७**

यः **साक्ष्यम**ङ्गीकृत्य श्रावितः सन् कथंचिन्न **वदति** स **राज्ञा** स द्धिकमृणं धनिने **दाप्यः, सदशबन्धकं** दशमांशसहितम् । दशमांश भवति; 'राज्ञाऽधमर्णिको दाप्यः साधिताद्दशकं शतम्' (व्य० ४२) इत्यु एतच्च **षट्चत्वारिंशकेऽहनि** प्राप्ते वेदितव्यम् । ततोऽर्वाग्वदन्न दाप् व्याध्याद्युपप्लवरहितस्य । यथाह मनुः ( ८।१०७ )—'त्रिपक्षादब्रुवन्स दिषु नरोऽगदः । तदृणं प्राप्नुयात्सर्वं दशबन्धं च सर्वशः ॥' इति । 'अ राजदैवोपप्लवविरहोपलक्षणम् ॥ ७६ ॥

यस्तु जानन्नपि साक्ष्यमेव नाङ्गीकरोति दौरात्म्यात्तं प्रत्याह—

**न ददाति हि यः साक्ष्यं जानन्नपि नराधमः ।**
**स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि ॥ ७**

यः पुन**र्नराधमो** विप्रतिपन्नमर्थं विशेषतो **जानन्नपि साक्ष्यं न** नाङ्गीकरोति **स कूटसाक्षिणां तुल्यः पापैः दण्डेन च** । कूटसा दण्डं वक्ष्यति । कूटसाक्षिणश्च दण्डयित्वा पुनर्व्यवहारः प्रवर्तनीयः । वा, कौटसाक्ष्ये विदिते निवर्तनीयः । यथाह मनुः ( ८।११७ )— स्मिन्विवादे तु कौटसाक्ष्यं कृतं भवेत् । तत्तत्कार्यं निवर्तेत कृतं भवेत् ॥' इति ॥ ७७ ॥

साक्षिविप्रतिपत्तौ कथं निर्णय इत्यत आह—

**द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।**
**गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः ॥ ७८ ॥**

**टिप्प०**—1 यद्यपि 'सदश–' इति ऋणविशेषणं, तथापि धन्ययोग्यमिति त्पृथगुक्तम्–सदशेति । 'दश'शब्दोऽत्र दशमपरः, 'बन्ध'शब्दश्चांशपरः ।

**पाठा०**—१ श्रवणस्य घ. २ विहितं च घ. ३ अस्यानेक ४ भृशं संत्रासयेत् ग. ५ प्रदाप्यः षट् A. ६ चत्वारिंशत्तमेऽह ७ कृतेऽपि कौटसाक्ष्ये घ.

साक्षिणां द्वैधे विप्रतिपत्तौ **बहूनां वचनं** ग्राह्यम् । **समेषु** समसंख्येषु द्वैधे गुणिनस्तेषां वचनं प्रमाणम् । यदा पुनर्**गुणिनां** विप्रतिपत्तिस्तदा **ये गुणवत्तमाः** श्रुताध्ययनतदर्थानुष्ठानधनपुत्रादिगुणसंपन्नास्तेषां **वचनं ग्राह्यम् ।** यत्र तु गुणिनः कतिपये, इतरे च बहवस्तत्रापि गुणिनामेव वचनं ग्राह्यम्; 'उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित्' ( व्य० ७२ ) इति गुणातिशयस्य दर्शितत्वात् । यत्तु 'भेदादसाक्षिणः' ( व्य० ६८।६९ ) इत्युक्तं, तत्सर्वसाम्येनाप्रमाणविशेषविषयम् ॥ ७८ ॥

साक्षिभिश्च कथमुक्ते जयः कथं वा पराजय इत्यत आह—

**यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।**
**अन्यथा वादिनो यस्य ध्रुवस्तस्य पराजयः ॥ ७९ ॥**

यस्य वादिनः प्रतिज्ञां द्रव्यजातिसंख्यादिविशिष्टां साक्षिणः सत्यां वदन्ति एवमेवं जानीमो वयमिति स जयी भवति । यस्य पुनर्वादिनः प्रतिज्ञामन्यथा शीलेन मिथ्यैतदिति वदन्ति तस्य पराजयो ध्रुवो निश्चितः[1] । यत्र तु प्रतिज्ञार्थस्य विस्मरणादिना भावाभावौ साक्षिणो न प्रतिपादयन्ति, तत्र प्रमाणान्तरेण निर्णयः कार्यः । नच राज्ञा साक्षिणः पुनः पुनः प्रष्टव्याः । स्वभावोक्तमेव वचनं ग्राह्यम् । यथाह—'स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् । उक्ते तु साक्षिणो राज्ञा न प्रष्टव्याः पुनः पुनः ॥' इति ॥ ७९ ॥

'अन्यथा वादिनो यस्य ध्रुवस्तस्य पराजयः' (व्य० ७९) इत्यस्यापवादमाह—

**उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः ।**
**द्विगुणा वाऽन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥८०॥**

पूर्वोक्तलक्षणैः **साक्षिभिः साक्ष्ये** स्वाभिप्राये[2] प्रतिज्ञातार्थवैपरीत्येना**भिहिते यद्यन्ये** पूर्वेभ्यो **गुणवत्तमाः द्विगुणा वा अन्यथा** प्रतिज्ञातार्थाननुगुण्येन साक्ष्यं **ब्रूयुस्तदा पूर्वे साक्षिणः कूटा** मिथ्यावादिनो[3] **भवेयुः** । नन्वेतदनुपपन्नम्; अर्थिप्रत्यर्थिसभ्यसभापतिभिः परीक्षितैः प्रमाणभूतैः साक्षिभिर्निगदिते प्रमाणान्तरान्वेषणेऽनवस्थादोषप्रसङ्गात्—'निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत् । लिखितं साक्षिणो वापि पूर्वमावेदितं न चेत् ॥', 'यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः । निर्णिक्तव्यवहाराणां प्रमाणमफलं तथा ॥' (मा० १।६३-६४) इति नारदवचनाच्च । उच्यते,–यदाऽर्थी प्रतिज्ञातार्थस्यान्तरारमसाक्षित्वेना-

टिप्प०—1 एतेन वादिनः प्रतिवादिनो वा जयपराजयावधारणनिर्णेजने सति अन्यस्मात्प्रमाणात्प्रमाणान्तरस्य पूर्वमुपन्यस्तस्य प्रतिपादनमफलमित्याकूतम् ।

पाठा०—१ यत्र गुणिनः घ. २ स्वाभिप्रायेण प्रतिज्ञा घ. ३ मिथ्यासाक्षिणो घ.

नाविष्कृतदोषाणामपि साक्षिणां वचनमर्थविसंवादित्वेनाप्रमाणं मन्यमानः ष्वपि दोषं कल्पयति तदा प्रमाणान्तरान्वेषणं केन वार्यते ? उक्तं च— 'दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः' इति ॥ यथा च रणदोषानध्यवसायेऽप्यर्थविसंवादात्तज्जनितस्य ज्ञानस्याप्रामाण्येन करणदो तथेहापि; साक्षिपरीक्षातिरेकेण वाक्यपरीक्षोपदेशाच्च ।—'साक्षिभिर्भाषि सह सभ्यैः परीक्षयेत्' इति । कात्यायनेनाप्युक्तम्—'यदा शुद्धा क्रिया त्तदा तद्वाक्यशोधनम् । शुद्धाच्च वाक्याद्यः शुद्धः स शुद्धोऽर्थ इति इति । क्रिया साक्षिलक्षणा, 'नार्थसंबन्धिनो नाप्ताः' (मनुः ८।६४) इति शुद्धा तदा तद्वाक्यशोधनं साक्षिवाक्यशोधनं कर्तव्यम्; वाक्यशुद्धिश्च प्रतिपादनेन; 'सत्येन शुध्यते वाक्यम्' इति स्मरणात् । एवं क्रियायाः शुद्धवाक्याच्च यः शुद्धोऽवगतोऽर्थः स शुद्धस्तथाभूत इति दृशी मर्यादा न्यायविदाम् । कारणदोषबाधकप्रत्ययाभावे सत्यवितथ इत्यर्थः । ननु स्वयमर्थिना प्रमाणीकृतान्साक्षिणोऽतिक्रम्य कथं क्रियान्तरं क्रियते ? नैष दोषः; यतः—'क्रियां बलवतीं मुक्त्वा दुर्बलां योऽवलम्ब जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात्क्रियाम् ॥' इति कात्यायनेन जयाव त्तरकालं क्रियान्तरपरिग्रहनिषेधाज्जयावधारणात्प्राक् क्रियान्तरपरिग्रहो नारदेनापि (मा० १।६२)—'निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्' इति जयावधारणोत्तरकालमेव प्रमाणान्तरं निषिद्धं न प्रागपि । तस्मादुक्तेऽपि साक्ष्येऽपरितुष्यता क्रियान्तरमङ्गीकर्तव्यमिति स्थितम् । एवं स्थिते यद वचनेभ्यः साक्षिभ्यो गुणवत्तमा द्विगुणा वा पूर्वनिर्दिष्टा असन्निहिताः साक्षिणः तदा त एव प्रमाणीकर्तव्याः; 'स्वभावेनैव यद्ब्रूयुस्तद्ग्राह्यं व्यावहारिकम्' सर्वव्यवहारशेषत्वात्, 'निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत् । लिखितं वापि पूर्वमावेदितं न चेत् ॥' (मा० १।६२) इति नारदवचनाच्च । पूर्व नामसंभवे त्वनिर्दिष्टा अपि तथाविधाः साक्षिण एव ग्राह्या न दिव्यम्; साक्षिणां प्राज्ञो वर्जयेद्दैविकीं क्रियाम्' इति स्मरणात् । तेषामसंभवे दिव्यं कर्तव्यम् । अतःपरमपरितुष्यताप्यर्थिना न प्रमाणान्तरमन्वेषणीयमव परिसमापनीयो व्यवहारः । यत्र तु प्रत्यर्थिनः स्वप्रत्ययविसंवादित्वेन साक्षिव प्रामाण्यं मन्यमानस्य साक्षिषु दोषारोपणेनापरितोषस्तत्र प्रत्यर्थिनः क्रियाप सराभावात्सप्ताहावधिकदैविकराजिकव्यसनोद्भवेन साक्षिपरीक्षणं कर्तव्यम् च दोषावधारणे साक्षिणो विवादास्पदीभूतमृणं दाप्याः, सारानुसारेण दण्ड

---

पाठा०—१ कारणं दुष्टं घ. २ ज्ञानस्य प्रामाण्य ख. ३ वाक्यपरीक्षो ४ शुद्धाच्चवाक्याद्यः शुद्धो घ. ५ कृताः साक्षिणो ख. ६ तथावि साक्षिणो ग्राह्याः ख. ७ प्रमाणं कर्तव्यं ख. ८ मनुवचनात् ख. नात् घ.

…थ दोषानवधारणं[1], तदा प्रत्यर्थिना तावता संतोष्टव्यम् । यथाह मनुः (८।१०८)—'यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः । रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः ॥' इति । एतच्च 'यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत्' इत्यस्य अपरितुष्यत्प्रत्यर्थिविषयेऽपवादो द्रष्टव्यः। केचित्तु 'उक्तेऽपि साक्षिभिः साक्ष्ये' (व्य०८०) इत्येतद्वचनमर्थिना निर्दिष्टेषु साक्षिष्वर्थ्यनुकूलमभिहितवत्सु यदि प्रत्यर्थी गुणवत्तमान्द्विगुणान्वाऽन्यान्साक्षिणः पूर्वोक्तविपरीतं संवादयति तदा पूर्ववादिनः साक्षिणः कूटा इति व्याचक्षते,–तदसत्; प्रत्यर्थिनः क्रियानुपपत्तेः । तथा हि—अर्थी नाम साध्यस्यार्थस्य निर्देष्टा, तत्प्रतिपक्षस्तदभाववादी प्रत्यर्थी, अभावस्य भावसिद्धिसापेक्षसिद्धित्वाद्भावस्य [2]चाभावसिद्धिनिरपेक्षसिद्धित्वाद्भावस्यैव साध्यत्वं युक्तम्; अभावस्य[3] स्वरूपेण साक्ष्यादिप्रमेयत्वाभावात् । अतश्चार्थिन एव क्रिया युक्ता । अपि चोत्तरानुसारेण सर्वत्रैव क्रिया नियता स्मर्यते; 'प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम् । मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत् ॥' इति । न चै[4]कस्मिन्व्यवहारे द्वयोः क्रिया; 'नचैकस्मिन्विवादे क्रिया स्याद्वादिनोर्द्वयोः' इति स्मरणात् । तस्मात्प्रतिवादिनः साक्षिणो गुणवत्तमा द्विगुणा वाऽन्यथा ब्रूयुरित्यनुपपन्नम् ॥ अथ मतम्–यत्र द्वावपि भावप्रतिज्ञावादिनौ 'मदीयमिदं दायादप्राप्तं मदीयमिदं दायादप्राप्त'मिति प्रतिज्ञावादिनोः पूर्वापरकालविभागानाकलितमेव वदतस्तत्र द्वयोः साक्षिषु सत्सु कस्य साक्षिणो प्रष्टव्या इत्याकाङ्क्षायां—'द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु । पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः ॥' इति वचनेन यः पूर्वं निवेदयति, तस्य साक्षिणो ग्राह्या इति स्थिते, तस्यापवादः[5]–'उक्तेऽपि साक्षिभिः साक्ष्ये' इति । अतश्च पूर्वोक्तयोर्वादिनोः समसंख्येषु समगुणेषु साक्षिषु सत्सु पूर्ववादिन एव साक्षिणः प्रष्टव्याः । यदा तु उत्तरवादिनः साक्षिणो गुणवत्तमा द्विगुणा वा तदा प्रतिवादिनः साक्षिणः प्रष्टव्याः । एवं च नाभावस्य साध्यता; उभयोरपि भाववादित्वात्, चतुर्विधोत्तरविलक्षणत्वाच्च प्रकृतोदाहरणे न क्रियाव्यवस्था । एकस्मिन्व्यवहारे तु यथैकप्रत्यर्थिनः क्रियाद्वयं परमते तथा वादिप्रतिवादिनोः क्रियाद्वयेऽप्यविरोध इति । …[6]दष्याचार्यो नानुमन्यते—'उक्तेऽपि साक्षिभिः साक्ष्ये' इत्यपिशब्दादर्थात्प्रकरणाच्चाऽस्यार्थस्यानवगमादित्यलं प्रसङ्गेन ॥ ८० ॥

कूटसाक्षिणो दर्शितास्तेषां दण्डमाह—

**पृथक्पृथग्दण्डनीयाः कूटकृत्साक्षिणस्तथा ।**
**विवादाद्द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ॥ ८१ ॥**

यो धनदानादिना कूटान्साक्षिणः करोति स **कूटकृत्**, **साक्षिणश्च** ये तथा

---

पाठा०—१ दोषावधारणं ख. २ वाभावनिरपेक्ष ख. ३ अभावस्वरूपेण ख. ४ कस्मिन्विवादे घ. ५ पवादमाह ख. ६ प्याचार्या नानुमन्यन्ते घ.

कूटास्ते **विवादान्नाम** विवादपराजयात्पराजये यो दण्डस्तत्र तत्रोक्त **द्विगुणं पृथक्पृथगे**कैकशो **दण्डनीयाः । ब्राह्मणस्तु विवासो** वासाः, न दण्डनीयः । एतच्च लोभादिकारणविशेषापरिज्ञाने अनभ्यासे तव्यम् । लोभादिकारणविशेषपरिज्ञानेऽभ्यासे च मनुनोक्तम् (८।१२०) 'लोभात्सहस्रं दण्ड्यः स्यान्मोहात्पूर्वं तु साहसम् । भयाद्वौ मध्यमौ दण्डौ त्पूर्वं चतुर्गुणम् ॥ कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम् । अज्ञानाद्वे बालिश्याच्छतमेव तु ॥' इति । तत्र लोभोऽर्थलिप्सा, मोहो विपर्यय भयं संत्रासः, मैत्री स्नेहातिशयः, कामः स्त्रीव्यतिकराभिलाषः, क्रोधोऽ अज्ञानमस्फुटज्ञानम्, बालिश्यं ज्ञानानुत्पादः । सहस्रादिषु ताम्रिक गृह्यन्ते । तथा (मनुः ८।१२३)—'कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान् नृपः । प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ॥' इति, एतच्चाभ्यासवि कुर्वाणानिति वर्तमाननिर्देशात् । त्रीन्वर्णान्क्षत्रियादीन् पूर्वोक्तं दण्डं द प्रवासयेन्मारयेत् । अर्थशास्त्रे 'प्रवास'शब्दस्य मारणे प्रयोगात्, अस्य रूपत्वात् । तत्रापि प्रवासनमोष्ठच्छेदनं जिह्वाच्छेदनं प्राणवियोजनं च विषयानुसारेण द्रष्टव्यम् । ब्राह्मणं तु दण्डयित्वा विवासयेत् स्वराष्ट्रान्नि यद्वा,—वाससो विगतो विवासाः । विवाससं करोतीति णिचि कृते ' त्प्रातिपदिकस्य' इति टिलोपे रूपम् । विवासयेत् नग्नीकुर्यादित्यर्थः । वसत्यस्मिन्निति वासो गृहम् । विवासयेत् भग्नगृहं कुर्यादित्यर्थः । ब्राह्म लोभादिकारणविशेषापरिज्ञानेऽनभ्यासे च तत्र तत्रोक्तो दण्ड एव । अभ्यासादि दण्डो विवासनं च । तत्रापि जातिद्रव्यानुबन्धाद्यपेक्षया विवासनं नग्नीकरणं भङ्गो देशान्निर्वासनं चेति व्यवस्था द्रष्टव्या । लोभादिकारणविशेषपरिज्ञानेऽ चाल्पविषये कौटसाक्ष्ये ब्राह्मणस्यापि क्षत्रियादिवदर्थदण्ड एव । महाविषये देशान्निर्वासनमेव । अत्राप्यभ्यासे सर्वेषामेव मनूक्तं द्रष्टव्यम् । न च ब्राह्म र्थदण्डो नास्तीति मन्तव्यम् । अर्थदण्डाभावे शारीरदण्डे च निषिद्धे स्वल्पे राधे नग्नीकरणगृहभङ्गाङ्ककरणविप्रवासनं दण्डाभावो वा प्रसज्येत; 'चतु वर्णानां प्रायश्चित्तमकुर्वताम् । शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत् ॥' स्मरणाच्च । तथा (मनुः ८।३७८)—'सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां व्रजन्' इति स्मरणात् । यत्तु शङ्खवचनम्—'त्रयाणां वर्णानां धनापहा

**टिप्प०**—1 लोभाल्लोभेन मिथ्याभिधाने. 2 पूर्वं प्रथमसाहसमेव. 3 अ कौटसाक्ष्यं तत एव पुनः पुनरभिधानम्, न तु पुनः पुनः प्रश्नपूर्वकम् इति न विरोधः ।

**पाठा०**—१ विवादाद्विवादपराजये ख. विवादात्पराजये ग. दण्ड्याः ग-घ. ३ द्रष्टव्यम् ख-ग. ४ भयादौ मध्यमो दण्डो ख. ५ व्यतिरेकाभि ख. ६ वर्तमानकाल ख. ७ शास्त्रस्वरूप ख.

न्धक्रिया विवासनाङ्ककरणं ब्राह्मणस्य' इति, तत्र धनापहारः सर्वस्वापहारो विव-क्षितः वधसाहचर्यात्; 'शारीरस्त्ववरोधादिर्जीवितान्तः[1] प्रकीर्तितः। काकिण्या-[2] दिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च ॥' (नारदः परि०५४) इति वधसर्वस्वहरणयोः सहपाठात्। यदप्युक्तम्—'राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम्' इति, तत्प्रथम-कृतसाहसविषयं; न सर्वविषयम्। शारीरस्तु ब्राह्मणस्य न कदाचिद्भवति। न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्' (मनुः ८।३८०) इति सामा-न्येन मनुस्मरणात्। तथा मनुः (८।३८१)—'न ब्राह्मणवधाद्भूयानधर्मो विद्यते भुवि। तस्मादस्य वधं राजा मनसापि न चिन्तयेत् ॥' इति ॥ ८१ ॥

जानतः साक्ष्यानङ्गीकारे आह—

**यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः।**
**स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥ ८२ ॥**

अपि च, **यस्तु** साक्षित्वमङ्गीकृत्यान्यैः साक्षिभिः सह **साक्ष्यं श्रावितः** निगदनकाले[3] **तमोवृतो** रागाद्याक्रान्तचित्तस्तत्**साक्ष्यमन्येभ्यः** साक्षिभ्यो **निह्नुते**–'नाहमत्र साक्षी भवामि' इति, **स** विवादपराजये यो दण्डस्तं **दण्डम-ष्टगुणं दाप्यः। ब्राह्मणं** पुनरष्टगुणद्रव्यदण्डदानासमर्थं **विवासयेत्।** विवासनं च नग्नीकरणगृहभङ्गदेशनिर्वासनलक्षणं विषयानुसारेण द्रष्टव्यम्। इत-रेषां त्वष्टगुणद्रव्यदण्डदानासंभवे[1] स्वजात्युचितकर्मकरणनिगडबन्धनकारागृहप्रवे-शनादि द्रष्टव्यम्। एतच्च पूर्वश्लोकेऽप्यनुसर्तव्यम्। यदा सर्वे साक्ष्यं निह्नुवते तदा सर्वे समानदोषाः। यदा तु साक्ष्यमुक्त्वा पुनरन्यथा वदन्ति, तदानुबन्धाद्यपेक्षया[4] दण्ड्याः। यथाह कात्यायनः—'उक्त्वाऽन्यथा ब्रुवाणाश्च दण्ड्याः स्युर्वाक्छला-न्विताः' इति। न चान्येनोक्ताः साक्षिणोऽन्येन रहस्यनुसर्तव्याः। यथाह नारदः (१।१६५)—'न परेण समुद्दिष्टमुपेयात्साक्षिणं रहः। भेदयेन्नैव चान्येन हीये-[2] तैवं समाचरन् ॥' इति ॥ ८२ ॥

साक्षिणामवचनमसत्यवचनं च सर्वत्र प्रतिषिद्धं, तदपवादार्थमाह—

**वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्।**[3]

यत्र **वर्णिनां** शूद्रविट्क्षत्रविप्राणां सत्यवचनेन **वधः** संभाव्यते **तत्र साक्ष्यनृतं वदेत्** सत्यं न वदेत्। अनेन च सत्यवचनप्रतिषेधेन साक्षिणः सर्वप्रतिषिद्धमसत्यवचनमवचनं चाभ्यनुज्ञायते। यत्र शङ्काभियोगादौ सत्यवचने

टिप्प०—1 जीवितग्रहणान्तो दण्ड इत्याशयः. 2 विंशत्कपर्दिकाः एका काकिणी, भाषायां, 'पै' इति ख्यातं ताम्रनिष्कम्. 3 भाषणसमये. 4 अनुबन्धो दोषोत्पादः; जातिद्रव्यगुणाद्यपेक्षेति सुबोधिनी. 5 साक्ष्यं तत्रानृतं.

पाठा०—१ दण्डासंभवे ख. २ हीयेचैवं घ. ३ वदेद् घ. साक्ष्यम-नृतम् घ.

वर्णिनो वधोऽनृतवचने न कस्यापि वधस्तत्रानृतवचनमभ्यनुज्ञायते । सत्यवचनेऽर्थिप्रत्यर्थिनोरन्यतरस्य वधोऽसत्यवचने चान्यतरस्य वधस्तत्र भावाभ्यनुज्ञा राजा यद्यनुमन्यते । अथ राजा कथमप्यकथने न मुञ्चति भेदादसाक्षित्वं कर्तव्यम् । तस्याप्यसंभवे सत्यमेव वदितव्यम् । अनृते वर्णिवधदोषोऽसत्यवचनदोषश्च । सत्यवचने तु वर्णिवधदोष एव, तत्र शास्त्रं प्रायश्चित्तं कर्तव्यम् ॥–

तर्ह्यसत्यवचने तूष्णींभावे च शास्त्राभ्यनुज्ञानात्प्रत्यवायाभाव इत्यत आह—

**तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥ ८३ ॥**

**तत्पावनाय** अनृतवचनावचननिमित्तप्रत्यवायपरिहाराय **सारस्वतश्चरुर्द्विजै**रेकैकशो **निर्वाप्यः** कर्तव्यः । सरस्वती देवता अस्येति सारस्वतः । अनवस्रावितान्तरूष्मपक्वौदने 'चरु'शब्दः प्रसिद्धः । इहायमभिसन्धिः—'वर्णिनां हि वधो'... णामनृतवचनमवचनं च यन्निषिद्धं तदिहाभ्यनुज्ञातम् । यत्तु—'नैवृतं कालान्तरे अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी' ( मनुः ८।१३ ) इति सामान्येनानिकप्र... वचनमवचनं च प्रतिषिद्धं तदतिक्रमनिमित्तमिदं प्रायश्चित्तम् । नच ... साक्षिणामनृतवचनावचनाभ्यनुज्ञानेऽपि साधारणानृतवचनावचनप्रतिषेधातिक्रम... निमित्तकप्रत्यवायस्य तादवस्थ्यादभ्यनुज्ञावचनमनर्थकमिति । यतः साक्ष्यनृत... वचनयोर्भूयान्प्रत्यवायः साधारणानृतवचनावचनयोरल्पीयानित्यर्थवदभ्यनुज्ञावचनम् । यद्यपि भूयसः प्रत्यवायस्य निवृत्त्या आनुषङ्गिकस्याल्पीयसः प्रत्यवायस्य निवृत्तिरन्यत्र तथापीहाभ्यनुज्ञावचनात्प्रायश्चित्तविधानाच्च भूयसो निवृत्तावपि नप्यानुषङ्गिकोऽपि प्रत्यवायो न निवर्तत इति गम्यते । एतदेवान्यत्र प्रश्नेषु ... वधाशङ्कायां पान्थादीनामनृतवचनावचनाभ्यनुज्ञानं वेदितव्यम् । नच तत्र प्रायश्चित्तमस्ति; प्रतिषेधान्तराभावात् । निमित्तान्तरेण कालान्तरेऽर्थतत्त्वा... साक्षिणामन्येषां च दण्डाभावोऽस्मादेव वचनादवगम्यत इति ॥ ८३ ॥

इति साक्षिप्रकरणम् ।

---

टिप्प०—1 वचनेन. 2 सरस्वतीदेवताकत्वनिरासायाह–सरस्वतीति । 3 ... हि वधो' इति वचनाद्वधप्रसङ्गे सत्यवचनमेव, तथा च **गौतमः**—'नानृतवचने ... जीवनं च तदधीनम्, न तु वाऽल्पीयसो जीवनम्' इति ।

---

**पाठा०—१** भ्यनुज्ञया **ख. २** नाभूतं B. **३** निषिद्धं **ख. ४** ... वचनाभ्यनुज्ञा **ख. ५** साक्षिणामसत्यवचनावचनप्रतिषेधातिक्रमयोः ख...

# अथ लेख्यप्रकरणम् ६

भुक्तिसाक्षिणौ निरूपितौ, सांप्रतं लेख्यं निरूप्यते। तत्र लेख्यं द्विविधम्— शासनं जानपदं चेति। शासनं निरूपितम्। जानपदमभिधीयते। तच्च द्विविधम्— स्वहस्तकृतमन्यकृतं चेति। तत्र स्वहस्तकृतमसाक्षिकं, अन्यकृतं ससाक्षिकम्। अनयोश्च देशाचारानुसारेण प्रामाण्यम्। यथाह नारदः (१।१३५)—'लेख्यं तु द्विविधं ज्ञेयं स्वहस्ताऽन्यकृतं तथा। असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः॥' इति। तत्रान्यकृतमाह—

**यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम्।**
**लेख्यं तु साक्षिमत्कार्यं तस्मिन्धनिकपूर्वकम्॥ ८४॥**

धनिकाधमर्णयोर्**योऽर्थो** हिरण्यादिः **परस्परं स्वरुच्या** 'इयता कालेनैतद्देयम्', 'इयती च प्रतिमासं वृद्धिः' इति **निष्णातो** व्यवस्थितः **तस्मिन्नर्थे** कालान्तरे विप्रतिपत्तौ वस्तुतत्त्वनिर्णयार्थं **लेख्यं साक्षिमदु**क्तलक्षणसाक्षियुक्तं **धनिकपूर्वकं** धनिकः पूर्वो यस्मिंस्तद्धनिकपूर्वकम्। धनिकनामलेखनपूर्वकमिति यावत्। **कार्यं कर्तव्यम्।** उक्तलक्षणाः साक्षिणो वा कर्तव्याः; 'कर्ता यत्कृतं कार्यं सिद्ध्यर्थं तस्य साक्षिणः। प्रवर्तन्ते विवादेषु स्वकृतं वाऽथ लेख्यकम्॥' इति स्मरणात्॥ ८४॥

**समामासतदर्धाहर्नामजातिस्वगोत्रकैः।**
**सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम्॥ ८५॥**

अपि च, **समा** संवत्सरः, **मास**श्चैत्रादिः, **तदर्धं** पक्षः–शुक्लः कृष्णो वा, **अह**स्तिथिः प्रतिपदादिः, **नाम** धनिकर्णिकयोः, **जाति**र्ब्राह्मणत्वादिः, **स्वगोत्रं** वासिष्ठादिगोत्रम्, एतैः समादिभिश्चिह्नितम्, तथा **सब्रह्मचारिकं** बह्वृचादिशाखाप्रयुक्तं गुणनाम बह्वृचः कठ इति। **आत्मीयपितृनाम** धनिकर्णिकपितृनाम, 'आदि'ग्रहणाद्द्रव्यजातिसंख्याचारादेर्ग्रहणम्। 'एतैश्च चिह्नितं लेख्यं कार्यम्' इति गतेन संबन्धः॥ ८५॥

**समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत्।**
**मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम्॥ ८६॥**

किंच, धनिकाधमर्णयोर्योऽर्थः स्वरुच्या व्यवस्थितस्तस्मिन्नर्थे **समाप्ते** लिखिते

टिप्प०—1 साक्षिनिरपेक्षम्. 2 यच्चोक्तं **व्यासेन**—'जातिः संज्ञा निवासोऽर्थः वृद्धिश्च वत्सरः। मासः पक्षो दिनं चैषां लिखितं व्यक्तिकारकम्॥' इति।

पाठा०—१ °मन्यहस्तकृतं ग. २ सगोत्रकैः. A. ३ धनिकाऽधमर्णिकयोः. ४ संख्याचारादेः ख. ग.

ऋणी अधमर्णो नामात्मीयं स्वहस्तेनास्मिँल्लेख्ये यदुपरि लेखितं तन्मम पुत्रस्य मतं अभिप्रेतमिति निवेशयेत् पत्रे विलिखेत् ॥ ८६ ॥

**साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् ।**
**अत्राहममुकः साक्षी लिखेयुरिति ते समाः ॥ ८७ ॥**

तथा, तस्मिँल्लेख्ये ये साक्षिणो लिखितास्तेऽप्यात्मीयपितृनामलेखनपूर्वकं अस्मिन्नर्थेऽयममुको देवदत्तः साक्षी इति स्वहस्तेनैकैकशो लिखेयुः ते च समाः संख्यातो गुणतश्च कर्तव्याः । यद्यधमर्णः साक्षी वा लिपिज्ञो न भवति तदाधमर्णोऽन्येन साक्षी च साक्ष्यन्तरेण सर्वसाक्षिसंनिधौ स्वमतं लेखयेत् । यथाह नारदः—'अलिपिज्ञ ऋणी यः स्यात्स्वमतं तु स लेखयेत् । वा साक्षिणाऽन्येन सर्वसाक्षिसमीपतः ॥' इति ॥ ८७ ॥

**उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना ।**
**लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत् ॥ ८८ ॥**

अपि च, ततो लेखक उभाभ्यां धनिकाधमर्णिकाभ्यां प्रार्थितेन अमुकेन देवदत्तेन विष्णुमित्रसूनुना एतल्लेख्यं लिखितमित्यन्ते लिखेत् ...

सांप्रतं स्वकृतं लेख्यमाह—

**विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ।**
**तत्प्रमाणं स्मृतं लेख्यं बलोपधिकृतादृते ॥ ८९ ॥**

यल्लेख्यं स्वहस्तेन लिखितमधमर्णेन तत्साक्षिभिर्विनापि प्रमाणं स्मृतं मन्वादिभिः । बलोपधिकृतादृते बलेन बलात्कारेण उपधिना ... लोभक्रोधभयमदादिलक्षणेन यत्कृतं तस्माद्विना । नारदोऽप्याह ( १।१३ ... 'मत्ताभियुक्तस्त्रीबालबलात्कारकृतं च यत् । तदप्रमाणं लिखितं भयोपधिकृतं तथा' इति । तच्चैतत्स्वहस्तकृतं परहस्तकृतं च यल्लेख्यं देशाचारानुसारेण ... व्यवहारेऽबन्धकव्यवहारे च युक्तमर्थक्रमापरिलोपेन लिप्यक्षरापरिलोपेन च ... मित्येतावत् न पुनः साधुशब्दैरेव, प्रातिस्विकदेशभाषयापि लेखनीयम् । ... नारदः ( १।१३६ )—'देशाचाराविरुद्धं यद्व्यक्ताधिविधिलक्षणम् । तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम् ॥' इति । विधानं विधिः, आधेर्विधिराधिविधिः ... राधीकरणं तस्य लक्षणं गोप्याधिभोग्याधिकालकृतमित्यादि तद्व्यक्तं विस्पष्टं यस्मिं स्तद्व्यक्ताधिविधिलक्षणम् । अविलुप्तक्रमाक्षरम् । अर्थानां क्रमः क्रमश्चा...

टिप्प०—1 यदप्याह नारदः—'लेख्यं तु द्विविधं विद्यात् स्वहस्तान्यकृतं तथा । असाक्षिमत् साक्षिमच्च सिद्धिर्देशस्थितिस्तयोः' इति । 2 आक्षिप्तः.

पाठा०—१ तेऽसमाः, A. २ काभ्यामुभाभ्यां ख. ३ विना ... ४ तत्रैतत् घ. ५ कृतं च लेख्यं ग. ६ संबन्धव्यवहारे च ख.

क्षराणि अविलुप्तानि क्रमाक्षराणि यस्मिंस्तदविलुप्तक्रमाक्षरं । तदेवंभूतं लेख्यं णम् । राजशासनवन्न साधुशब्दनियमोऽत्रेत्यभिप्रायः ॥ ८९ ॥

लेख्यप्रसङ्गेन लेख्यारूढमप्यृणं त्रिभिरेव देयमित्याह—

**ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव तु ।**

यथा साक्ष्यादिकृतमृणं त्रिभिरेव देयं, तथा लेख्यकृतमप्याहर्तृतत्पुत्र-पौत्रैस्त्रिभिरेव देयं, न चतुर्थादिभिरिति नियम्यते । ननु 'पुत्रपौत्रैर्ऋणं देयम्' (व्य० ५०) इत्यविशेषेण ऋणमात्रं त्रिभिरेव देयमिति नियतमेव । बाढम् । अस्यैवार्थस्य पत्रारूढर्णविषये स्मृत्यन्तरप्रभवामपवादशङ्कामपनेतुमिदं वचनमारब्धम् । तथा हि—पत्रलक्षणमभिधाय कात्यायनेनाभिहितम्—'एवं कालमतिक्रान्तं पितृणां दाप्यते ऋणम्' इति । इत्थं पत्रारूढमृणमतिक्रान्तकालमपि पितृणां न्धि दाप्यते । अत्र 'पितॄणाम्' इति बहुवचननिर्देशात्कालमतिक्रान्तमिति वचनाच्चतुर्थादिर्दाप्य इति प्रतीयते । तथा हारीतेनापि—'लेख्यं यस्य भवेद्धस्ते लाभं विनिर्दिशेत्' इति । अत्रापि यस्य हस्ते लेख्य (पत्र) मस्ति तस्यर्णलाभः सामान्येन चतुर्थादिभ्योऽप्यृणलाभोऽस्तीति प्रतीयते । अतश्चैतदाशङ्कानिवृत्त्यर्थमेतद्वचनमित्युक्तम् । वचनद्वयं च योगीश्वरवचनानुसारेण योजनीयम् ॥—

अस्यापवादमाह—

**आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते ॥ ९० ॥**

सबन्धकेऽपि पत्रारूढं ऋणं त्रिभिरेव देयमिति नियमादृणापाकरणानधिकारे-ऽपहरणेऽप्यनधिकारप्राप्ताविदमुच्यते । यावच्चतुर्थेन पञ्चमेन वा ऋणं न दीयते तावदेवाधिर्भुज्यत इति वदता सबन्धकर्णापाकरणे चतुर्थादेरप्यधिकारो दर्शितः । नन्वेतदप्युक्तमेव 'फलभोग्यो न नश्यति' (व्य० ५८) इति । सत्यम् । अप्येतस्मिन्नसत्यपवादवचने पुरुषत्रयविषयमेव स्यादिति सर्वमनवद्यम् ॥ ९० ॥

आनुषङ्गिकं परिसमाप्य प्रकृतमेवानुसरति—

**देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा ।**
**भिन्ने दग्धेऽथवा छिन्ने लेख्यमन्यत्तु कारयेत् ॥ ९१ ॥**

व्यवहाराक्षमे पत्रे पत्रान्तरं कुर्यादिति विधीयते । व्यवहाराक्षमत्वं चात्यन्तव्यव-

---

टिप्प०—1 अयमर्थः–बहुत्वं त्रित्वे पर्यवस्यति, तथा च 'पितॄणां' इत्युक्तेः नस्य प्रपितामहर्णं देयमिति प्रतीयते । एवं यदा पौत्रोऽप्यतिक्रान्तो मृतस्तदा 'पुत्रपौत्रैर्ऋणं देयम्' ( व्य० ५० ) इत्यादिवचनैः पौत्रानन्तरकालीनस्य प्रपौत्रारदेयत्वे अपि 'अतिक्रान्तं कालं' इत्युक्तेः पौत्रादीनामपि पत्रारूढे ऋणे देयत्वाशंका भवतीति ।

---

पाठा०—१ तत्पुत्रपौत्रैः. २ वचनाच्च चतुर्थादिः ख. ३ पत्रारूढे ऋणे ना. ४ कारणापहरणे ख. ५ दग्धे तथा छि. A; छिन्ने भिन्ने तथा दग्धे V. या० १७

हितदेशान्तरस्थे पत्रे दुर्लेख्ये दुष्टानि संदिह्यमानानि अवाचकानि वा लिप्यक्षराणि पदानि वा यस्मिंस्तत् दुर्लेख्यं तस्मिन्दुर्लेख्ये, नष्टे उन्मृष्टे मषीदौर्बल्यादिना मृदितलिप्यक्षरे, हृते तस्करादिभिः[1], भिन्ने दग्धे अग्निना प्रज्वलिते, छिन्ने द्विधाभूते सति पत्रे द्विर्भवति[2]। एतदर्थिनोः परस्परानुमतौ सत्याम्। विमत्यां तु व्यवहारप्राप्तौ देशान्तरस्थे मार्गाध्वापेक्षया[3] कालो दातव्यः। दुर्गदेशावस्थिते[4] नष्टे वा पत्रे साक्षिभिर्निर्णयः कार्यः। यथाह नारदः (१।१४२)—'लेख्ये देशान्तरन्यस्ते शीर्णे हृते। सतस्तत्कालकरणमसतो द्रष्टृदर्शनम्[5] ॥' इति। सतो विद्यमानस्य देशान्तरस्थस्यानयनाय कालकरणं कालावधिर्दातव्यः। असतः पुनरविद्यमानस्य पत्रस्य पूर्वं ये द्रष्टारः साक्षिणस्तैर्दर्शनं[6] व्यवहारपरिसमापनं कार्यम्। साक्षिणो न सन्ति तदा दिव्येन निर्णयः कार्यः—'अलेख्यसाक्षिके दैवीं विनिर्दिशेत्' इति स्मरणात्। एतच्च जानपदं व्यवस्थापत्रम्। राजकीयं व्यवस्थापत्रमीदृशमेव भवति। इयांस्तु विशेषः—'राज्ञः स्वहस्तसंयुक्तं चिह्नितं तथा। राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत् ॥' इति। राजकीयं जयपत्रकं वृद्धवसिष्ठेनोक्तम्—'यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियम्[1] ... सावधारणकं चैव जयपत्रकमिष्यते ॥ प्राड्विवाकादिहस्ताङ्कं मुद्रितं राजमुद्रया ... सिद्धेऽर्थे वादिने दद्याज्जयिने जयपत्रकम् ॥' इति। तथा सभासदोऽपि ... मेऽमुकपुत्रस्येति स्वहस्तं दद्युः[7]।—'सभासदश्च ये तत्र स्मृतिशास्त्रविदः ... यथालेख्यविधौ तद्वत्स्वहस्तं दद्युरेव ते ॥' इति स्मरणात्। सभासदां परस्परानुमतिव्यतिरेकेण न व्यवहारो निःशल्यो भवति। यथाह नारदः— ... सभ्यो जनः सर्वः साध्वेतदिति मन्यते। स निःशल्यो विवादः स्यात्स... न्यथा भवेत् ॥' इति। एतच्चतुष्पाद्व्यवहार एव।—'साधयेत्साध्यमर्थं यच्च ... न्वितं च यत्। राजमुद्रान्वितं[8] चैव जयपत्रकमिष्यते ॥' (कात्यायनः) ... स्मरणात्। यत्र तु हीनता। यथा—'अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः। आहूतप्रपलायी[9] च हीनः पञ्चविधः स्मृतः ॥' (नारदः मा० २।३३) इति ... न जयपत्रकमस्ति, अपि तु हीनपत्रकमेव। तच्च कालान्तरे दण्डप्राप्त्यर्थं ... तु प्राङ्न्यायविधिसिद्ध्यर्थमिति विशेषः[2] ॥ ९१ ॥

टिप्प०—1 प्रतिज्ञातार्थः साध्यार्थस्तेन संयुक्तम्, तथोत्तरेण द्वितीय... क्रियया पत्रादिरूपेण च सहितम्। तथा सावधारणकं-अवधारणं निर्णयस्तेन स... पत्रं भवति। तच्चोक्तं बृहस्पतिना 'पूर्वोत्तरक्रियावादनिर्णयान्ते यदा नृपः ... ज्जयिने लेख्यं जयपत्रं तदुच्यते ॥' इति। 2 हीनपत्रत इत्याशयः।

पाठा०—१ तस्करादिना ग-घ. २ द्वितीयपत्रं भवति ग. ३ दुर्गाध्वापेक्षया ख. ४ दुर्देशावस्थिते क. ग. ५ दृष्टदर्शनं घ. ६ ... ख. ७ दत्तं मे ख. ८ मुद्राङ्कितं ग. ९ व्यपलापी ग.

लेख्यसंदेहे निर्णयनिमित्तान्याह—

**[1]संदिग्धलेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः ।**
**युक्तिप्राप्तिक्रियाचिह्नसंबन्धागमहेतुभिः ॥ ९२ ॥**

शुद्धमशुद्धं वा' इति **संदिग्धस्य लेख्यस्य शुद्धिः स्वहस्तलिखिताभिः स्यात्** । स्वहस्तेन लिखितं यल्लेख्यान्तरं तेन शुद्धिः । यदि सदृशान्यानि भवन्ति तदा शुद्धिः स्यादित्यर्थः । 'आदि'शब्दात् साक्षिलेखकस्वहस्तलिखितान्तरसंवादाच्छुद्धिरिति । युक्त्या प्राप्तिर्युक्तिप्राप्तिः, देशकालपुरुषाणां द्रव्येण सं[2]बन्धः प्राप्तिः । 'अस्मिन्देशेऽस्मिन्कालेऽस्य पुरुषस्येदं द्रव्यं घटते' इति [युक्ति]प्राप्तिः, **क्रिया** तत्साक्ष्युपन्यासः, **चिह्नमसाधारणं** श्रीकारादि, **'संब[न्धो]**ऽर्थिप्रत्यर्थिनोः पूर्वमपि परस्परविश्वासेन दानग्रहणादिसंबन्धः, **आगमो-**[ए]तावतोऽर्थस्य संभावितः प्राप्त्युपायः, एते एव **हेतवः** । एभिर्हेतुभिः संदि[ग्धस्य] लेख्यस्य शुद्धिः स्यात्' इत्यन्वयः । यदा तु लेख्यसंदेहे निर्णयो न जायते [तदा] साक्षिभिर्निर्णयः कार्यः । यथाह कात्यायनः—'दूषिते पत्रके वादी तदा[र्त]स्तु निर्दिशेत्' इति । साक्षिसंभवविषयमिदं वचनम् । साक्ष्यसंभवविषयं तु [कात्यायनो]क्तवचनम्—'न मयैतत्कृतं पत्रं कूटमेतेन कारितम् । अधरीकृत्य तत्पत्रमर्थे [स]भासदो[न्व]येन निर्णयः ॥' इति ॥ ९२ ॥

एवं शोधिते पत्रे ऋणे च दातव्ये प्राप्ते यदा कृत्स्नमेव ऋणं दातुमसमर्थस्तदा कर्तव्यमित्यत आह—

**लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वा दत्त्वर्णिको धनम् ।**
**धनी [3]वोपगतं दद्यात्स्वहस्तपरिचिह्नितम् ॥ ९३ ॥**

यदाऽधमर्णिकः सकलमृणं दातुमसमर्थस्तदा शक्त्यनुसारेण दत्त्वा पूर्वकृतस्य [ले]ख्यस्य **पृष्ठेऽभिलिखेत्** 'एतावन्मया दत्तम्' इति । **उत्तमर्णो वा उप-**[गतं] प्राप्तं धनं तस्यैव लेख्यस्य **पृष्ठे दद्याद**भिलिखेत्—'एतावन्मया लब्धम्' [इ]ति । कथम्? **स्वहस्तपरिचिह्नितं** स्वहस्तलिखिताक्षरचिह्नितम् । **यद्वा,—** [उप]गतं प्रवेशपत्रं स्वहस्तलिखि[4]तचिह्नितमधमर्णायोत्तमर्णो **दद्यात्** ॥ ९३ ॥

ऋणे तु कृत्स्ने दत्ते लेख्यं किं कर्तव्यमित्यत आह—

**दत्त्व[5]र्णं पाटयेल्लेख्यं शुद्ध्यै वाऽन्यत्तु कारयेत् ।**

[क्र]मेण सकृदेव वा कृत्स्न**मृणं दत्त्वा** पूर्वकृतं **लेख्यं पाटयेत्** । यदा तु [दे]शावस्थितं लेख्यं नष्टं वा तदा **शुद्ध्यै** अधमर्णत्वनिवृत्त्यर्थ**मन्यल्लेख्यं** [का]रयेदुत्तमर्णेनाधमर्णः । पूर्वोक्तक्रमेणोत्तमर्णो विशुद्धिपत्रमधमर्णाय दद्यादि[त्यर्थः] ॥—

---

पाठा०—१ संदिग्धलेख्ये शुद्धिः, A. २ संबन्धप्राप्तिः ख घ. ३ चोप[गतं] घ. ४ लिखितपरिचिह्नित ग. ५ उत्तमर्ण अध ख.

ससाक्षिके ऋणे कृत्स्ने दातव्ये किं कर्तव्यमित्यत आह—

**साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकम् ॥ ९४ ॥**

यत्तु **ससाक्षिकमृणं** तत्पूर्वसाक्षिसमक्षमेव **दद्यात्** ॥ ९४ ॥

इति लेख्यप्रकरणम् ।

---

## अथ दिव्यप्रकरणम् ७

लिखितसाक्षिभुक्तिलक्षणं त्रिविधं मानुषं प्रमाणमुक्तम् । अथावसर प्रमाणमभिधास्यन् 'तुलाग्न्याप' इत्यादिभिराद्यैः पञ्चभिः श्लोकैर्दिव्यमा यति । तत्र तावद्दिव्यान्युपदिशति—

**तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।**

**तुलादीनि कोशान्तानि** पञ्च **दिव्यानीह** धर्मशास्त्रे **विशुद्धये** स्यार्थस्य संदेह[2]निवृत्तये **दातव्यानी**ति ॥—

नन्वन्[3]यत्रान्यान्यपि तण्डुलादीनि दिव्यानि सन्ति—'धटो[1]ऽग्निरुदकं कोशस्तथैव च । तण्डुलाश्चैव दिव्यानि सप्तमस्तप्तमाषकः ॥' इति पि णात् । अतः कथमेतावन्त्येवेत्यत आह—

**महाभियोगेष्वे[4]तानि**

**एतानि महाभियोगे[2]ष्वे**व नान्यत्रेति नियम्यते न पुनरिमान्येव नीति । महत्त्वावधिं च वक्ष्यति । नन्वल्पाभियोगेऽपि कोशं[5] इष्यते; मल्पेऽपि दापयेत्' इति स्मरणात् । सत्यम् । कोशस्य तुलादिषु पाठो न योगेष्वेवेति नियमार्थः, किंतु सावष्टम्भाभियोगेऽपि प्राप्त्यर्थः । अन्यथा योगे एव स्यात्; 'अवष्टम्भाभियुक्तानां धटादीनि विनिर्दिशेत् । त कोशश्च शङ्कास्वेव न संशयः ॥' इति स्मरणात् ॥

महाभियोगेषु शङ्कितेषु सावष्टम्भेषु चाविशेषेण प्राप्तावपवादमाह—

**शीर्षकस्थेऽभियोक्तरि ॥**

एतानि तुलादीन्य**भियोक्तरि शीर्ष[3]कस्थे**ऽभियुक्तस्य भवन्ति

टिप्प०—1 'धटः स्यात्तु तुलाकाष्ठम्' इत्यभिधानम् । 2 महाभियो प्रायः, महापातकाद्यभियोग इति वा; स च द्विविधः—शङ्कितः, सावष्टम्भश्च सहितः सावष्टम्भः, स्वोपरि दण्डमंगीकृत्य लापितः सावष्टम्भः, 'निश्चयः कल्पतरुः । यथाऽभियोक्ता 'अहमस्यापराधं जानामि' इति शीर्षकस्थो भवति ष्टभाभियोगः इति भावः । 3 'यद्यनेनेदं न कृतं स्यात् , तदा मयाऽयं द इति वादी शीर्षकस्थः ।

पाठा०—१ द्भिरारभ्य घ. २ संदिग्ध. ३ अन्यत्रान्या ख. त्वेतानि. A, ५ कोशोऽस्त्येव ग.

रो व्यवहारस्य चतुर्थः पादो जयपराजयलक्षणस्तेन च दण्डो लक्ष्यते, तत्र तीति शीर्षकस्थः तत्प्रयुक्तदण्डभागित्यर्थः ॥ ९५ ॥

'ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्' (व्य० ७) इति भावप्रतिज्ञात्रा- एव [1]क्रियेति व्यवस्था दर्शिता तदपवादार्थमाह—

**रुच्या वाऽन्यतरः कुर्यादितरो वर्तयेच्छिरः ।**

रुच्याभियोक्त्रभियुक्तयोः परस्परसंप्रतिपत्त्याऽन्यतरोऽभियुक्तोऽभियोक्ता दिव्यं कुर्यात् । इतरोऽभियुक्तोऽभियोक्ता वा **शिरः** शारीरमर्थदण्डं वा येदङ्गीकुर्यात् । अयमभिसन्धिः—न मानुषप्रमाणवद्दिव्यं प्रमाणं भावैक- रं अपि तु भावाभावावविशेषेण गोचरयति । अतश्च मिथ्योत्तरे प्रत्यवस्क- प्राङ्न्याये वाऽर्थिप्रत्यर्थिनोरन्यतरस्येच्छया दिव्यं भवतीति ॥—

अल्पाभियोगे महाभियोगे शङ्कासावष्टम्भयोरप्यविशेषेण कोशो [2]भवतीत्युक्तं, दीनि विषान्तानि तु महाभियोगेष्वेव सावष्टम्भेष्वेवेति च नियमो दर्शितः । वष्टम्भाभियोगेष्वेवेत्यस्यापवादमाह—

**विनापि शीर्षकात्कुर्यान्नृप[3]द्रोहेऽथ पातके ॥ ९६ ॥**

राजद्रोहाभिशङ्कायां ब्रह्महत्यादिपातकाभिशङ्कायां च शिरःस्था- ना **विनापि** तुलादीनि **कुर्यात्** महाचौर्याभिशङ्कायां च । यथाह—'रा- ः शङ्कितानां च निर्दिष्टानां च दस्युभिः । आत्मशुद्धिपराणां च दिव्यं देयं विना ॥' इति । तण्डुलाः पुनरल्पचौर्यशङ्कायामेव ।—'चौर्ये तु तण्डुला न्यत्रेति विनिश्चयः' इति पितामहवचनात् । तप्तमाषस्तु महाचौर्याभि- यामेव; 'चौर्यशङ्काभियुक्तानां तप्तमाषो विधीयते' इति स्मरणात् । अन्ये शपथा अल्पार्थविषयाः; 'सत्यं वाहनशस्त्राणि गोबीजकनकानि च । तापितृपादांश्च दत्तानि सुकृतानि च ॥ स्पृशेच्छिरांसि पुत्राणां दाराणां सुहृदां । अभियोगेषु सर्वे[4]षु कोशपानमथापि वा ॥ इत्येते शपथाः प्रोक्ता मनुना प्रकारणे ॥' इति [5]नारदस्मरणात् ॥ यद्यपि मानुषप्रमाणानिर्णयस्य निर्णायकं दिव्यमिति लोकप्रसिद्ध्या शपथानामपि दिव्यत्वं तथापि कालान्तरनिर्णय- त्तत्वेन समन[6]न्तरनिर्णयनिमित्तेभ्यो धटादिभ्यो दिव्येभ्यो भेदत्वव्यपदेशो णपरिव्राजकवत् । कोशस्य तु शपथत्वेऽपि धटादिषु पाठो महाभियोगविष- नावष्टम्भाभियोगविषयत्वेन च धटादिसाम्यात्तु समनन्तरनिर्णयनिमित्त- । तण्डुलानां तप्तमाषस्य च समनन्तरनिर्णयनिमित्तत्वेऽप्यल्पविषयत्वेन

टिप्प०—1 'ब्राह्मणानामन्त्रय' इत्युक्ते परिव्राजकेऽपि ब्राह्मणत्वस्याविशिष्टत्वात् मन्त्रणेऽपि प्राप्ते, पुनः 'परिव्राजकमामन्त्रय' इति पृथगभिधानं यथा परिव्राजकप्राधान्य- नार्थं तद्वच्छपथसिद्धानां तुलादीनां पृथक्ख्यापनं प्रयोजनान्तरार्थमित्याशयः ।

पाठा०—१ क्रियाव्यवस्था ख. २ भवतीति युक्तं घ. ३ राजद्रोहे ४. साध्येषु ग. सर्वेषु कोशयान घ. ५ नारदादि ख-ग. ६ नन्तरनिमित्त- त्तेभ्यो घ.

शङ्काविषयत्वेन च धटादिवैलक्षण्यात्तेष्वपाठ इति संतोष्टव्यम्। ए... दिव्यानि शपथाश्च यथासंभवमृणादिषु विवादेषु प्रयोक्तव्यानि। यत्तु— ... वचनम् 'स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत्' इति, तदपि लि... न्तादिसद्भावे दिव्यानि परिवर्जयेदिति व्याख्येयम्। ननु विवादा... प्रमाणान्तरसंभवे दिव्यानामनवकाश एव। सत्यम्। ऋणादिषु विवा... लक्षणसाक्ष्युपन्यासेऽर्थिना कृतेऽपि प्रत्यर्थी यदि दण्डाभ्युपगमावष्टम्भे... मवलम्बते तदा दिव्यमपि भवति। साक्षिणामाशयदोषसंभवाद्दिव्यस्य ... षत्वेन वस्तुतत्त्वविषयत्वात्तल्लक्षणत्वाच्च धर्मस्य। यथाह नारदः—'... स्थितो धर्मो व्यवहारस्तु साक्षिणि। दैवसाध्ये पौरुषेयीं न लेख्यं वा ... येत्॥' इति। स्थावरेषु च विवादेषु प्रत्यर्थिना दण्डावष्टम्भेन दिव्या... कृतेऽपि सामन्तादिदृष्टप्रमाणसद्भावे न दिव्यं ग्राह्यमिति विकल्पनिरा... 'स्थावरेषु विवादेषु' इत्यादिपितामहवचनं नात्यन्तिकदिव्यनिराकर... लिखितसामन्ताद्यभावे स्थावरविवादेष्वनिर्णयप्रसङ्गात्॥ ९६॥

दिव्ये साधारणविधिः—

**सचैलं स्नातमाहूय सूर्योदय उपोषितम्।**
**कारयेत्सर्वदिव्यानि नृपब्राह्मणसंनिधौ॥ ९७॥**

किंच, पूर्वेद्युरुपोषितमुदिते सूर्ये सचैलं स्नातं दिव्यग्राहि... **नृपस्य** सभ्यानां च **ब्राह्मणानां संनिधौ सर्वाणि दिव्यानि** कार... ड्विवाकः—'त्रिरात्रोपोषिताय स्युरेकरात्रोषिताय वा। नित्यं दिव्यानि ... शुचये चार्द्रवाससे॥' इत्युपवासविकल्पः पितामहेनोक्तो बलवदबलवन्म... ल्पकार्यविषयत्वेन व्यवस्थितो द्रष्टव्यः। उपवासनियमश्च कारयितुः प्रा... स्यापि—'दिव्येषु सर्वकार्याणि प्राड्विवाकः समाचरेत्। अध्वरेषु ... सोपवासो नृपाज्ञया॥' इति पितामहवचनात्॥ अत्र यद्यपि सूर्योदय... शेषेणोक्तं, तथापि शिष्टसमाचारात्स्नानुवासरे दिव्यानि देयानि। तत्रापि... ह्णेऽग्निपरीक्षा स्यात्पूर्वाह्णे च धटो भवेत्। मध्याह्ने तु जलं देयं धर्मत... प्सताम्॥ दिवसस्य तु पूर्वाह्णे कोशशुद्धिर्विधीयते। रात्रौ तु पश्चिमे ... देयं सुशीतलम्॥' इति पितामहोक्तो विशेषो द्रष्टव्यः॥ अनुक्तकाल... तण्डुलतप्तमाषप्रभृतीनां पूर्वाह्ण एव प्रदानम्; 'पूर्वाह्णे सर्वदिव्यानां... परिकीर्तितम्' इति सामान्येन नारदस्मरणात्। अहनि त्रिधा विभ... भागः पूर्वाह्णः, मध्यमो मध्याह्नः, उत्तरोऽपराह्णः। तथापरोऽपि काल... विधिप्रतिषेधमुखेन दर्शितः। विधिमुखस्तावत्—'अग्नेः शिशिरहेमन्तौ ...

---

पाठा०—१ न्तरसद्भावे घ. २ उक्तलक्षणे घ. ३ माशयेद्दोष घ. ४ ... चैलस्नानमाहूय A. ५ कोशसिद्धिः ख. ६ अनुक्तवेला ग-घ. ७ ... भागः घ. ८ उत्तमो घ.

कीर्तिताः । शरद्ग्रीष्मेषु सलिलं हेमन्ते शिशिरे विषम् ॥ चैत्रो मार्गशिरश्चैव वैशाखश्च तथैव च । एते साधारणा मासा दिव्यानामविरोधिनः ॥ कोशस्तु सदा देयस्तुला स्यात्सार्वकालिकी ॥' इति। 'कोश'ग्रहणं सर्वशपथानामुपलक्षणम्। तुलानां पुनर्विशेषानभिधानात्सार्वकालिकत्वम् । प्रतिषेधमुखोऽपि—'न शीते तोयशुद्धिः स्यान्नोष्णकालेऽग्निशोधनम् । न प्रावृषि विषं दद्यात्प्रवाते न तुलां तथा ॥ नापराह्णे न सन्ध्यायां न मध्याह्ने कदाचन ॥' इति । 'न शीते तोयशुद्धिः स्या'दित्यत्र 'शीत'शब्देन हेमन्त-शिशिर-वर्षाणां ग्रहणम् । 'नोष्णकालेऽग्निशोधन'मित्यत्र 'उष्णकाल'शब्देन ग्रीष्मशरदोः विधानलब्धस्यापि पुनर्निषेध आदरार्थः; प्रयोजनं तु वक्ष्यते ॥ ९७ ॥

अधिकारिव्यवस्थामाह—

**तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम् ।**
**अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा ॥ ९८ ॥**

स्त्री स्त्रीमात्रं जातिवयोवस्थाविशेषानादरेण, **बाल** आ षोडशाद्वर्षाज्जातिविशेषानादरेण, **वृद्धो**ऽशीतिकावरः, **अन्धो** नेत्रविकलः, **पङ्गुः** पादविकलः, **ब्राह्मणो** जातिमात्रम्, **रोगी** व्याधितः, एतेषां शोधनार्थं **तुलै**वेति नियमः। **अग्निः** फालस्तप्तमाषश्च क्षत्रियस्य। **जलमेव** वैश्यस्य। **'वा'**शब्दोऽवधारणे। **विषस्य यवा** उक्तपरिमाणाः **सप्तैव शूद्रस्य** शोधनार्थं **भवन्ति**। शूद्रस्य तुलाविधानात् 'शूद्रस्य यवाः सप्त विषस्य वा' इति विषविधानादग्निर्जलं च क्षत्रियवैश्यविषयमुक्तम् । एतदेव स्पष्टीकृतं पितामहेन—'ब्राह्मणस्य घटो देयः क्षत्रियस्य हुताशनः । वैश्यस्य सलिलं प्रोक्तं विषं शूद्रस्य दापयेत् ॥' इति। स्त्र्यादीनां दिव्याभावस्मरणम्, 'सव्रतानां भृशार्तानां व्याधितानां तपस्विनाम्। स्त्रीणां च न भवेद्दिव्यं यदि धर्मस्त्वपेक्षितः ॥' इति, तत् 'रुच्या वाऽन्यतरः स्यात्' (व्य० ९६) इति विकल्पनिवृत्त्यर्थम् । एतदुक्तं भवति—'अवष्टम्भाभियोगेषु स्त्र्यादीनामभियोक्तृत्वेऽभियोज्यानामेव दिव्यं, एतेषामभियोज्यत्वेऽप्यभियोक्तॄणामेव दिव्यम् । परस्पराभियोगे तु विकल्प एव । तत्रापि तुलैवेति कात्यायनवचनेन नियम्यते । तथा महापातकादिशङ्काभियोगे स्त्र्यादीनां तुलैवेति एतच्च वचनं सर्वदिव्यसाधारणेषु मार्गशिरश्चैत्रवैशाखेषु स्त्र्यादीनां सर्वदिव्यसमवधाने नियामकतयार्थवत् । नच सर्वकालं स्त्रीणां तुलैवेति; 'स्त्रीणां तु न विषं प्रोक्तं न चापि सलिलं स्मृतम् । घटकोशादिभिस्तासामन्तस्तत्त्वं विचारयेत् ॥' इति विषसलिलव्यतिरिक्तघटकोशाग्न्यादिभिः शुद्धिविधानात् । एवं बालादिष्वपि योजनीयम्। तथा ब्राह्मणादीनामपि न सार्वकालिकस्तुलादिनियमः; 'सर्वेषामेव वर्णानां कोशशुद्धिर्विधीयते । सर्वाण्येतानि सर्वेषां ब्राह्मणस्य विषं विना ॥' इति

पाठा०—१ तोयसिद्धिः स्यात् ख. २ सार्वकालं ख. ३ यथा ख.

पितामहस्मरणात्। तस्मात्साधारणे काले बहुदिव्यसमवधाने तुलादिनियम वचनम् । कालान्तरे तु तत्तत्कालविहितं सर्वेषाम् । तथा हि—वर्षा सर्वेषाम् । हेमन्तशिशिरयोस्तु क्षत्रियादित्रयाणामग्निविषयोर्विकल्पः। ग्री स्त्वग्निरेव न कदाचिद्विषम्; 'ब्राह्मणस्य विषं विना' इति प्रतिषेधात्। श दोस्तु सलिलमेव । येषां तु व्याधिविशेषेणाग्न्यादिनिषेधः—'कुष्ठिनां सलिलं श्वासकासिनाम्। पित्तश्लेष्मवतां नित्यं विषं तु परिवर्जयेत्॥' इ मन्यादिकालेऽपि साधारणं तुलै[1]व दिव्यं भवति ॥ तथा 'तोय चैव दातव्यं बलिनां नृणाम्' इति वै[2]चनाद्दुर्बलानामपि सर्वथा विधिप्रतिषे[3] कालानतिक्रमेण जातिवयोर्व[4]स्थाश्रितानि दिव्यानि देयानि ॥ ९८ ॥

'महाभियोगेष्वेतानि' ( व्य० ९५ ) इत्युक्तं, तत्राभियोगस्य यै[5]दपेक्ष्य तदिदानीमाह—

**नासहस्राद्धरेत्फालं न विषं न तुलां तथा।**

**पणसहस्रादर्वाक् फालं विषं तुलां वा न कारयेत्** । ...ाह— जलमपि । यथोक्तम्—'तुलादीनि विषान्तानि गुरुष्वर्थेषु दापयेत्' इति कोशस्याग्रहणं 'कोशमल्पेऽपि दापयेत्' इत्यल्पाभियोगेऽपि तस्य स एतानि चत्वारि दिव्यानि पणसहस्रादूर्ध्वमेव भवन्ति नार्वागित्यर्थः॥ नन प्यग्न्यादीनि पितामहेन दर्शितानि—'सहस्रे तु धटं दद्यात्सहस्रार्धे तथा अर्धस्यार्धे तु सलिलं तस्यार्धे तु विषं स्मृतम् ॥' इति सत्यम्।—त[6]त्रेत्थं व्य यद्द्रव्यापहारे पातित्यं भवति तद्विषयं पितामहवचनं, इतरद्रव्यविषयं यो वचनमिति । एतच्च वचनद्वयं स्तेयसाहसविषयम्, अपह्नवे तु विशेषो कात्यायनेन—'दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्पयेत् । स्तेयसाहस स्वल्पेऽप्यर्थे प्रदापयेत्॥ सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत्। हेमप्रमा तु तदा दिव्यं नियोजयेत् ॥ ज्ञात्वा संख्यां सुवर्णानां शतनाशे विषं स्म अशीतेस्तु विनाशे वै दँ[7]द्याच्चैव हुताशनम् ॥ षष्ट्या नाशे जलं देयं चत्वा वै धटम् । विं[8]शद्दशविनाशे तु कोशपानं विधीयते ॥ पञ्चाधिकस्य वा ततोऽर्धार्धस्य तण्डुलाः। ततोऽर्धार्धविनाशे हि स्पृशेत्पुत्रादिमस्तकान्॥ तत र्धविनाशे तु लौकिक्यश्च क्रियाः स्मृताः । एवं विचारयन्राजा धर्मार्था हीयते ॥' इति । 'ज्ञात्वा संख्या सुवर्णानाम्' इत्यत्र 'सुवर्ण'शब्दः 'षोडश सुवर्णः' ( आ० ३६३ ) इत्युक्तपरिमाणवचनः । 'नाश'शब्दश्चात्रापह्नवव 'नासहस्राद्धरेत्फालम्' इत्यत्र तु ताम्रिकपणसहस्रं बोद्धव्यम् ॥—

---

**पाठा०—१ तुला दिव्यं ग. २ दुर्बलानामिति सर्वदा घ. ३ प्रतिषे उक्तकालानति ग. ४ वस्थानाश्रितानि ख. ५ यदपेक्ष्य ख-ग. ६ व्यवस्था घ. ७ दद्यादेव ख. ८ दद्याद्विंशद्विनाशे तु ग.**

ननु नृपद्रोहे महापातके चैतानि दिव्यान्युक्तानि, तत्कथं 'नासहस्राद्धरेत्फालम्' (व्य० ९९ ) इत्यत्राह—

**नृपार्थेष्वभिशापे च वहेयुः शुचयः सदा ॥ ९९ ॥**

**नृपद्रोहेषु महापातकाभियोगे** च सदा द्रव्यसंख्यामनपेक्ष्यैवैतानि दिव्यानि **वहेयुः** कुर्युरुपवासादिना **शुचयः** सन्तः। तथा देशविशेषोऽपि नारदेनोक्तः—'सभाराजकुलद्वारदेवायतनचत्वरे। निधेयो निश्चलः पूज्यो धूपमाल्यानुलेपनैः ॥' इति। निधेयो घटः। व्यवस्था च कात्यायनेनोक्ता—'इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम्। नृपद्रोहे प्रवृत्तानां राजद्वारे प्रयोजयेत् ॥ प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे। अतोऽन्येषु सभामध्ये दिव्यं देयं विदुर्बुधाः ॥ अस्पृश्याधमदासानां म्लेच्छानां पापकारिणाम्। प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि। तत्प्रसिद्धानि दिव्यानि संशये तेषु निर्दिशेत् ॥' इति ॥ ९९ ॥

इति दिव्यमातृका ॥

एवं सर्वदिव्योपयोगिनीं दिव्यमातृकामभिधायेदानीं घटादिदिव्यानां प्रयोगम्। आह—

**तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः।**
**प्रतिमानसमीभूतो रेखां कृत्वाऽवतारितः ॥ १०० ॥**
**'त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता।**
**तत्सत्यं वद कल्याणि! संशयान्मां विमोचय ॥१०१॥**
**यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय।**
**शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत्' ॥ १०२ ॥**

**तुलाया धारणं** तोलनं ये **विदन्ति** सुवर्णकारप्रभृतयस्तैः **प्रतिमानेन** मृदादिना **समीभूतः** समीकृतस्तुलामाश्रितोऽधिरूढोऽभियुक्तोऽ**भियोक्ता** वा दिव्यकारी **रेखां कृत्वा** येन संनिवेशेन प्रतिमानसमीकरणदशायां शिक्यतलेऽवस्थितस्तस्मिन्पार्ण्डुलेखेनाङ्कयित्वा**ऽवतारितस्तुलामभिमन्त्रयेत्** प्रार्थयेतानेन मन्त्रेण—**हे तुले! त्वं सत्यस्य स्थानमसि, पुरा** आदिसृष्टौ **देवैर्हि**रण्यगर्भप्रभृतिभि**र्विनिर्मिता**त्पादिता। **तत्**तस्मात्**सत्यं** संदिग्धस्यार्थस्य स्वरूपं **वद** कथय; **कल्याणि** शोभने! अस्मात्**संशयान्मां विमोचय**। हे **मातः**! **यद्यहं पापकृ**दसत्यवाद्यस्मि **ततो मां त्वमधो नय**। अथ **शुद्धः** सत्य-

टिप्प०—1 मातृका नाम परिभाषा. 2 पाण्डुलेखः 'खडू' इति भाषाप्रसिद्धः.

पाठा०—१ अभिशापेषु ग. २ नृपद्रोहेषु ख. ३ ततोऽन्येषु तु कार्येषु सभामध्ये विदुर्बुधाः ग. ४ म्लेच्छानामपकारिणां ग. ५ दापयेत् ग. ६ रेखाः कृ° A. ७ विशोधय घ. ८ पाण्डुलेख्येन ख.

वायसि **ततो मामूर्ध्वं गमये**ति ॥ प्राड्विवाकस्य तुलाभिमन्त्रणमन्त्राः[1]
न्तरोक्ताः, अयं तु दिव्यकारिणः । जयपराजयलक्षणं तु मन्त्रलिङ्गादे[1]
इति न पृथगुक्तम् ॥ घटनिर्माणं पुनरारोहणाद्यर्थसिद्धमेव पितामहना
स्पष्टीकृतम् । तद्यथा—'छित्त्वा तु यज्ञियं वृक्षं यूपवन्मन्त्रपूर्वकम् । प्रण
पालेभ्यस्तुला कार्या मनीषिभिः ॥ मन्त्रः सौम्यो वानस्पत्यश्छेदने जप
चतुरस्रा तुला कार्या दृढा ऋज्वी तथैव च । कटकानि च देयानि त्रि
चार्थवत् । चतुर्हस्ता तुला कार्या पादौ चोपरि तत्समौ ॥ अन्तरं[2] तु
भवेदध्यर्धमेव वा । हस्तद्वयं निखेयं तु पादयोरुभयोरपि । तोरणे च
पार्श्वयोरुभयोरपि । धटादुच्चतरे स्यातां नित्यं दशभिरङ्गुलैः ॥ अवल
कर्तव्यौ तोरणाभ्यामधोमुखौ । मृन्मयौ सूत्रसंबद्धौ धटमस्तकचुम्बिनौ ॥
निश्चलः कार्यः शुचौ देशे धटस्तथा । शिक्यद्वयं समासज्य पार्श्वयोरुभ
प्राङ्मुखान्कल्पयेद्दर्भाञ्शिक्ययोरुभयोरपि । पश्चिमे तोलयेत्कर्तॄनन्यस्मि
शुभाम् ॥ पिटकं[2] पूरयेत्तस्मिन्निष्टकाग्रावपांसुभिः । अत्र च मृत्तिकेष्टकाग्रा
विकल्पः । 'परीक्षका नियोक्तव्यास्तुलामानविशारदाः ॥ वणिजो हे[3]
कांस्यकारास्तथैव च । कार्यः परीक्षकैर्नित्यमवलम्बसमो धटः ॥ उदकं
तव्यं धटस्योपरि पण्डितैः । यस्मिन्न प्लवते तोयं स विज्ञेयः समो धटः ॥
यित्वा नरं पूर्वं पश्चात्तमवतार्य तु । धटं तु कारयेन्नित्यं पताकाध्वजशो
तत आवाहयेद्देवान्विधिनानेन मन्त्रवित् । वादित्रतूर्यघोषैश्च गन्धमाल्यादु
प्राङ्मुखः प्राञ्जलिर्भूत्वा[4] प्राड्विवाकस्ततो वदेत् । एह्येहि भगवन्धर्म अ
समाविश ॥ सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः । आवाह्य तु घटे ध
दङ्गानि विन्यसेत् ॥ इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा । वरुणं
भागे कुबेरं चोत्तरे तथा ॥ अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ।
पीतो यमः श्यामो वरुणः स्फटिकप्रभः ॥ कुबेरस्तु सुवर्णाभो वह्निश्चा
र्णभः । तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ॥ ईशानस्तु भवे
ध्यायेत्क्रमादिमान् । इन्द्रस्य दक्षिणे पार्श्वे वसूनाराधयेद्बुधः ॥ धरो[5]
सोम आपश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकी
देवेशेशानयोर्मध्य आदित्यानां[6] तथा गणम् । धाताऽर्यमा च मित्रश्च वरु[7]
गस्तथा ॥ इन्द्रो विवस्वान्पूषा च पर्जन्यो दशमः स्मृतः । ततस्त्व
विष्णुरजघन्यो जघन्यजः ॥ इत्येते द्वादशादित्या नामभिः परिकीर्तिताः ।
पश्चिमभागे तु रुद्राणामयनं विदुः ॥ वीरभद्रश्च शम्भुश्च गिरिशश्च महा

**टिप्प०**—1 लिङ्गमूर्ध्वगमनादिकम्. 2 पिटकं वंशभाण्डविशेषः.

**पाठा०**—१ मन्त्राः स्मृत्यन्तरोक्ताः ग-घ. २ प्रान्तरं ख. ३ हेम
कांस्यकारः घ. ४ प्राञ्जलिः प्राङ्मुखो भूत्वा घ. ५ ध्रुवोऽध्वरस्तथा सो
धरो ध्रुवश्च सोमश्च घ. ६ आदित्यानां तथायनं ग. आदित्याराधनं त
७ वरुणोंऽशो भग ग-घ. ८ अग्नेः पश्चिमदिग्भागे रुद्राणां स्थापनं वि

[अजै]कपादहिर्बुध्न्यः पिनाकी चापराजितः ॥ भुवनाधीश्वरश्चैव कपाली च विशां-[पतिः] । स्थाणुर्भवश्च भगवान् रुद्रास्त्वेकादश स्मृताः ॥ प्रेतेशरक्षोमध्ये तु मातृ-[स्था]नं प्रकल्पयेत् । ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ वाराही चैव [मा]हेन्द्री चामुण्डा गणसंयुता । निर्ऋतेरुत्तरे भागे गणेशायतनं विदुः ॥ वरुण-[स्यो]त्तरे भागे मरुतां स्थानमुच्यते । पवनः स्पर्शनो वायुरनिलो मारुतस्तथा ॥ [प्रा]णः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः । घटस्योत्तरभागे तु दुर्गामावाहये-[त्ततः] ॥ एतासां देवतानां तु स्वनाम्ना पूजनं विदुः । भूषावसानं धर्माय दत्त्वा [अर्]घ्यादिकं क्रमात् ॥ अर्घ्यादिपश्चादङ्गानां भूषान्तमुपकल्पयेत् । गन्धादिकां [नैवेद्य]ान्तां परिचर्यां प्रकल्पयेत् ॥' इति । अत्र च तुलां पताकाध्वजालंकृतां [...]य तस्यं 'एह्येही'ति मन्त्रेण धर्ममावाह्य 'धर्मायार्घ्यं कल्पयामि नमः' इत्यादिना [...]गेणार्घ्यपाद्याचमनीयमधुपर्काचमनीयस्नानवस्त्रयज्ञोपवीताचमनीयमुकुटकटका-[दि]भूषान्तं दत्त्वा इन्द्रादीनां दुर्गान्तानां प्रणवाद्यैः स्वनामभिश्चतुर्थ्यन्तैर्नमोन्तैर-[र्घ्या]दिभूषान्तं पदार्थानुसमयेन दत्त्वा धर्माय गन्धपुष्पधूपदीपनैवेद्यादि दत्त्वा [इ]न्द्रादीनां गन्धादीनि पूर्ववद्दद्यात् । गन्धपुष्पाणि च घटपूजायां रक्तानि [...]र्याणि । यथाह नारदः—'रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः । अर्च-[ये]द्धटं पूर्वं ततः शिष्टांस्तु पूजयेत् ॥' इति । इन्द्रादीनां तु विशेषानभिधाना-[द]लाभे रक्तैरन्यैर्वा पूजनमिति पूजाक्रमः ॥ एतच्च सर्वं प्राड्विवाकः कुर्यात् । [यथो]क्तम्—'प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः । श्रुतवृत्तोपसंपन्नः शान्त-[चि]त्तो विमत्सरः ॥ सत्यसंधः शुचिर्दक्षः सर्वप्राणिहिते रतः । उपोषितः शुद्ध-[वासाः] कृतदन्तानुधावनः ॥ सर्वासां देवतानां च पूजां कुर्याद्यथाविधि ॥' तथा । [...]विभिश्चतुर्भिश्चतसृषु दिक्षु लौकिकाग्नौ होमः कार्यः । यथाह—'चतुर्दिक्षु [...]ा होमः कर्तव्यो वेदपारगैः । आज्येन हविषा चैव समिद्भिर्होमसाधनैः ॥ [सा]वित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत् ॥' प्रणवादिकां गायत्रीमुच्चार्य पुनः [स्व]ाहाकारान्तं प्रणवमुच्चार्य समिदाज्यचरूनप्रत्येकमष्टोत्तरशतं जुहुयादित्यर्थः । [...] हवनान्तां देवपूजां विधायानन्तरमभियुक्तमर्थं वक्ष्यमाणमन्त्रसहितं पत्रे [लि]खित्वा तत्पत्रं शोध्य शिरोगतं कुर्यात् । यथाह—'यैदर्थमभियुक्तः स्याल्लि-[खि]त्वा तं तु पत्रके । मन्त्रेणानेन सहितं तत्कार्यं तु शिरोगतम् ॥' मन्त्रश्चायम्—[आ]दित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च [संध्]ये धर्मश्च जानाति नरस्य वृत्तम् ॥' इति । एतच्च धर्मावाहनादि शिरसि पत्रा-[रोप]णान्तमनुष्ठानकाण्डं सर्वदिव्यसाधारणम् । यथोक्तम्—'इमं मन्त्रविधिं कृत्स्नं [सर्व]दिव्येषु योजयेत् । आवाहनं च देवानां तथैव परिकल्पयेत् ॥' इति । अन-[न्तर]ं प्राड्विवाको घटमामन्त्रयेत्; 'घटमामन्त्रयेच्चैव विधिनानेन शास्त्रवित्' इति [स्मर]णात् । मन्त्राश्च दर्शिताः—'त्वं घट ! ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् । [धका]राद्धर्ममूर्तिस्त्वं टकारात्कुटिलं नरम् ॥ धृतो भावयसे यस्माद्धटस्तेनाभिधीयते ।

पाठा०—१ निवेद्यान्तां परिचर्यां ग-घ. २ यं चार्थमभियुक्तः स्यात् घ.

त्वं वेत्सि सर्वजन्तूनां पापानि सुकृतानि च ॥ त्वमेव देव ! जानीषे न वि मानवाः । व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ॥ तदेनं संशयादस्मा त्त्रातुमर्हसि ॥' इति । शोध्यस्तु 'त्वं तुले' इत्यादिना पूर्वोक्तेन मन्त्रेण तुलाम अनन्तरं प्राड्विवाकः शिरोगतपत्रकं शोध्य यथास्थानं निवेश्य च घटमा 'पुनरारोपयेत्तस्मिञ्छिरोवस्थितपत्रकम्' इति स्मरणात् । आरोपितं च नि यावत्तथैवावस्थापयेत् । तत्कालपरीक्षां च ज्योतिःशास्त्राभिज्ञः कुर्यात्; र्विद्ब्राह्मणः श्रेष्ठः कुर्यात्कालपरीक्षणम् । विनाड्यः पञ्च विज्ञेयाः परीक्ष विदैः ॥' इति स्मरणात् । दशगुर्वक्षरोच्चारणकालः प्राणः । षट्प्राणा उक्तं च—'दशगुरुवर्णः प्राणः षट् प्राणाः स्याद्विनाडिका तासाम् । घटीनां षष्ट्याहःखाग्निभिर्दिनैर्मासः ॥' इति । तस्मिंश्च काले शुद्ध्यशुद्धि शुचयः पुरुषा राज्ञा नियोक्तव्याः । ते च शुद्ध्यशुद्धी कथयन्ति । यथो महेन—'साक्षिणो ब्राह्मणाः श्रेष्ठा यथादृष्टार्थवादिनः । ज्ञानिनः शुच नियोक्तव्या नृपेण तु ॥ शंसन्ति साक्षिणः श्रेष्ठाः शुद्ध्यशुद्धी नृपे तदा ॥ शुद्ध्यशुद्धिनिर्णयकारणं चोक्तम् ( नारदः १।२८३ )—'तुलितो यदि शुद्धः स्यान्न संशयः । समो वा हीयमानो वा न स शुद्धो भवेन्नरः ॥' इ पितामहवचनम्—'अल्पदोषः समो ज्ञेयो बहुदोषस्तु हीयते' इति, तत्र भियुक्तस्यार्थस्याल्पत्वं बहुत्वं च न दिव्येनावधारयितुं शक्यते तथापि पूर्वत्वेनाल्पत्वमसकृन्मतिपूर्वत्वेन च महत्त्वमिति दण्डप्रायश्चित्ताल्पत्वमह धार्यते । यदा चानुपलक्ष्यमाणदृष्टकारण एव कक्षादीनां छेदो भङ्गो वा तदाप्यशुद्धिरेव—( नारदः १।२८४ ) 'कक्षच्छेदे तुलाभङ्गे घटकर्कट रज्जुच्छेदेऽक्षभङ्गे च तथैवाशुद्धिमादिशेत् ॥' इति स्मरणात् । कक्षं शिक्य कर्कटौ तुलान्तयोः शिक्याधारावीषद्वक्रावायसकीलकौ कर्कटशृङ्गसंनिभौ पादस्तम्भयोरुपरि निविष्टस्तुलाधारपट्टः । यदा तु दृश्यमानकारणक ए स्तदा पुनरारोपयेत्; 'शिक्यादिच्छेदभङ्गेषु पुनरारोपयेन्नरम्' इति स्म ततश्च—'ऋत्विक्पुरोहिताचार्यान्दक्षिणाभिश्च तोषयेत् । एवं कारयि भुक्त्वा भोगान्मनोरमान् ॥ महतीं कीर्तिमाप्नोति ब्रह्मभूयाय कल्पते ॥ तूक्तलक्षणं घटं तथैव स्थापयितुमिच्छति तदा वाय्वाद्युपघातनिरासार्थं सहितां शालां कुर्यात्; 'विशालामुन्नतां शुभ्रां घटशालां तु कारयेत् । नोपहन्येत श्वभिश्चण्डालवायसैः ॥ तत्रैव लोकपालादीन्सर्वान्दिक्षु नि त्रिसन्ध्यं पूजयेदेतान्गन्धमाल्यानुलेपनैः ॥ कपाटबीजसंयुक्तां परिचारकर मृत्पानीयाग्निसंयुक्तामशून्यां कारयेन्नृपः ॥' इति स्मरणात् । बीजानि दीनि ॥ १००–१०२ ॥

इति घटविधिः ॥

---

पाठा०—१ सर्वभूतानां घ. २ त्वमेव सर्वं घ. ३ यथानिवेश ४ षष्ट्याहोरात्र उक्तश्च ख. ५ शोध्यशुद्धि ग. ६ सर्वे घ. ७ न वि ८ छेदे च भङ्गे च घ. ९ भङ्गे तु घ. १० मुच्छ्रितां घ.

इदानीं क्रमप्राप्तमग्निदिव्यमाह—

**करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत् ।**
**सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् ॥ १०३ ॥**

दिव्यमातृकोक्तसाधारणधर्मेषु सत्सु तुलाविधानोक्तधर्मावाहनादिशिरःपत्रार्पणान्ते च विध्यन्ते सत्ययमग्निविधौ विशेषः । **विमृदितव्रीहेः** विमृदिता चर्विता व्रीहयः कराभ्यां येनासौ विमृदितव्रीहिस्तस्य **करौ लक्षयित्वा** तिलकव्रणकिणादिस्थानेष्वलक्तकरसादिनाऽङ्कयित्वा । यथाह नारदः (१।३०१)—'लक्षतेषु सर्वेषु कुर्याद्धंसपदानि तु' इति । **अनन्तरं सप्ताश्वत्थस्य पर्णानि** तयोरञ्जलीकृतयोर्न्यसेत्—'पत्रैरञ्जलिमापूर्य आश्वत्थैः सप्तभिः समैः' इति स्मरणात् । तानि च हस्तसहितानि **सूत्रेण तावद्वेष्टयेत्** । यावन्त्यश्वत्थपर्णानि तावत्कृत्वो वेष्टयेदित्यर्थः । सूत्राणि च सप्त शुक्लानि भवन्ति—'वेष्टयीत सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिः' इति नारदवचनात् । तथा सप्त शमीपत्राणि सप्तैव दूर्वापत्राणि चाक्षतांश्च दध्यक्तानक्षतांश्चाश्वत्थपत्राणामुपरि विन्यसेत्; 'सप्त पिप्पलपत्राणि शमीपत्राण्यथाक्षतान् । दूर्वायाः सप्त पत्राणि दध्यक्तांश्चाक्षतान्न्यसेत् ॥' इति स्मरणात् । तथा कुसुमानि च विन्यसेत्; 'सप्त पिप्पलपत्राणि अक्षतासुमनो दधि । हस्तयोर्निक्षिपेत्तत्र सूत्रेणावेष्टनं तथा ॥' इति पितामहवचनात् । सुमनसः पुष्पाणि । यदपि स्मरणम्—'अयस्तप्तं तु पाणिभ्यामर्कपत्रैस्तु सप्तभिः । अन्तर्हितं हरन् शुद्धस्त्वदग्धः सप्तमे पदे ॥' इति, तदप्यश्वत्थपत्राभावेऽर्कपत्रविषयं द्रष्टव्यम्; अश्वत्थपत्राणां पितामहप्रशंसावचनेन मुख्यत्वावगमात्—'पिप्पलाज्जायते वह्निः पिप्पलो वृक्षराट् स्मृतः । अतस्तस्य तु पत्राणि हस्तयोर्विन्यसेद्बुधः ॥' इति ॥ १०३ ॥

कर्तुरग्न्यभिमन्त्रणमाह—

**त्वमग्ने! सर्वभूतानामन्तश्चरसि पावक! ।**
**साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे! मम ॥ १०४ ॥**

हे **अग्ने! त्वं सर्वभूतानां** जरायुजाण्डजस्वेदजोद्भिज्जानाम**न्तः** शरीराभ्यन्तरे **चरसि** उपयुक्तान्नपानादीनां पाचकत्वेन वर्तसे । **पावक** शुद्धिहेतो! **कवे** क्रान्तदर्शिन्! **साक्षिवत् पुण्यपापेभ्यः सत्यं ब्रूहि**। 'पुण्यपापेभ्यः' इति ल्यब्लोपे पञ्चमी । पुण्यपापान्यवेक्ष्य सत्यं ब्रूहि दर्शयेत्यर्थः । अयःपिण्डे त्रिभिरग्निभिः संतप्ते संदंशेन पुरत आनीते कर्ता पश्चिममण्डले प्राङ्मुखस्तिष्ठन् अनेन मन्त्रेणाग्निं अभिमन्त्रयेत् । यथाह नारदः (१।२८८-८९)—'अग्निवर्णमयःपिण्डं

---

पाठा०—१ अग्निविधिं ग. अग्निविधानं घ. २ तव्रीही लक्ष A. ३ सप्ताश्वत्थपत्राणि A. ४ तावत्सूत्राणि वेष्टयेत् ख. ५ पत्राणि घ. ६ स्वहस्तसहितानि घ. ७ अन्तर्हितं रहः शुद्धमदग्धः ख. अन्तर्हितैर्हरन् ग.

सस्फुलिङ्गं सुरञ्जितम् । तापे तृतीये संताप्य ब्रूयात्सत्यपुरस्कृतम् ॥' अस्यार्थः–लोहशुद्ध्यर्थं सुतप्तं लोहपिण्डमुदके निक्षिप्य पुनः संताप्योदके तृतीये तापे संताप्य संदंशेन गृहीत्वा पुरत आनीते सत्यपुरस्कृतं 'त्वमग्ने सर्वभूतानाम्'इत्यादिमन्त्रं कर्ता ब्रूयादिति ॥ प्राड्विवाकस्तु मण्डल दक्षिणप्रदेशे लौकिकमग्निमुपसमाधाय 'अग्नये पावकाय स्वाहा' इत्या शतवारं जुहुयात्; 'शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतम्' इति स्मरण च तस्मिन्नग्नावयःपिण्डं प्रक्षिप्य तस्मिंस्ताप्यमाने धर्मावाहनादिहवनान विधिं विधाय तृतीये तापे वर्तमाने अयःपिण्डस्थमग्निमेभिर्मन्त्रैरभिमन्त्रयेत्- वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे । त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादि जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम् । पापं पुनासि वै यस्मात्तस्मा उच्यसे । पापेषु दर्शयात्मानमर्चिष्मान्भव पावक ! । अथवा शुद्धभावेषु हुताशन ! ॥ त्वमग्ने ! सर्वदेवानामन्तश्चरसि साक्षिवत् । त्वमेव देव ! विदुर्यानि मानुषाः ॥ व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति । त याद्स्माद्धर्मतस्त्रातुमर्हसि ॥' इति ॥ १०४ ॥

**तस्येत्युक्तवतो लौहं पञ्चाशत्पलिकं समम् ।**
**अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि ॥ १०५ ॥**

अपि च, **तस्य** कर्तुरित्युक्तवतः 'त्वमग्ने सर्वभूतानामि'त्यादिभि मन्त्रणं कृतवतो **लौहं** लोहविकारं **पिण्डं पञ्चाशत्पलिकं** पञ्चाशत् **समम**स्त्ररहितम् । सर्वतश्च समं वृत्तं श्लक्ष्णं तथाऽष्टाङ्गुलायामम्; 'अ कृत्वा अष्टाङ्गुलमयोमयम् । पिण्डं तु तापयेदग्नौ पञ्चाशत्पलिकं समम् ।' पितामहस्मरणात् । **अग्निवर्ण**मग्निसदृशमु**भयोर्हस्तयोर**श्वत्थपत्रदि न्तरितयो**र्न्यसे**न्निक्षिपेत्प्राड्विवाकः ॥ १०५ ॥

ततः किं कुर्यादित्यत आह—

**स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत् ।**

स पुरुषस्तं तप्तलोहपिण्डं अञ्जलिना **गृहीत्वा सप्त मण्डलानि व्रजेत्** । एवकारेण मण्डलेष्वेव पदन्यासं मण्डलानतिक्रमणं च दर्शयति। पितामहः—'न मण्डलमतिक्रामेन्नाप्यर्वाक्स्थापयेत्पदम्' इति ॥—

सप्तैव मण्डलानि शनैर्व्रजेदित्युक्तं, तत्रैकैकं मण्डलं किंप्रमाणकं मण्डल च कियत्प्रमाणकमित्यत आह—

**षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम् ॥ १०६ ॥**

षोडश अङ्गुलानि यस्य तत् **षोडशाङ्गुलकम्** । षोडशाङ्गुलप्रमाणं म **बोद्धव्यम्** । मण्डलयोरन्तरं मध्यं **च तावदेव** षोडशाङ्गुलकमेव ।

पाठा०—१ मानवाः २ न्यसेत्क्षिप्रं V. ३ शाङ्गुलिकं A.

ण्डलानि व्रजेदिति वदता प्रथममवस्थानमण्डलमेकमुक्तम् । अतश्चाष्टमण्डलानि
डशाङ्गुलकानि मण्डलानामन्तराणि मध्यानीत्यर्थः । मण्डलान्तराणि तु सप्त
त्प्रमाणानि ॥ एतदेव नारदेन परिसंख्यायोक्तम्[1] (१।२७५,७६)—
त्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम् । अष्टभिर्मण्डलैरेवमङ्गुलानां शतद्व-
म् । चत्वारिंशत्समधिकं भूमेरङ्गुलमानतः ॥' इति । अयमर्थः—अवस्थानम-
लात्षोडशाङ्गुलान्मण्डलान्तरमन्यन्मण्डलम् । द्वितीयाद्येकमेकं द्वात्रिंशदङ्गुलं
न्तरालं, तदेवमवस्थानमण्डलं षोडशाङ्गुलम् । गन्तव्यानि च सप्त मण्डलानि
न्तरालानि द्वात्रिंशदङ्गुलानि । एवमष्टाभिर्मण्डलैश्चत्वारिंदशधिकं शतद्वयं
रङ्गुलमानतोऽङ्गुलमानमिति सार्वविभक्तिकस्तसिः । अस्मिंस्तु पक्षेऽवस्थानम-
लं षोडशाङ्गुलं विधाय द्वात्रिंशदङ्गुलप्रमाणानां[2] सप्तानां सान्तरालमण्डलभूभा-
नामेकमेकं भूभागं द्विधा विभज्यान्तरालभूभागान्षोडशाङ्गुलप्रमाणान्विहाय
ण्डलभूभागेषु द्विषोडशाङ्गुलप्रमाणेषु गन्तृपदप्रमाणानि सप्त मण्डलानि कार्याणि ।
। तेनैवोक्तम् (नारदः १।२९९)—'मण्डलस्य प्रमाणं तु कुर्यात्तत्पदसंमितम्'
ति । यत्तु पितामहेनोक्तम्—'[1]कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमं तथा । आग्नेयं
ण्डलं चाद्यं द्वितीयं वारुणं स्मृतम् ॥ तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम् ।
मं त्विन्द्रदैवत्यं षष्ठं कौबेरमुच्यते ॥ सप्तमं सोमदैवत्यं सावित्रं त्वष्टमं तथा ।
मं सर्वदैवत्यमिति दिव्यविदो विदुः ॥ द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्त-
म् । अष्टाभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ॥ षट्पञ्चाशत्समधिकं भूमेस्तु परि-
ल्पना । कर्तुः पदसमं कार्यं मण्डलं तु प्रमाणतः ॥ मण्डले मण्डले देयाः कुशाः
प्रचोदिताः ॥' इति ।—तत्र[3] नवमं सर्वदैवत्यमपरिमिताङ्गुलप्रमाणं मण्डलं
हायाष्टाभिर्मण्डलैरष्टाभिश्चान्तरालैः प्रत्येकं षोडशाङ्गुलप्रमाणैरङ्गुलानां षट्पञ्चा-
दधिकं शतद्वयं संपद्यते । तत्रापि गन्तव्यानि सप्तैव मण्डलानि । यतः प्रथमे
वेष्टवि नवमे क्षिपतीति न विरुद्ध्यते । अङ्गुलप्रमाणं च—'तिर्यग्यवोदराण्यष्टा-
र्ध्वा वा व्रीहयस्त्रयः । प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला[4] ॥ हस्तो वितस्ति-
द्वितयं दण्डो हस्तचतुष्टयम् । तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् ॥' इति
द्धव्यम् ॥ १०६ ॥

सप्त मण्डलानि गत्वा किं कर्तव्यमित्यत आह—

**मुक्त्वाग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात् ।**

अष्टमे मण्डले स्थित्वा नवमे मण्डलेऽग्नितप्तमयःपिण्डं त्यक्त्वा व्रीहीन्

---

टिप्प०—1 मदनरत्ने तु—'अष्टमं सर्वदैवतम् । पुरस्तान्नवमं यत्तु तन्महत्पा-
विदुः ॥ मृद्गोमयेन तु कृतान्यद्भिः पर्युक्षितानि वा' इति पाठः ।

---

पाठा०—१ परिसंख्यययोक्तम् ख. ग. २ द्वादशाङ्गुलप्रमाणानां घ.
३ तन्नवमं ख. ग. ४ द्वादशाङ्गुलः ख.

कराभ्यां मर्दयित्वाऽदग्धहस्तश्चेच्छुद्धिमाप्नुयात् । दग्धश्चे
इत्यर्थसिद्धम् । यस्तु संत्रासात्प्रस्खलन्हस्ताभ्यामन्यत्र दह्यते तथापि
भवति । यथाह कात्यायनः—'प्रस्खलन्नभिशस्तश्चेत्स्थानादन्यत्र दह्यते ।
तं विदुर्देवास्तस्य भूयोऽपि दापयेत् ॥' इति ॥—

**अन्तरा पतिते पिण्डे संदेहे वा पुनर्हरेत् ॥ १०७**

यदा गच्छतोऽन्तराष्टममण्डलादर्वागेव **पिण्डः पतति** दग्धा
**संशयस्तदा पुनर्हरेत्** इत्यर्थप्राप्तमुक्तम् । तत्र चायमनुष्ठानक्रमः—पूर्वे
विधायापरेद्युर्मण्डलानि यथाशास्त्रं निर्माय मण्डलाधिदेवताश्च मन्त्रैस्तत्
संपूज्याग्निमुपसमाधाय शान्तिहोमं निर्वर्त्याग्नावयःपिण्डं निधाय धर्मावाह
देवतापूजां हवनान्तां निर्वर्त्य उपोषितस्य स्नातस्यार्द्रवाससः पश्चिमे[3] मण्डले
व्रीहिमर्दनादिकरसंस्कारं विधाय प्रतिज्ञापत्रं समन्त्रकं कर्तुः शिरसि बद्
वाकस्तृतीये तापेऽग्निमभिमन्त्र्य तप्तमयःपिण्डं संदंशेन[4] गृहीत्वा कर्त्
तस्याञ्जलौ निदध्यात् । सोऽपि मण्डलानि सप्त गत्वा नवमे मण्डले प्रक्षिप्
शुद्धो भवतीति ॥ १०७ ॥

इत्यग्निविधिः ॥

संप्रत्युदकविधिमाह—

**सत्येन माऽभिरक्ष त्वं वरुणेत्यभिशाप्य कम् ।**
**नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत् ॥ १०**

हे **वरुण ! 'सत्येन मामभिरक्ष त्वम्' इत्यनेन** मन्त्रेण कम
**भिशाप्याभि**मन्त्र्य **नाभिदघ्नोदकस्थस्य**[1] नाभिप्रमाणोदकस्थितस्य पुरु
**गृहीत्वा** शोध्यो **जलं प्रविशेत्** जले निमज्जेत् । एतच्च वरुणपूजायां
'गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः । वरुणाय प्रकुर्वीत पूजामादौ
हितः ॥' इति नारदस्मरणात् । तथा साधारणधर्मेषु धर्मावाहनादिसक
जाहोमसमन्त्रकप्रतिज्ञापत्रशिरोनिवेशनान्तेषु सत्सु च । तथा[2]—'तोय ! त्वं
प्राणः सृष्टेराद्यं तु निर्मितम् । शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां
अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे ॥' इति प्राड्विवाकेनोदकाभिमन्त्र
शोध्यः 'सत्येन[3] माऽभिरक्ष त्वं वरुण !' इति[7] जलं प्रार्थयेत् । उदकस्था

**टिप्प०**—1 यच्चोक्तं **नारदेन**—'ब्राह्मणः क्षत्रियो वैश्यो रागद्वेषविव
नाभिमात्रे जले स्थाप्यः पुरुषः स्थाणुवद् बली' इत्युक्तम् । 2 'ततस्त्वावाह
सलिलं चानुमन्त्रयेत्' इति **पितामहः** । 3 'सत्येनाभिरक्षस्व वरुण !' इति वि

**पाठा०**—१ कराभ्यां व्रीहीन् ख. २ भूतशुद्धिं ख. ३ पश्चिमम
ख-ग. ४ संदंशकेन घ. ५ अभिशय्य ग. अभिशाय्य घ. ६ देवपूजा
७ इत्युक्तं प्रार्थयते ख. ग.

रदेनोक्तानि (१।३०५)—'नदीषु तनुवेगासु सागरेषु वहेषु च। ह्रदेषु देव-खातेषु तडागेषु सरःसु च' इति। तथा पितामहेनापि—'स्थिरतोये निमज्जेत ग्राहिणि न चाल्पके। तृणशैवालरहिते जलौकामत्स्यवर्जिते ॥ देवखातेषु तोयं तस्मिन्कुर्याद्विशोधनम्। आहार्यं वर्जयेन्नित्यं शीघ्रगासु नदीषु च ॥ प्राविशेत्सलिले नित्यमूर्मिपङ्कविवर्जिते ॥' इति। आहार्यं तडागादिभ्य आहृतं पात्रकटाहादिक्षिप्तं जलम्। नाभिप्रमाणोदकस्थश्च यज्ञियवृक्षोद्भवां धर्मस्थूणामवष्टभ्य प्राङ्मुखस्तिष्ठेत्; 'उदके प्राङ्मुखस्तिष्ठेद्धर्मस्थूणां प्रगृह्य च।' इति स्मरणात् ॥ १०८ ॥

ततः किं कर्तव्यमित्यत आह—

**समकालमिषुं मुक्तमानीयान्यो जवी नरः।**
**गते तस्मिन्निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयात् ॥ १०९ ॥**

निमज्जनसमकालं गते तस्मिन् जविन्येकस्मिन्पुरुषे अन्यो जवी शर-पातस्थानस्थितः पूर्वमुक्तमिषुमानीय जले निमग्नाङ्गं यदि पश्यति तदा स शुद्धो भवति। एतदुक्तं भवति—त्रिषु शरेषु मुक्तेष्वेको वेगवान्मध्यमशरपात-स्थानं गत्वा तमादाय तत्रैव तिष्ठति। अन्यस्तु पुरुषो वेगवान् शरमोक्षस्थाने तोरणमूले तिष्ठति। एवं स्थितयोस्तृतीयस्यां करतालिकायां शोध्यो निमज्जति। तत्समकालमेव तोरणमूलस्थितोऽपि द्रुततरं मध्यशरपातस्थानं गच्छति। शर-ग्राही च तस्मिन्प्राप्ते द्रुततरं तोरणमूलं प्राप्यान्तर्जलगतं यदि न पश्यति तदा शुद्धो भवतीति। एतदेव स्पष्टीकृतं पितामहेन—'गन्तुश्चापि च कर्तुश्च समं निमज्जनम्। गच्छेत्तोरणमूलात्तु लक्ष्यस्थानं जवी नरः ॥ तस्मिन्गते द्वितीयोऽपि वेगादादाय सायकम्। गच्छेत्तोरणमूलं तु यतः स पुरुषो गतः ॥ आगतस्तु शरग्राही न पश्यति यदा जले। अन्तर्जलगतं सम्यक्तदा शुद्धं विनिर्दिशेत् ॥' इति। जविनोश्च पुरुषयोर्निर्धारणं कृतं नारदेन—'पञ्चाशतो धावकानां यौ स्यातामधिकौ जवे। तौ च तत्र नियोक्तव्यौ शरानयनकारणात् ॥' इति। तोरणं च निमज्जनसमीपस्थाने समे शोध्यकर्णप्रमाणोच्छ्रितं कार्यम्; 'गत्वा तु तज्जलस्थानं तटे तोरणमुच्छ्रितम्। कुर्वीत कर्णमात्रं तु भूमिभागे समे शुचौ ॥' इति नारदस्मरणात्। शरत्रयं वैणवं च धनुर्मङ्गलद्रव्यैः श्वेतपुष्पादिभिः प्रथमं संपूजयेत्; 'शरान्संपूजयेत्पूर्वं वैणवं च धनुस्तथा। मङ्ग-

टिप्प०—1 'सूर्मी स्थूणोऽयःप्रतिमा' इत्यमरः। 2 अवष्टम्भः धारणात्मकसंयोगविशेषः। 3 'अप्सु प्रवेश्य पुरुषं प्रक्षिपेत्सायकत्रयम्' इति बृहस्पतिस्मरणात्। 4 मूर्खोऽपि निमज्जनात् इत्याशयः, अत एवोक्तं 'न पश्यती'ति। ततश्च न मूलविरोधः।

पाठा०—१ निमज्जेत्तु ख. २ जलूका घ. ३ °मानयेद्यो ज,° A. ४ गतेऽन्यस्मिन् V. ५ तदा शुद्धो ग-घ. ६ स्थितयोस्तयोस्तृतीय ख. ७ मध्यमशर ग. ८ तदा शुद्धं व्रजतीति ख.

लैर्धूपपुष्पैश्च ततः कर्म समाचरेत् ॥' इति पितामहवचनात् । धनु
लक्ष्यस्थानं च नारदेनोक्तम्—'क्रूरं धनुः सप्तशतं मध्यमं षट्शतं
मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिः ॥ मध्यमेन तु चापेन प्रक्षिपे
त्त्रयम् । हस्तानां तु शते सार्धे लक्ष्यं कृत्वा विचक्षणः ॥ न्यूनाधिके
स्यात्क्षिपतः सायकांस्तथा ॥' इति । अङ्गुलानां सप्ताधिकं शतं सप्तशतं क्रू
एवं षट्शतं पञ्चशतं च । एवं चैकादशाङ्गुलाधिकं हस्तचतुष्टयं क्रूरस्य
प्रमाणम्, मध्यमस्य दशाङ्गुलाधिकम्, मन्दस्य नवाङ्गुलाधिकमित्युक्तं
शराश्चानायसाग्रा वैणवाः कार्याः; 'शरांश्चानाय साग्रांस्तु प्रकुर्वीत वि
वेणुकाण्डमयांश्चैव क्षेप्ता तु सुदृढं क्षिपेत् ॥' इति स्मरणात् । क्षेप्ता क्षत्रि
त्तिर्वा ब्राह्मणः सोपवासो नियोक्तव्यः । यथाह—'क्षेप्ता च क्षत्रियः
द्वृत्तिर्ब्राह्मणोऽपि वा । अक्रूरहृदयः शान्तः सोपवासस्ततः क्षिपेत् ॥'
त्रिषु मुक्तेषु मध्यमः शरो ग्राह्यः; तेषां च प्रोषितानां च शराणां
नात् । मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसा ॥' इति वचनात् ।
पतनस्थानादानेतव्यः; न सर्पणस्थानात्, 'शरस्य पतनं ग्राह्यं सर्पणं तु
येत् । सर्पन्सर्पञ्शरो यायाद्दूराद्दूरतरं यतः ॥' इति वचनात् । वाते च
विषमादिदेशे च शरमोक्षो न कर्तव्यः; 'इषुं न प्रक्षिपेद्विद्वान्मारुते
वायति । विषमे भूप्रदेशे च वृक्षस्थानसमाकुले ॥ तृणगुल्मलतावल्लीपङ्क
संयुते ॥' इति पितामहवचनात् । निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयादिति
उन्मज्जिताङ्गस्याशुद्धिर्दर्शिता । स्थानान्तरगमने चाशुद्धिः पितामहे
'अन्यथा न विशुद्धिः स्यादेकाङ्गस्यापि दर्शनात् ॥' इति 'स्थानाद्वाऽन्यत्र
यस्मिन्पूर्वं निवेशितः ॥' इति । एकाङ्गस्यापि दर्शनादिति च क
प्रायेण । 'शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका । अप्सु प्रवेशे
शुद्धं तमपि निर्दिशेत् ॥' इति विशेषाभिधानात् । अयमत्र प्रयोगक्रमः—
लक्षणजलाशयसंनिधावुक्तलक्षणं तोरणं विधाय उक्तप्रमाणे देशे लक्ष्यं
तोरणसंनिधौ सशरं धनुः संपूज्य जलाशये वरुणमावाह्य पूजयित्वा
धर्मादींश्च देवान्हवनान्तमिष्ट्वा शोध्यस्य शिरसि प्रतिज्ञापत्रमाबध्य प्रा
जलमभिमन्त्रयते—'तोय ! त्वं प्राणिनां प्राणः' इत्यादिना मन्त्रेण । अथ शो
'सत्येन' इत्यादिना मन्त्रेण जलमभिमन्त्र्य गृहीतस्थूणस्य नाभिमात्रोदकावस्थि
बलीयसः पुरुषस्य समीपमुपसर्पति । अथ शरेषु त्रिषु मुक्तेषु मध्यमशरपात
मध्यमं शरं गृहीत्वा जविन्येकस्मिन्पुरुषे स्थिते अन्यस्मिंश्च तोरणमूले
प्राड्विवाकेन तालत्रये दत्ते युगपद्गमनमज्जनमथ शरानयनमिति ॥ १०९ ॥

इत्युदकविधिः ॥

पाठा०—१ प्रक्षिप्तानां च ग. २ च प्रवायति ग. ३ समीपे सशर

इदानीं विषविधानमाह—

त्वं विष! ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः।
त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम् ॥ ११० ॥
एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम्।
यस्य वेगैर्विना जीर्येच्छुद्धिं तस्य विनिर्दिशेत् ॥ १११ ॥

'त्वं विष' इत्यादिमन्त्रेण विषमभिमन्त्र्य कर्ता **विषं** हिमशैलजं शृङ्गभवं भक्षयेत्। तच्च भक्षितं सत् **यस्य** विषं **वेगैर्विना जीर्यति स शुद्धो** भवति। विषवेगो नाम धातोर्धात्वन्तरप्राप्तिः। 'धातोर्धात्वन्तरप्राप्तिर्विषवेग स्मृतः' इति वचनात्। धातवश्च त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणीति सप्त। च सप्तैव विषवेगा भवन्ति। तेषां च लक्षणानि पृथगेव विषतन्त्रे कथितानि— रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ तस्योर्ध्वस्तत्परौ द्वौ वपुषि वतो वर्णभेदप्रवेपौ। यो वेगः पञ्चमोऽसौ नयति विवशतां कण्ठभङ्गं च पष्ठो निःश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य ॥' इति। अत्र च दिवस पूजा कर्तव्या। यथाह नारदः—'दद्याद्विषं सोपवासो देवब्राह्मण- धौ। धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम् ॥' इति प्राड्विवाकः कृतोपवासो देवं पूजयित्वा तस्य पुरतो विषं व्यवस्थाप्य धर्मादिपूजां हवनान्तां विधाय ज्ञापत्रं शोध्यस्य शिरसि निधाय विषमभिमन्त्रयते—'त्वं विष! ब्रह्मणा सृष्टं र्थं दुरात्मनाम्। पापानां दर्शयात्मानं शुद्धानाममृतं भव ॥ मृत्युमूर्ते त्वं हि ब्रह्मणा परिनिर्मितम्। त्रायस्वैनं नरं पापात्सत्येनास्यामृतं भव ॥' च। एवमभिमन्त्र्य दक्षिणाभिमुखावस्थिताय दद्यात्; 'द्विजानां संनिधावेव क्षिणाभिमुखे स्थिते। उदङ्मुखः प्राङ्मुखो वा विषं दद्यात्समाहितः ॥' इति रदवचनात्। विषं च वत्सनाभादि ग्राह्यम्; 'शृङ्गिणो वत्सनाभस्य हिमजस्य स्य वा ॥' इति पितामहवचनात्। वर्ज्यानि च तेनैवोक्तानि—'चारितानि र्णानि कृत्रिमाणि तथैव च। भूमिजानि च सर्वाणि विषाणि परिवर्जयेत् ॥' । तथा नारदेनापि (१।३२१) —'भ्रष्टं च चारितं चैव धूपितं मिश्रितं । कालकूटमलावुं च विषं यत्नेन वर्जयेत् ॥' इति। कालश्च नारदेनोक्तः ३१९)—'तोलयित्वेप्सितं काले देयं तद्धि हिमागमे। नापराह्णे न मध्याह्ने संध्यायां तु धर्मवित् ॥' इति। कालान्तरे तूक्तप्रमाणादल्पं देयम्; 'वर्षे यवा मात्रा ग्रीष्मे पञ्चयवा स्मृता। हेमन्ते सा सप्तयवा शरद्यल्पा ततोऽपि ॥' इति स्मरणात्। अल्पेति षड्यवेत्यर्थः। 'हेमन्त' ग्रहणेन शिशिरस्यापि

टिप्प०—1 अतिचञ्चलतामिति भावः.

पाठा०—१ सत्ये धर्मे, A.; सत्यधर्मेऽव्यवस्थितः V. २ व्यवस्थितम् B. जीर्णे तस्य शुद्धिं विनिर्दिशेत् A.; V. ४ नयनविवशतां. ५ पूजा कार्या. ख. यत्नेनोक्तानि ख. ७ यत्नेन परि ग.

ग्रहणम् । 'हेमन्तशिशिरयोः समासेन' इति श्रुतेः । वसन्तस्य च सर्वे... रणत्वात्तत्रापि सप्त यवा विषं च घृतप्लुतं देयं; नारदवचनात् । 'वि... षड्भागाद्भागो विंशतिमस्तु यः । तमष्टभागहीनं तु शोध्ये दद्या... ( नारदः १।३२३ ) इति । पलं चात्र चतुःसुवर्णकम् । तस्य षष्ठो... माषाः दश यवाश्च भवन्ति । 'त्रियवं त्वेककृष्णलम् । पञ्चकृष्ण... इत्येको माषः पञ्चदश यवा भवन्ति । एवं दशानां माषाणां यवाः... भवन्ति । पूर्वे च दश यवा इति षष्ट्यधिकं शतं यवाः पलस्य षष्ठो... द्विंशतितमो भागोऽष्टौ यवास्तस्याष्टभाग एकयवः, तेन हीनं विंशति... सप्तयवं घृतप्लुतं दद्यात् । घृतं च विषात्त्रिंशद्गुणं ग्राह्यम्; 'पूर्वाह्णे शीतले... देयं तु देहिनाम् । घृते नियोजितं श्लक्ष्णं पिष्टं त्रिंशद्गुणान्वितम् ॥' इ... यनवचनात् । त्रिंशद्गुणेन घृतेनान्वितं विषम् । शोध्यश्च कुहकादिभ्यो... 'त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम् । कुहकादिभयाद्राजा रक्षे... णम् ॥ ओषधीर्मन्त्रयोगांश्च मणीनथ विषापहान् । कर्तुः शरीरसंस्थ... रपन्नान्परीक्षयेत् ॥' इति पितामहस्मरणात् । तथा विषमपि रक्षणीयम्[1]... हैमवतं शस्तं गन्धवर्णरसान्वितम् । अकृत्रिममसंमूढममन्त्रोपहतं... ( १।३२२ ) इति नारदस्मरणात् । त[2]था विषे पीते यावत्करतालि... तावत्प्रतीक्षणीयोऽनन्तरं चिकित्सनीयः । यथाह नारदः—'पञ्चता... निर्विकारो यदा भवेत् । तदा भवति संशुद्धस्ततः कुर्याच्चिकित्सितम् ॥' पितामहेन तु दिनान्तोऽवधिरुक्तोऽल्पमात्राविषयः—'भक्षिते तु यदा... मूर्च्छाच्छर्दिविवर्जितः । निर्विकारो दिनस्यान्ते शुद्धं तमपि निर्दिशेत् ॥' अत्र च प्राड्विवाकः सोपवासो महादेवं संपूज्य तत्पुरतो विषं स्थापयि... दीनिष्ट्वा शोध्यस्य शिरसि प्रतिज्ञापत्रं निधाय विषमभिमन्त्र्य दक्षिणाभिमु[3]... विषं प्रयच्छति । स च शोध्यो विषमभिमन्त्र्य भक्षयतीति क्रमः ॥११...

इति विषविधानम् ॥

अथ कोशविधिमाह—

**देवानुग्रान्समभ्यर्च्य तत्स्नानोदकमाहरेत् ।**
**सं[4]स्राव्य पाययेत्तस्माज्जलं तु प्रसृतित्रयम् ॥ ११...**

**उग्रान्देवान्**दुर्गादित्यादीन् **समभ्यर्च्य** गन्धपुष्पादिभिः पूजयित्वा... **तत्स्नानोदकमाहरेत्** । आहृत्य च 'तोय ! त्वं प्राणिनां प्राणः'... **तत्तोयं** प्राड्विवाकः **संस्राव्य** शोध्येन च तत्तोयं पात्रान्तरे कृत्वा... माभिरक्ष त्वं वरुण !' इत्यनेनाभिमन्त्रितं **पाययेत्प्रसृतित्रयम्** । एत... रणधर्मेषु धर्मावाहनादिसकलदेवतापूजाहोमसमन्त्रकप्रतिज्ञापत्रशिरोनि...

---

**पाठा०**—१ परीक्षणीयं ग. २ तथापि घ. ३ भिमुखाय स्थि... मुखाय विष घ. ४ संश्राव्य. A.

। अत्र च स्नाप्यदेवतानियमः कार्यनियमोऽधिकारिनियमश्च पितामहादिभिः—'भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम् । समभावे तु देवानामादित्य च पाययेत् ॥ दुर्गायाः पाययेच्चौरान्ये च शस्त्रोपजीविनः । भास्करस्य तु यं ब्राह्मणं तत्र पाययेत् ॥ दुर्गायाः स्नापयेच्छूलमादित्यस्य तु मण्डलम् । येषामपि देवानां स्नापयेदायुधानि तु ॥' इति देवतानियमः । 'विश्रम्भे शङ्कासु संधिकार्ये तथैव च । एषु कोशः प्रदातव्यो नित्यं चित्तविशुद्धये ॥' कार्यनियमः । 'पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च । सशूकस्याव्यसनिनः पानं विधीयते ॥' (नारदः १।३२८) सशूक आस्तिकः । 'मद्यपस्त्रीव्यसनिनां वानां तथैव च । कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः ॥ महापराधे र्में कृतघ्ने क्लीबकुत्सिते । नास्तिकव्रात्यदाशेषु कोशपानं विवर्जयेत् ॥' इति । पराधो महापातककी, निर्धर्मो वर्णाश्रमधर्मरहितः पाखण्डी, कुत्सितः प्रतिजः । दाशाः कैवर्ताः, इत्यधिकारिनियमः । तथा गोमयेन मण्डलं कृत्वा तत्र मादित्याभिमुखं स्थापयित्वा पाययेदिति नारदवचनादवगन्तव्यम् । यथाह 'तमाहूयाभिशस्तं तु मण्डलाभ्यन्तरे स्थितम् । आदित्याभिमुखं कृत्वा पायसृतित्रयम् ॥' इति ॥ ११२ ॥

ननु तुलादिषु विषान्तेषु समनन्तरमेव शुद्ध्यशुद्धिभावना, कोशे तु कथमि- आह—

**अर्वाक् चतुर्दशादह्नो यस्य नो राजदैविकम् ।**
**व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥ ११३ ॥**

चतुर्दशादह्नः पूर्वं यस्य राजिकं राजनिमित्तं दैविकं देवप्रभवं व्यसनं घोरं महत् नो नैव जायते अल्पस्य देहिनामपरिहार्यत्वात्स शुद्धो तव्यः । ऊर्ध्वं पुनरवधेर्न दोषः । यथाह नारदः (१।३३१)—'ऊर्ध्वं यस्य साहाद्वैकृतं तु महद्भवेत् । नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात् ॥' इत्यर्थमेवोक्तम् । 'अर्वाक् चतुर्दशादह्नः' इत्येतन्महाभियोगविषयम्; 'महाभियोगेनि' इति प्रस्तुत्याभिधानात् । अवध्यन्तराणि पितामहेनोक्तान्यल्पविषयाणि; शमल्पेऽपि दापयेत्' इति स्मरणात् । तानि च—'त्रिरात्रात्सप्तरात्राद्वा द्वादशाहाद्विसप्तकात् । वैकृतं यस्य दृश्येत पापकृत्स उदाहृतः ॥' इति । महाभियोगोक्तादर्वाचीनं द्रव्यं त्रिधा विभज्य त्रिरात्रादपि पक्षत्रयं व्यवस्थापनीयम् ॥ ११३ ॥

इति कोशविधिः ॥

तुलादीनि कोशान्तानि पञ्च महादिव्यानि यथोद्देशं योगीश्वरेण व्याख्या- । स्मृत्यन्तरे त्वल्पाभियोगविषयाण्यन्यान्यपि दिव्यानि कथितानि ।

---

पाठा०—१ पितामहनारदादिभिः घ. २ दापयेत् घ. ३ विभेदे घ. दासेषु ख.

यथाह पितामहः—'तण्डुलानां प्रवक्ष्यामि विधिं भक्षणनोदितम् । तण्डुला देया नान्यत्रेति विनिश्चयः ॥ तण्डुलान्कारयेच्छुक्लाञ्छा कस्यचित् । मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥ स्नानोद श्रान्रात्रौ तत्रैव वासयेत् । प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रक लान्भक्षयित्वा तु पत्रे निष्ठीवयेत्ततः । पिप्पलस्य तु नान्यस्य अभावे तु ॥ लोहितं दृश्यते यस्य हनुस्तालु च शीर्यते । गात्रं च कम्पते[1] यस्य विनिर्दिशेत् ॥' इति । शिरोरोपितपत्रकं तण्डुलान्भक्षयित्वा निष्ठी वाकः ॥ भक्षयित्वेति च ण्यन्तात्सिचि रूपम् । सर्वदिव्यसाधारणं च हनादि पूर्ववदिहापि कर्तव्यम् ॥

इति तण्डुलविधिः ॥

तप्तमाषविधिः पितामहेनोक्तः । तथा हि—'सौवर्णं राजतं वापि षोडशाङ्गुलम् । चतुरङ्गुलखातं तु मृन्मयं वाऽथ मण्डलम् ॥' वर्तुल 'पूरयेद्घृततैलाभ्यां विंशत्या तु पलैस्तु तत् । सुवर्णमाषकं तस्मिन्सु पेत्ततः ॥ अङ्गुष्ठाङ्गुलियोगेन उद्धरेत्तप्तमाषकम् । कराग्रं यो न धुनुयाद्वि न जायते । शुद्धो भवति धर्मेण निर्विकारकराङ्गुलिः ॥' इति । 'उ वचनात्पात्रादुत्क्षेपणमात्रं, न[2] बहिः प्रक्षेपणमादरणीयम्[3] ॥

अपरः कल्पः—'सौवर्णे राजते ताम्रे आयसे मृन्मयेऽपि वा । ग पादाय तदग्नौ तापयेच्छुचिः ॥ सौवर्णीं राजतीं ताम्रीमायसीं वा सु सलिलेन सकृद्धौतां प्रक्षिपेत्ताम्र मुद्रिकाम् ॥' ( नारदः १।३३४ ) 'भ्र रङ्गाढ्ये ह्यनखस्पर्शगोचरे । परीक्षेतार्द्रपर्णेन चुरुकारं[4] सुघोषकम् ॥ मन्त्रेण सकृत्तदभिमन्त्रयेत् ॥ परं पवित्रममृतं घृत त्वं यज्ञकर्मसु । द पापं त्वं हिमशीतं शुचौ भव ॥ उपोषितं ततः स्नातमार्द्रवाससमागतम् न्मुद्रिकां तां तु घृतमध्यगतां तथा ॥ प्रदेशिनीं च तस्याथ परीक्षेयुः प यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाऽशुचिः ॥' इति । अत्रापि नाद्यनुसंधातव्यम् ॥ घृतानुमन्त्रणं प्राड्विवाकस्य । 'त्वमग्ने ! सर्वभूता शोध्यस्याप्यभिमन्त्रणमन्त्रः । 'प्रदेशिनीं परीक्षेयुः' इति वचनात् मुद्रिकोद्धरणम् ॥

इति तप्तमाषकविधिः ॥

धर्माधर्मदिव्यविधिः ॥ धर्माधर्माख्यदिव्यविधिश्च पितामहेनोक्तः । 'अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम् । हन्तॄणां याचमानानां प्राय नृणाम् ॥' इति । हन्तॄणामिति साहसाभियोगेषु, याचमानानामिति अर्थ प्रायश्चित्तार्थिनामिति पातकाभियोगेषु; 'राजतं कारयेद्धर्ममधर्मं सीस

---

पाठा०—१ कम्पयेद्यस्य ख. २ न प्रक्षेपणं ख. ३ माह
४ चूरुकारं ख.

प्रतिमाविधानं सीसकं वा आयसं वेति ॥ पक्षान्तरमाह—'लिखेद्भूर्जे पटे धर्माधर्मौ सितासितौ । अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत् ॥ पुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पधृक् । एवंविधायोपलिख्य पिण्डयोस्तौ आपयेत् ॥ गोमयेन मृदा वापि पिण्डौ कार्यौ समंततः । मृद्भाण्डकेऽनुपहते यौ चानुपलक्षितौ ॥ उपलिप्ते शुचौ देशे देवब्राह्मणसंनिधौ । आवाहयेत्ततो लोकपालांश्च पूर्ववत् ॥ धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत् ॥' ततः—दि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे । अशुद्धश्चेन्मम करे पापं आयातु तः ॥' इति ॥ अभिशस्तोऽभिमन्त्रयते—'अभियुक्तस्तयोश्चैकं प्रगृह्णीताविलतः । धर्मे गृहीते शुद्धः स्यादधर्मे तु स हीयते ॥ एवं समासतः प्रोक्तं धर्मपरीक्षणम् ॥' इति ॥

इति धर्माधर्मदिव्यविधिः ॥

अन्ये च शपथा द्रव्याल्पत्वमहत्त्वविषया जातिविशेषविषयाश्च मन्वादिक्ताः । ते यथा—'निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम् । त्रिकादर्वाक् पुण्यं स्यात्कोशपानमतः परम् ॥' ( मनुः ८।११३ ) 'सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः । गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥' (मनुः ८।११२) इत्यादयः । अत्र च शुद्धिविभावना मनुनोक्ता ( ८।११५ )—'न चाऽऽर्तिमृच्छति प्रिं स ज्ञेयः शपथे शुचिः' इति । आर्तिरपि 'यस्य नो राजदैविकं व्यसनं जायते रम्' इत्युक्तैव । कालनियमश्च एकरात्रमारभ्य त्रिरात्रपर्यन्तं त्रिरात्रमारभ्य त्रपर्यन्तम् । एकरात्रप्रभृतित्वं कार्यलाघवगौरवपर्यालोचनया द्रष्टव्यम् ॥ एवं जयपराजयावधारणे दण्डविशेषोऽपि दर्शितः कात्यायने—'शतार्धं दापयेद्दमशुद्धो दण्डभाग्भवेत्' इति । तं दण्डमाह—'विषे तोये हुताशे च तुलाशे च तण्डुले । तप्तमाषकदिव्ये च क्रमाद्दण्डं प्रकल्पयेत् ॥ सहस्रं षट्शतं चैव पञ्चशतानि च । चतुस्त्रिद्व्येकमेवं च हीनं हीनेषु कल्पयेत् ॥' इति ॥ 'निह्नवे वितो दद्याद्' इत्युक्तदण्डेनायं दिव्यनिबन्धनो दण्डः समुच्चीयते ॥

इति दिव्यप्रकरणम् ॥

---

टिप्प०—1 अस्य पूर्वार्धं—'यमिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति च' इति स्मृतावालोचनीयम्.

पाठा०—१ पापमायतु ख.

## अथ दायविभागप्रकरणम् ८

प्रमाणं मानुषं दैवमिति भेदेन वर्णितम् ।
अधुना वर्ण्यते दायविभागो योगमूर्तिना ॥

तत्र 'दाय'शब्देन यद्धनं स्वामिसंबन्धादेव निमित्तादन्यस्य स्वं भवति स च द्विविधः–अप्रतिबन्धः, सप्रतिबन्धश्च । तत्र पुत्राणां पौत्राणां च पौत्रत्वेन च पितृधनं पितामहधनं च स्वं भवतीत्यप्रतिबन्धो दायः । भ्रात्रादीनां तु पुत्राभावे स्वाम्यभावे च स्वं भवतीति सप्रतिबन्धो दायः तत्पुत्रादिष्वप्यूहनीयः । विभागो नाम द्रव्यसमुदायविषयाणामनेक तदेकदेशेषु व्यवस्थापनम् । एतदेवाभिप्रेत्योक्तं नारदेन—'विभागोऽर्थ तनयैर्यत्र कल्प्यते। दायभाग इति प्रोक्तं व्यवहारपदं बुधैः (ना०१३।१) पित्र्यस्येति स्वत्वनिमित्तसंबन्धोपलक्षणम् । 'तनयैः'इत्यपि प्रत्यासन्नोप इदमिह निरूपणीयम्,–कस्मिन्काले कस्य कथं कैश्च विभागः कर्त तत्र कस्मिन्काले कथं कैश्चेति तत्र तत्र श्लोकव्याख्यान एव वक्ष्यते। कस्य इत्येतावदिह चिन्त्यते । किं विभागात्स्वत्वमुत स्वस्य सतो विभाग स्वत्वमेव तावन्निरूप्यते–किं शास्त्रैकसमधिगम्यं स्वत्वमुत प्रमाणान्तर म्यमिति । तत्र शास्त्रैकसमधिगम्यमिति तावद्युक्तं; गौतमवचनात्– रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजि वैश्यशूद्रयोः ॥' ( गौ०१०।३९-४२ ) इति । प्रमाणान्तरगम्ये स्वत्वे मर्थवत्स्यात् । तथा स्तेनातिदेशे मनुः (८।३४०)—'योऽदत्तादायिनो ब्राह्मणो धनम् । याजनाध्यापनेनापि यथा स्तेनस्तथैव सः ॥' इति । अद सकाशाद्याजनादिद्वारेणापि द्रव्यमर्जयतां दण्डविधानमनुपपन्नं स्यात्स्वत्व कत्वे । अपि च, लौकिकं चेत्स्वत्वं मम स्वमनेनापहृतमिति न ब्रूयात् स्वत्वात् । अन्यथाऽन्यस्य स्वं तेनापहृतमिति नापहर्तुः स्वम् । एवं तर्हि तादिस्वरूपवदस्य वा स्वमन्यस्य वा स्वमिति संशयो न स्यात् । तस्मा मधिगम्यं स्वत्वमिति । अत्रोच्यते—'लौकिकमेव स्वत्वं लौकिकार्थक्रिया व्रीह्यादिवत् । आहवनीयादीनां हि शास्त्रगम्यानां न लौकिकक्रियासाधन नन्वाहवनीयादीनामपि पाकादिसाधनत्वमस्त्येव । नैतत्,–नहि तत्राह रूपेण पाकादिसाधनत्वम् । किं तर्हि ? प्रत्यक्षादिपरिदृश्यमानाग्न्यादिरूपे सुवर्णादिरूपेण न क्रयादिसाधनत्वमपि तु स्वत्वेनैव । नहि यस्य यत्स्वं तत्तस्य क्रयाद्यर्थक्रियां साधयति ॥ अपि च,–प्रत्यन्तवासिनामप्यदृष्टशा राणां स्वत्वव्यवहारो दृश्यते; क्रयविक्रयादिदर्शनात् । किंच,–नियतोपा

---

पाठा०—१ अत्र पुत्रसद्भावः स्वामिसद्भावश्च प्रतिबन्धः, तद ब्यत्वेन भ्रातृत्वेन च स्वं भवतीति विशेषः ख. घ. २ द्रव्य स्थापनं ख. ३ पैत्रस्य ग. घ. ४ अदत्तादायिनश्चौरस्य. ५ या पनाद्वापि ख. ६ अन्यथा स्वं ख. ७ नियतोपाधिकं घ.

लोकसिद्धमेवेति न्यायविदो मन्यन्ते । तथा हि—लिप्सासूत्रे तृतीये वर्णके द्रव्यार्जननियमानां क्रत्वर्थत्वे स्वत्वमेव न स्यात् । स्वत्वस्यालौकिकत्वादिति पूर्वपक्षमेवमाशङ्क्य द्रव्यार्जनस्य प्रतिग्रहादिना स्वत्वसाधनत्वं लोकसिद्धमिति पूर्वपक्षः समर्थितो गुरुणा—ननु च द्रव्यार्जनस्य क्रत्वर्थत्वे स्वत्वमेव न भवतीति याग एव न संवर्तेत । प्रलपितमिदं केनापि 'अर्जनं स्वत्वं नापादयतीति विप्रतिषिद्धम्' इति उक्ता । तथा सिद्धान्तेऽपि स्वत्वस्य लौकिकत्वमङ्गीकृत्यैव विचारप्रयोजनमुक्तम्, 'नियमातिक्रमः पुरुषस्य न क्रतोः' इति । अस्य चार्थ एवं विवृतः—यदा द्रव्यार्जननियमानां क्रत्वर्थत्वं तदा नियमार्जितेनैव द्रव्येण क्रतुसिद्धिर्न नियमातिक्रमार्जितेन द्रव्येण न क्रतुसिद्धिरिति न पुरुषस्य नियमातिक्रमदोषः पूर्वपक्षे । सिद्धान्ते त्वर्जननियमस्य पुरुषार्थत्वात्तदतिक्रमेणार्जितेनापि द्रव्येण क्रतुसिद्धिर्भवति, पुरुषस्यैव नियमातिक्रमदोष इति नियमातिक्रमार्जितस्यापि स्वत्वमङ्गीकृतम्,–अन्यथा क्रतुसिद्धयभावात्, न चैतावता चौर्यादिप्राप्तस्यापि स्वत्वं स्यादिति मन्तव्यम् । लोके तत्र स्वत्वप्रसिद्धयभावात्, व्यवहारविसंवादाच्च एवं प्रतिग्रहाद्युपायके स्वत्वे लौकिके स्थिते—'ब्राह्मणस्य प्रतिग्रहादय उपायाः, क्षत्रियस्य विजितादयः, वैश्यस्य कृष्यादयः, शूद्रस्य शुश्रूषादयः' इत्यदृष्टार्था नियमाः । रिक्थादयस्तु साधारणाः—'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु' ( गौ० १०।३९ ) इत्युक्ताः । तत्राप्रतिबन्धो दायो रिक्थम् । क्रयः प्रसिद्धः । संविभागः सप्रतिबन्धो दायः । परिग्रहोऽनन्यपूर्वस्य जलतृणकाष्ठादेः स्वीकारः । अधिगमो निध्यादेः प्राप्तिः । एतेषु निमित्तेषु सत्सु स्वामी भवति । ज्ञातेषु[३] ज्ञायते स्वामी । 'ब्राह्मणस्याधिकं लब्धम्' (गौ० १०।४०) इति ब्राह्मणस्य प्रतिग्रहादिना यल्लब्धं तदधिकमसाधारणम् । 'क्षत्रियस्य विजितम्' ( गौ० १०।४१ ) इत्यत्राधिकमित्यनुवर्तते । क्षत्रियस्य विजयदण्डादिलब्धमसाधारणम् । 'निर्विष्टं वैश्यशूद्रयोः'(गौ०१०।४२) इत्यत्राप्यधिकमित्यनुवर्तते । वैश्यस्य कृषिगोरक्षादिलब्धं निर्विष्टं तदसाधारणम् । शूद्रस्य द्विजशुश्रूषादिना भृतिरूपेण यल्लब्धं तदसाधारणम् । एवमनुलोमजानां प्रतिलोमजानां च लोकप्रसिद्धेषु स्वत्वहेतुषु यद्यदसाधारणमुक्तं 'सूतानामश्वसारथ्यम्' इत्यादि तत्तत्सर्वं निर्विष्टशब्देनोच्यते सर्वस्यापि भृतिरूपत्वात् ॥ 'निर्वेशो भृतिभोगयोः' ( तृ० ना० २१४ ) इति त्रिकाण्डीस्मरणात् । तत्तदसाधारणं द्रष्टव्यम् । यदपि 'पत्नी दुहितरश्चैव' ( व्य० १३५ ) इत्यादिस्मरणं तदपि स्वामिसंबन्धितया बहुषु दायविभागितया प्राप्तेषु लोकप्रसिद्धेऽपि स्वत्वे व्यामोहनिवृत्त्यर्थं स्मरणमिति सर्वमनवद्यम् ॥ यदपि मम स्वमनेनापहृतमिति न ज्ञायते स्वत्वस्य लौकिकत्व इति,–तदप्यसत्; स्वत्वहेतुभूतक्रयादिसंदेहात्स्वत्वसंदेहोपपत्तेः । विचारप्रयोजनं तु—'यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् । तस्योत्सर्गेण शुद्धयन्ति जप्येन तपसैव च ॥' इति । शास्त्रैकसमधिगम्ये स्वत्वे

पाठा०—१ क्रतुसिद्धिनियमातिक्रमार्जितेन द्रव्येण न क्रतुसिद्धिरिति घ. २ दोष इति पूर्वपक्षे घ. ३ कृतेषु ख.

या० १९

गर्हितेनासत्प्रतिग्रहवाणिज्यादिना लब्धस्य स्वत्वमेव नास्तीति तत्पुत्रा... भाज्यमेव। यदा तु लौकिकं स्वत्वं तदाऽसत्प्रतिग्रहादिलब्धस्यापि स्व... तद्विभाज्यमेव। 'तस्योत्सर्गेण शुद्ध्यन्ति' इति प्रायश्चित्तमर्जयितुरेव, ... तु दायत्वेन स्वत्वमिति न तेषां दोषसंबन्धः; 'सप्त वित्तागमा ... लाभः क्रयो जयः। प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च॥' इति (... मनुस्मरणात्॥

इदानीमिदं संदिह्यते—'किं विभागात्स्वमुत स्वस्य सतो विभाग इ... विभागात्स्वमिति तावद्युक्तम्; जातपुत्रस्याधानविधानात्। यदि जन्म... स्यात्तदोत्पन्नस्य पुत्रस्यापि तत्स्वं साधारणमिति द्रव्यसाध्येष्वाधानादिषु ... धिकारः स्यात्। तथा विभागात्प्राक् पितृप्रसादलब्धस्य विभागप्रतिषेधो ... सर्वानुमत्या दत्तत्वाद्विभागप्राप्त्यभावात्। यथाह—'शौर्यभार्याधने चोभे ... धनं भवेत्। त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः॥' (ना० १३... तथा 'भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत्। सा यथाकाममश्नी... स्थावरादृते॥' इति प्रीतिदानवचनं च नोपपद्यते, जन्मनैव स्वत्वे। न... राहते यद्दत्तम्' इति संबन्धो युक्तः; व्यवहितयोजनाप्रसङ्गात्। यदपि-... काप्रवालानां सर्वस्यैव पिता प्रभुः। स्थावरस्य तु सर्वस्य न पिता ... महः॥' तथा—'पितृप्रसादाद्भुज्यन्ते वस्त्राण्याभरणानि च। स्थावरं तु ... प्रसादे सति पैतृके॥' इति स्थावरस्य प्रसाददानप्रतिषेधवचनं, त... पात्तस्थावरविषयम्। अतीते पितामहे तद्धनं पित्रापुत्रयोः साधारण... मुक्तादि पितुरेव, स्थावरं तु साधारणमित्यस्मादेव वचनादवगम्यते।... जन्मना स्वत्वं किंतु स्वामिनाशाद्विभागाद्वा स्वत्वम्। अत एव पितुर्वि... गात्प्राग्द्रव्यस्वत्वस्य प्रहीणत्वादन्येन गृह्यमाणं न निवार्यत इति चो... काशः। तथैकपुत्रस्यापि पितृप्रयाणादेव पुत्रस्य स्वमिति न विभागमपेक्ष... अत्रोच्यते—लोकप्रसिद्धमेव स्वत्वमित्युक्तम्। लोके च पुत्रादीनां ... स्वत्वं प्रसिद्धतरं नापह्नवमर्हति। 'विभाग'शब्दश्च बहुस्वामिकधनविष... प्रसिद्धः, नान्यदीयविषयो न प्रहीणविषयः; तथा 'उत्पत्त्यैवार्थस्वामित्वं ... चार्याः' इति गौतमवचनाच्च। 'मणिमुक्ताप्रवालानाम्' इत्यादिवचनं ... ना स्वत्वपक्ष एवोपपद्यते। नच पितामहोपात्तस्थावरविषयमिति यु...

टिप्प०—1 स्वामिनाशस्यापि स्वत्वहेतुत्वेनातीते पितामहे तद्धने ... साधारण्ये मणिमुक्तादिकं वचनात् पितुः। स्थावरे तु साधारण्यमेवेत्येतावानर्थो ... चनात् प्रतीयते, तदा पूर्वोक्ता व्यवस्था स्यात्; न च तथा। ततश्चैवं वक्तव्यम्... महे जीवत्यपि स्थावरेषु सर्वसाधारण्यमिति। तथा चास्य वचनस्य पितामहोपा... विषयत्वमनुपपन्नमित्याशयः।

पाठा०—१ न विभाज्यमेव ग. २ स्वत्वं लौकिकं तदा ग. ३ ... क. ख. ४ प्रसादादिह न प्रति ख. प्रसाददाने प्रति क. ५ ... घ. ६ प्रसिद्धो ग. ७ न्यदीयधनविषयो घ. ८ तं तथोत्पत्त्येव ख.

ा न पितामहः' इति वचनात् । पितामहस्य हि स्वार्जितमपि पुत्रे पौत्रे च देयमिति वचनं जन्मना स्वत्वं गमयति । तथा परमते मणिमुक्ताप्रवालवरणादीनां पैतामहानामपि पितुरेव स्वत्वं; वचनात्, एवमस्मन्मतेऽपि र्जितानामप्येतेषां पितुर्दानाधिकारः, वचनादित्यविशेषः ॥ यत्तु 'भर्त्रा ैन' इत्यादिविष्णुवचनं स्थावरस्य प्रीतिदानज्ञापनं. तत्स्वोपार्जितस्यापि ायभ्यनुज्ञयैवेति व्याख्येयम्; पूर्वोक्तैर्मणिमुक्तादिवचनैः स्थावरव्यतिरिक्त- प्रीतिदानयोग्यत्वनिश्चयात् ॥ यदप्यर्थसाध्येषु वैदिकेषु कर्मस्वनधिकार तत्र तद्विधानबलादेवाधिकारो गम्यते । तस्मात्पैतृके पैतामहे च द्रव्ये नैव स्वत्वम्, तथापि पितुरावश्यकेषु धर्मकृत्येषु वाचनिकेषु प्रसाददानकु- भरणापद्विमोक्षादिषु च स्थावरव्यतिरिक्तद्रव्यविनियोगे स्वातन्त्र्यमिति स्थितम्। रे तु स्वार्जिते पित्रादिप्राप्ते च पुत्रादिपारतन्त्र्यमेव; 'स्थावरं द्विपदं यद्यपि स्वयमर्जितम् । असंभूय सुतान्सर्वान्न दानं न च विक्रयः ॥ ये जाता जाताश्च ये च गर्भे व्यवस्थिताः । वृत्तिं च तेऽभिकाङ्क्षन्ति न दानं न च यः ॥' इत्यादिस्मरणात् । अस्यापवादः—'एकोऽपि स्थावरे कुर्याद्दानाध- क्रयम् । आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः ॥' इति । अस्यार्थः— तव्यवहारेषु पुत्रेषु पौत्रेषु वाऽनुज्ञानादावसमर्थेषु भ्रातृषु वा तथाविधे- भक्तेष्वपि सकलकुटुम्बव्यापिन्यामापदि तत्पोषणे वाऽवश्यं कर्तव्येषु च पितृ- ादिषु स्थावरस्य दानाधमनविक्रयमेकोऽपि समर्थः कुर्यादिति । यत्तु वच- —'विभक्ता वाऽविभक्ता वा सपिण्डाः स्थावरे समाः । एको ह्यनीशः सर्वत्र ानविक्रये ॥' इति, तदप्यविभक्तेषु द्रव्यस्य मध्यस्थत्वादेकस्यानीश्वरत्वात् भ्यनुज्ञाऽवश्यं कार्या । विभक्तेषु तूत्तरकालं विभक्ताविभक्तसंशयव्युदासेन हारसौकर्याय सर्वाभ्यनुज्ञा न पुनरेकस्यानीश्वरत्वेन; अतो विभक्तानुमति- रेकेणापि व्यवहारः सिद्ध्यत्येवेति व्याख्येयम् । यदपि—'स्वग्रामज्ञाति- न्तदायादानुमतेन च । हिरण्योदकदानेन षड्भिर्गच्छति मेदिनी ॥' इति, पि ग्रामानुमतिः; 'प्रतिग्रहप्रकाशः स्यात्स्थावरस्य विशेषतः' ( व्य० १७६ ) स्मरणात् व्यवहारप्रकाशनार्थमेवापेक्ष्यते, न पुनर्ग्रामानुमत्या विना हारासिद्धिः । सामन्तानुमतिस्तु सीमाविप्रतिपत्तिनिरासाय । ज्ञातिदाया- मतेस्तु प्रयोजन मुक्तमेव 'हिरण्योदकदानेन' इति; 'स्थावरे विक्रयो

---

टिप्प०—1 स्वोपार्जितेष्वपि स्थावरेष्वनुज्ञासमर्थानुज्ञार्हसर्वानुमतिमन्तरेण दानान- र्हः, इतरेषु नानुमत्यपेक्षेति तदभिप्रायः । 2 उपरि 'षड्भिर्गच्छति मेदिनी' इत्युक्तम्, णां क्रमेणोपयोगं दर्शयन् प्रथमतो ग्रामजनानुमतिं दर्शयति—तत्रापीत्यादिना ।

---

पाठा०—१ पितृपितामहस्य घ. २ मुक्तावस्त्राभरणा ख-घ. ३ एतेषां मुक्तादीनां. ४ विमोक्षणादिषु ख., घ. ५ वा अनुज्ञादा ख., अनुज्ञादा- ाव घ. ६ अनीशकत्वात् घ. ७ सीमाप्रतिपत्ति ख-ग.

नास्ति कुर्यादाधिमनुज्ञया' इति स्थावरस्य विक्रयप्रतिषेधात्, 'भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति । उभौ तौ पुण्यकर्माणौ नियतौ स्वर्गगामिनौ ॥' इति दानप्रशंसादर्शनाच्च । विक्रयेऽपि कर्तव्ये सहिरण्यमुदकं दत्वा दानरूपेण स्थावरविक्रयं कुर्यादित्यर्थः । पैतृके पैतामहे च धने जन्मनैव स्वत्वं यथा च तत् 'भूर्या पितामहोपात्ता' ( व्य० १२१ ) इत्यत्र वक्ष्यामः ॥ इदानीं ... येन च यथा विभागः कर्तव्यस्तद्दर्शयन्नाह—

**विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान् ।**
**ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ॥१...॥**

**यदा विभागं पिता चिकीर्षति** तदा **इच्छया**[2] **विभजेत्** पुत्रान् ... सकाशात् पुत्रं पुत्रौ पुत्रान् । इच्छाया निरङ्कुशत्वादनियमप्राप्तौ नियमार्थमाह— **ज्येष्ठं वा श्रेष्ठभागेनेति** । ज्येष्ठं श्रेष्ठभागेन, मध्यमं मध्यभागेन[1], कनिष्ठभागेन, 'विभजेत्' इत्यनुवर्तते । श्रेष्ठादिविभागश्च मनुनोक्तः ( ९।११२ )— '[3]ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् । ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः ॥' इति । 'वा'[4]शब्दो वक्ष्यमाणपक्षापेक्षः । **सर्वे वा स्युः समांशिनः** इति । सर्वे वा ज्येष्ठादयः समांशभाजः कर्तव्याः । अयं च विषमो विभागः स्वार्जितद्रव्यविषयः । पितृक्रमायाते तु समस्वाम्यस्य वक्ष्यमाणत्वा[5]न्नेच्छया विभागो युक्तः । **विभागं चेत्पिता कुर्यादिति** । यदा पितुर्विभागेच्छा तावदेकः कालः । अपरोऽपि जीवत्यपि[2] पितरि द्रव्यनिःस्पृहे, निवृत्तरमणे मातरि च निवृत्तरजस्कायां, पितुरनिच्छायामपि पुत्रेच्छयैव विभागो भवति । यथाह नारदेन ( १३।३ )—'अत ऊर्ध्वं पितुः पुत्रा विभजेयुर्धनं समम्' इत्यूर्ध्वं विभागं प्रतिपाद्य—'[6]मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च । निवृत्ते वापि रमणे पितर्युपरतस्पृहे ॥' इति दर्शितः । अत्र 'पुत्रा धनं समं हरेयुः' इत्यनुषज्यते । गौतमेनापि—'ऊर्ध्वं पितुः पुत्रा रिक्थं विभजेरन्' ( गौ० ...) इत्युक्त्वा 'निवृत्ते चापि रजसि' ( गौ० २८।२ ) इति द्वितीयः कालो दर्शितः ।

**टिप्प०**—1 एतेन पितुर्निधनमेव स्वत्वकारणं, न जन्म इत्युक्तम्, अन्यथा ... पितुश्च मातुश्च' इति **मनु**विरोधापत्तिः । 2 इच्छयेति ऐच्छिकविभाग एव विवृत ... इच्छायाः संभवति उक्तपक्षद्वयावलम्बनत्वे स्वातन्त्र्यायोगाद्वाक्यभेदापत्तेः, ... कस्मैचित्कपर्दिकमन्यस्मै न किमपीत्यव्यवस्थापत्तेश्च **व्य. म.** । 3 उद्ध्रियत इत्युद्धारः । ज्येष्ठस्याविभक्तसाधारणधनादुद्धृत्य विंशतितमो भागः सर्वद्रव्येभ्यश्च यच्छ्रेष्ठं तद्देयमि त्यादि । अयं चोद्धारविभागः कलौ नेष्टः; कलिवर्ज्येषु पाठात् **व्य. म.** । 4 जीवत्येव पितुरिच्छया विभाग इति यस्मिन्काले विभाग इत्यस्य, 'पिता' इत्यनेन येनेत्यस्य, ... इत्यनेन यथा इत्यस्योपसंग्रहः । 5 'न्यूनाधिक–' ( व्य० ११६ ) इत्यादिः । 6 ... रिति । रमणः कामः । उपरतस्पृहो विरक्तः प्रत्तासु भगिनीषु चेति कालाकाङ्क्षि- णनिवृत्त्योर्विशेषणम् **व्य. म.** ।

**पाठा०**—१ मध्यमभागेन घ. २ जीवत्येव S.

जीवति चेच्छति' ( गौ० २८।२ ) इति तृतीयः कालो दर्शितः। तथा सरजस्कामपि मातर्यनिच्छत्यपि पितर्यधर्मवर्तिनि दीर्घरोगग्रस्ते च पुत्राणामिच्छया भवति विभागः। यथाह शङ्खः—'अकामे पितरि रिक्थविभागो वृद्धे विपरीतचेतसि रोगिणि च' इति ॥ ११४ ॥

पितुरिच्छया विभागो द्विधा दर्शितः–समो विषमश्च; तत्र समविभागे विशेषमाह—

**यदि कुर्यात्समानंशान् पत्न्यः कार्याः समांशिकाः।**
**न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥ ११५ ॥**

यदा स्वेच्छया पिता सर्वानेव **सुतान् समविभागिनः करोति** तदा पत्न्यश्च पुत्रसमांशभाजः कर्तव्याः, यासां पत्नीनां भर्त्रा श्वशुरेण **स्त्रीधनं न दत्तम्**। दत्ते तु स्त्रीधने अर्धांशं वक्ष्यति ( व्य० १४८ )—'तत्वर्धं प्रकल्पयेत्' इति ॥ यदा तु श्रेष्ठभागादिना ज्येष्ठादीन् विभजति तदा पत्न्यः श्रेष्ठादिभागान्न लभन्ते, किंतूद्धृतोद्धारात्समुदायात्समानेवांशाँल्लभन्ते उद्धारं च ॥ यथाहापस्तम्बः ( ध० २।१४।९ )—'परीभाण्डं च गृहेऽलंकारो भार्यायाः' इति ॥ ११५ ॥

'ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः' ( व्य० ११४ ) इति पक्षद्वयेऽपवादमाह—

**शक्तस्यानीहमानस्य किंचिद्दत्त्वा पृथक्क्रिया।**

स्वयमेव द्रव्यार्जनसमर्थस्य पितृद्रव्य**मनीहमानस्या**निच्छतोऽपि यत्किंचिदसारमपि **दत्त्वा पृथक्क्रिया** विभागः कर्तव्यः पित्रा। तत्पुत्रादीनां दायजिघृक्षा मा भूदिति ॥—

'ज्येष्ठं वा श्रेष्ठभागेन' ( व्य० ११४ ) इति न्यूनाधिकविभागो दर्शितः। तत्र शास्त्रोक्तोद्धारादिविषमविभागव्यतिरेकेणान्यथाविषमविभागनिषेधार्थमाह—

**न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः ॥ ११६ ॥**

**न्यूनाधिक**विभागेन **विभक्तानां** पुत्राणामसौ न्यूनाधिकविभागो यदि

टिप्प०—1 इच्छायामुक्तं। कचित्तदिच्छां विनापि विभागमाह बृहस्पतिः—'पितामहार्जिते गृहक्षेत्रे पिता पुत्राः समांशिनः॥ पैतृके न विभागार्हाः सुताः पितुरनिच्छया॥' पितामहार्जिते धने तदनिच्छयापि पुत्रा विभागार्हा इत्यर्थः व्य. म.। 2 अत्र 'पत्न्यः' इति बहुवचनेन 'पत्नी'पदस्वारस्येन च सापत्नमातुरपि विभागः सूचितः। अत एव मदनरत्ने 'पत्न्यः' इति बहुवचनात्प्रतिपत्नीस्वांशेन तुल्योंऽशो ग्राह्यः', न तु ताभ्यः पृथक्कृत्वांशो देयः; 'पुत्रवत् जायापत्योर्न विभागो विद्यते' इति हारीतविरोधात्। तथा श्रौतस्मार्तकर्मसु द्रव्यपरिग्रहेषु च द्रव्यार्जनेष्वपि तस्याः सहत्वमेव। तद्व्रतपतिर्जयति जाया गृहे वसतीति योगक्षेमावुभयायत्ताविति द्रव्यार्जने सहत्वम्। 3 विष्णुनाप्युक्तम्—'मातरः पुत्रभागानुसारिभागहारिण्यः' इति।

पाठा०—१ निच्छतो यत्किंचिदसारमपृथक् ख-ग. २ धर्मः A.

धर्म्यः [1]शास्त्रोक्तो भवति तदाऽसौ **पितृकृतः** कृत एव न निवर्तेत ... दिभिः **स्मृतः**। अन्यथा तु पितृकृतोऽपि निवर्तेत इत्यभिप्रायः। यथाह ... (१३।६)—'व्याधितः कुपितश्चैव विषयासक्तमानसः। अन्यथाशास्त्र... न विभागे पिता प्रभुः॥' इति ॥ ११६ ॥

इदानीं विभागस्य कालान्तरं कर्त्रन्तरं प्रकारनियममाह—

**वि[1]भजेरन्सुताः पित्रोरू[2]र्ध्वं रिक्थमृणं समम्।**

**पित्रोर्मातापित्रोरूर्ध्वं** प्र[3]याणादिति कालो दर्शितः। **सुता** इ... दर्शिताः। **सम**मिति प्रकारनियमः। सममेवेति **रिक्थमृणं च** विभ... न[2]नु—'ऊर्ध्वं पितुश्च मातुश्च' (मनुः ९।१०४) इत्युपक्रम्य (मनुः ९।... —'ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः। शेषास्तमुपजीवेयु... तथा॥' इत्युक्त्वोक्तम् (मनुः ९।११२)—'ज्येष्ठस्य विंश उद्धारः ... यद्वरम्। त[4]तोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः॥' इति। स... समुदायाद्विंशतितमो भागः सर्वद्रव्येभ्यश्च यच्छ्रेष्ठं तज्ज्येष्ठाय दातव्यम्; चत्वारिंशत्तमो भागो मध्यमं च द्रव्यं मध्यमाय दातव्यम्; तुरीय... भागो हीनं द्रव्यं च कनिष्ठाय दातव्यमिति मातापित्रोरूर्ध्वं विभज... विभागो मनुना दर्शितः। तथा (मनुः ९।११६।११७)—'उद्धारेऽनुद्धृते ... मियं स्यादंशकल्पना। एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं ततोऽनुजः॥ ... यवीयांस इति धर्मो व्यवस्थितः॥' इति। ज्येष्ठस्य द्वौ भागौ, तदनन्तर... सार्धं एको भागः ततोऽनुजानामेकैको विभाग इत्युद्धारव्यतिरेकेणापि ... विभागो दर्शि[6]तः पित्रोरूर्ध्वं विभजताम्। जीवद्विभागे च स्वयमेव विषम... दर्शितः—'ज्येष्ठं वा श्रेष्ठभागेन' (व्य० ११४) इति। अतः सर्वस्मिन्नपि ... विभागोऽस्तीति क[7]थं सममेव विभजेरन्निति नियम्यते॥ अत्रोच्यते—स... विषमो विभागः शास्त्रदृष्टस्तथापि लोकविद्विष्टत्वान्नानुष्ठेयः; 'अस्वर्ग्यं ... धर्म्यमप्याचरेन्न तु' (आ० १५६) इति निषेधात्। यथा 'महोक्षं वा ... श्रोत्रियायोपकल्पयेत्' (आ० १०९) इति विधानेऽपि लोकविद्विष्टत्वादनु...

---

**टिप्प०**—1 अत्रासंबद्धत्वाद्बहुशेषपूरणेन व्याख्यातम्; अन्यथा तु ... क्तत्वे तु 'अन्यथाशास्त्र' इति पाठः। 'अन्यथा' इति पाठेऽपि स एवार्थः इति ...
2 पितुरूर्ध्वं च प्रागपि च मन्वादिवचनैर्विषमविभागविधानात् समविषमविभा... न्याय्ये सममेवेति नियमो न घटते इति पूर्वपक्ष्याक्षिपति—**नन्वित्यादिना**।

---

**पाठा०**—१ विभजेयुः v. २ रूर्ध्वमृणं घ. ३ प्रायणात् क. ख. ... मध्यमस्य स्यात्तदर्धं तु कनीयस इति व्य. म. ५ द्धनसमुदाय... ६ दर्शितो मनुना ग. ७ कथं विभजेरन्निति सममेव नियम्यते घ. ... दृष्टोऽस्ति ग.

यथा वा—'मैत्रावरुणीं[1] गां वशामनुबन्ध्यामालभेत' इति गवालम्भनविधानेऽपि लोकविद्विष्टत्वादननुष्ठानम्। उक्तं च—'यथा[2] नियोगधर्मो [१]नो नानुबन्ध्यावधोऽपि वा। तथोद्धारविभागोऽपि नैव संप्रति वर्तते ॥' इति। (नियोगमनतिक्रम्य यथानियोगं, नियोगाधीनो यो धर्मो 'देवराच्च सुतोत्पत्ति'रित्यादिः स नो भवति) आपस्तम्बोऽपि (आ० ध० २।१४।१)—'जीवन्पुत्रेभ्यो दायं विभजेत्समम्' इति [२]समतामुक्त्वा—'ज्येष्ठो दायाद इत्येके' (आ० ध० २।१४।५) इति 'कृत्स्नधन'ग्रहणं ज्येष्ठस्यैकीयमतेनोपन्यस्य 'देशविशेषे[३] सुवर्णं कृष्णा गावः कृष्णं भौमं ज्येष्ठस्य[3] रथः पितुः [४]परीभाण्डं च गृहेऽलंकारो भार्याया ज्ञातिधनं चेत्येके' (ध० २।१४।६-९) इत्येकीयमतेनैवमुद्धारविभागं दर्शयित्वा 'तच्छास्त्रै[५]र्विप्रतिषिद्धम्' (आ०ध० २।१४।१०) इति निराकृतवान्। तं च शास्त्रविप्रतिषेधं स्वयमेव दर्शयति स्म 'मनुः पुत्रेभ्यो दायं व्यभजदित्यविशेषेण श्रूयते' (ध० २।१४।११) इति। तस्माद्विषमो विभागः शास्त्रदृष्टोऽपि लोकविरोधाच्छ्रुतिविरोधाच्च नानुष्ठेय इति सममेव विभजेरन्निति नियम्यते ॥—

मातापित्रोर्धनं सुता विभजेरन्नित्युक्तं, तत्र मातृधनेऽपवादमाह—

## मातुर्दुहितरः शेषमृणात्

**मातुर्धनं दुहितरो** विभजेरन्। **ऋणाच्छेषं** मातृकृतर्णापाकरणावशिष्टम्। अतश्चर्णसमं न्यूनं वा मातृधनं सुता विभजेरन्नित्यस्य विषयः। एतदुक्तं भवति —मातृकृत[६]मृणं पुत्रैरेवापाकरणीयं, न दुहितृभिः। ऋणावशिष्टं तु धनं दुहितरो लभेयुरिति। युक्तं चैतत्—'पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः' (मनुः ३।४९) इति स्त्र्यवयवानां दुहितृषु बाहुल्यात् स्त्रीधनं दुहितृगामि, पितृधनं पुत्रगामि; पित्रवयवानां पुत्रेषु बाहुल्यादिति। तत्र च गौतमेन विशेषो दर्शितः (२८।२४)—'स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च' इति। अस्यार्थः—[4]प्रत्ताऽप्रत्तासमवायेऽप्रत्तानामेव स्त्रीधनम्। प्रत्तासु च प्रतिष्ठिताप्रतिष्ठितासमवायेऽप्रतिष्ठितानां चेवेति। अप्रतिष्ठिता निर्धनाः ॥—

दुहित्रभावे मातृधनमृणावशिष्टं को गृह्णीयादित्यत आह—

## ताभ्य ऋतेऽन्वयः ॥ ११७ ॥

**ताभ्यो** दुहितृभ्यो **विना** दुहितॄणामभावे [5]**अन्वयः** पुत्रादिर्गृह्णीयात्।

**टिप्प०**—1 मित्रावरुणदेवताकां वशां वन्ध्यामनुबन्ध्यामालभेतेत्यर्थः। 2 अन्यो नियोगधर्मो विधिधर्मो विधायकवाक्यविहितो महोक्षमहाजालम्भनरूपस्तथानुबन्ध्यावशालम्भनरूपश्च धर्मो यथा नास्ति तथा विषमविभागोऽपि नास्तीति तदाशयः। 3 उत्कृष्टोऽशो ज्येष्ठस्य पितुः। 4 प्रत्ता विवाहिता, अप्रत्ता अनूढा, प्रतिष्ठिता सधना, अप्रतिष्ठिता निर्धना। 5 दुहित्रन्वय इत्यपरार्कः।

**पाठा०**—१ धर्मोऽन्यो B. २ स्वमतमुक्त्वा ख. घ. ३ विशेषेषु घ.; विशेषेण क. ४ परिभाण्डं ग. ५ विप्रतिषिद्धं घ. ६ कृतर्णं.

एतच्च—'विभजेरन्सुताः पित्रोरूर्ध्वम्' ( व्य० ११७ ) इत्यनेनैव सिद्ध
सुक्तम् ॥ ११७ ॥

अविभाज्यमाह—

**पितृद्रव्याविरोधेन यदन्यत्स्वयमार्जितम् ।**
**मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत् ॥ ११८ ॥**
**क्रमादभ्यागतं द्रव्यं हृतमप्युद्धरेत्तु यः ।**
**दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥ ११९ ॥**

**मातापित्रोर्द्रव्याविनाशेन यत्स्वयमार्जितं, मैत्रं** मित्रसकाशा **औद्वाहिकं** विवाहलब्धं **दायादानां** भ्रातृणां **तन्न भवेत्** । क्रम क्रमा**दायातं** यत्किञ्चिद्द्रव्यं अन्यैर्हृतमसामर्थ्यादिना पित्रादिभिरनुद्धृ पुत्राणां मध्य इतराभ्यनुज्ञयोद्धरति **तद्दायादेभ्यो** भ्रात्रादिभ्यो न द उद्धर्तैव गृह्णीयात् । तत्र क्षेत्रे तुरीयांशमुद्धर्ता लभते, शेषं तु सर्वेषां सममेव शङ्खः—'पूर्वं नष्टां तु यो भूमिमेकश्चेदुद्धरेत्क्रमात् । यथाभागं लभ दत्त्वांशं तु तुरीयकम् ॥' इति । क्रमादभ्यागतमिति शेषः । तथा विद्या ध्ययनेनाध्यापनेन वेदार्थव्याख्यानेन वा यल्लब्धं तदपि दायादेभ्यो न द अर्जक एव गृह्णीयात् । अत्र च 'पितृद्रव्याविरोधेन यत्किंचित्स्वयमार्जि इति सर्वत्र[2] शेषः । अतश्च पितृद्रव्याविरोधेन यन्मैत्रमर्जितं पितृद्रव्या यदौद्वाहिकं, पितृद्रव्याविरोधेन यत्क्रमादायातमुद्धृतं[3], पितृद्रव्याविरोधेन **यल्लब्धमिति** प्रत्येकमभिसंबध्यते । तथा च पितृद्रव्याविरोधेन प्रत्यु यन्**मैत्रम्**, आसुरादिविवाहेषु **यल्लब्धम्**, तथा पितृद्रव्यव्ययेन यत्क **मुद्धृतं** तथा पितृद्रव्यव्ययेन लब्धया विद्यया **यल्लब्धम्**, तत्सर्वं भ्रा तृभिः पित्रा च विभजनीयम्[4] । तथा 'पितृद्रव्याविरोधेन' इत्यस्य[1] सर्वशे पितृद्रव्यविरोधेन प्रतिग्रहलब्धमपि विभजनीयम् । अस्य च सर्वशेष मैत्रमौद्वाहिकमित्यादिनारब्धव्यम् । अथ पितृद्रव्यविरोधेनापि यन्मैत्रा तस्याविभाज्यत्वाय मैत्रादिवचनमर्थवदित्युच्यते । तथा सति समाचारवि विद्यालब्धे नारदवचनविरोधश्च ।—'कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिग भागं विद्याधनात्तस्मात्स लभेताश्रुतोऽपि सन् ॥' ( नारदः १३।१० ) इति विद्याधनस्याविभाज्यस्य लक्षणमुक्तं कात्यायनेन—'परभक्तोपयोगेन विद्या

**टिप्प०**—1 यदि 'पितृद्रव्याविरोधेन' इत्ययमंशो मैत्रादिशेषो न स्यात्तदा संपत्स्यते—यद्यत् पितृद्रव्याविरोधेनार्जितं, तत्तदविभाज्यमिति । तथा चानया व्यक्त्या साधारण्येन तादृशानां मैत्रादीनामप्यविभाज्यत्वे सिद्धे पुनस्तेषां 'मैत्रमौ कम्' इत्यविभाज्यत्वाभिधानमनुपपन्नं स्यादित्यत आह—**अस्येति** ।

**पाठा०**—१ मभ्युद्धरेत्तु A. २ सर्वत्र शेषः क. ३ क्रमायातं ४ समं विभजनीयं ग.

तस्तु या। तया लब्धं धनं यत्तु विद्याप्राप्तं तदुच्यते ॥' इति। तथा 'पितृद्रव्या-विरोधेन' इत्यस्य भिन्नवाक्यत्वे प्रतिग्रहलब्धस्याविभाज्यत्वमाचारविरुद्धमापद्येत। एवदेव स्पष्टीकृतं मनुना (९।२०८)—'अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जितम्। दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥' इति श्रमेण सेवायुद्धादिना। तु पितृद्रव्याविरोधेन यन्मैत्रादिलब्धं द्रव्यं तदविभाज्यमिति न वक्तव्यम्; विभागप्राप्त्यभावात्। येन लब्धं तत्तस्यैव, नान्यस्येति प्रसिद्धतरम्। प्राप्तिपूर्व-कस्य प्रतिषेधः। अत्र कश्चिदित्थं प्राप्तिमाह—'यत्किञ्चित्पितरि प्रेते धनं ज्येष्ठो-ऽधिगच्छति। भागो यवीयसां तत्र यदि विद्यानुपालिनः ॥' (मनुः ९।२०४) इति। ज्येष्ठो वा कनिष्ठो वा मध्यमो वा पितरि प्रेते अप्रेते वा यवीयसां यवीयसां चेति व्याख्यानेन पितरि सत्यसति च मैत्रादीनां विभाज्यत्वं प्राप्तं प्रतिषि-ध्यत इति,–तदसत्; नह्यत्र प्राप्तस्य प्रतिषेधः, किंतु सिद्धस्यैवानुवादोऽयम्। लोक-सिद्धस्यैवानुवादकान्येव प्रायेणास्मिन्प्रकरणे वचनानि। अथवा 'समवेतैस्तु यत्प्राप्तं सर्वे तत्र समांशिनः।' इति प्राप्तस्यापवाद इति संतुष्यतु भवान्। अतश्च 'यत्किंचि-त्पितरि प्रेते' इत्यस्मिन्वचने ज्येष्ठादिपदाविवक्षया प्राप्तिरिति व्यामोहमात्रम्। अतो मैत्रादिवचनैः पितुः प्रागूर्ध्वं वाविभाज्यत्वेनोक्तस्य 'यत्किंचित्पितरि प्रेते' इत्यपवाद इति व्याख्येयम्। तथाऽन्यदप्यविभाज्यमुक्तं मनुना (९।२१९)—'वस्त्रं पत्रमलंकारं कृतान्नमुदकं स्त्रियः। योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते ॥' इति। धृतानामेव वस्त्राणामविभाज्यत्वं, येन धृतं तत्तस्यैव। पितृधृतवस्त्राणि तु पितुरूर्ध्वं विभजतां श्राद्धभोक्त्रे दातव्यानि। यथाह बृहस्पतिः—'वस्त्रालंकार-शय्यादि पितुर्यद्वाहनादिकम्। गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे समर्पयेत् ॥' इति। अभिनवानि तु वस्त्राणि विभाज्यान्येव। पत्रं वाहनमश्वशिबिकादि, तदपि येनारूढं तत्तस्यैव। पित्र्यं तु वस्त्रवदेव, अश्वादीनां बहुत्वे तु तद्विक्रयोपजीविनां विभाज्यत्वमेव। वैषम्येणाविभाज्यत्वे ज्येष्ठस्य (मनुः ९।११९)—'अजाविकं सैकशफं न जातु विषमं भजेत्। अजाविकं सैकशफं ज्येष्ठस्यैव विधीयते ॥' इति स्मरणात्। अलंकारोऽपि यो येन धृतः स तस्यैव। अधृतः साधारणो विभाज्य एव। (मनुः ९।२००)—'पत्यौ जीवति यः स्त्रीभिरलंकारो धृतो भवेत्। न तं भजेरन्दायादा भजमानाः पतन्ति ते ॥' इति। 'अलंकारो धृतो भवेत्' इति विशेषेणोपादानादधृतानां विभाज्यत्वं गम्यते। कृतान्नं तण्डुलमोदकादि तदप्य-विभाज्यं यथासंभवं भोक्तव्यम्। उदकं उदकाधारः कूपादि, तच्च विषमं मूल्य-

टिप्प०—1 'दायादेभ्य'-इत्यस्य स्थाने 'स्वयमीहितलब्धं तन्नाकामो दातुमर्हति' इत्युत्तरार्धं मनुस्मृतावुपलभ्यते.

पाठा०—१ विरोधश्चापद्येत घ. २ निषेधः घ. ३ चाविभाज्य घ. ४ इत्यस्यापवाद ख. ५ पितृधृतानि ख. ६ तु विषमं–मनुस्मृतिः. ७ पतन्त्यधः ग. ८ विशेषस्योपादाना ग.

द्वारेण न विभाज्यं पर्यायेणोपभोक्तव्यम् । स्त्रियश्च दास्यो विषमाः न मू विभाज्याः, पर्यायेण कर्म कारयितव्याः । अवरुद्धास्तु पित्रा स्वैरिण्या अपि पुत्रैर्न विभाज्याः । 'स्त्रीषु च संयुक्तास्वविभागः' ( २८।४६ ) इति स्मरणात् । योगश्च क्षेमश्च योगक्षेमम् । 'योग'शब्देनालब्धलाभकारणं तामिसाध्यं इष्टं कर्म लक्ष्यते । 'क्षेम'शब्देन लब्धपरिरक्षणहेतुभूतं बहि तडागारामनिर्माणादि पूर्तं कर्म लक्ष्यते । तदुभयं पैतृकमपि पितृद्रव्यविरो मप्यविभाज्यम् । यथाह लौगाक्षिः—'क्षेमं पूर्तं योगमिष्टमित्याहुस्तत्त्वद अविभाज्ये च ते प्रोक्ते शयनासनमेव च ॥' इति । 'योगक्षेम'शब्देन यो कारिणो राजमन्त्रिपुरोहितादय उच्यन्ते—इति केचित् । छत्रचामरशस्त्रोपा तय इत्यन्ये । प्रचारो गृहारामादिषु प्रवेशनिर्गममार्गः सोऽप्यविभाज्यः शनसा क्षेत्रस्याविभाज्यत्वमुक्तम्—'अविभाज्यं सगोत्राणामासहस्रकुला याज्यं क्षेत्रं च पत्रं च कृतान्नमुदकं स्त्रियः ॥' इति, तद्ब्राह्मणोत्पन्नक्षत्रिया विषयम् । 'न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै । यद्यप्येषां पिता द विप्रासुतो हरेत् ॥' इति स्मरणात् । याज्यं याजनकर्मलब्धम् । पितृ लब्धस्याविभाज्यत्वं वक्ष्यते । नियमातिक्रमार्जितस्याविभाज्यत्वमनन्त न्यरासि । पितृद्रव्यविरोधेन यदर्जितं तद्विभजनीयमिति स्थितं, तत्रार्जकस्य द्वयं; वसिष्ठवचनात्—'येन चैषां स्वयमुपार्जितं स्यात्स द्व्यंशमेव ( १७।५१ ) इति ॥ ११८–११९ ॥

अस्यापवादमाह—

**सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः ।**

अविभक्तानां भ्रातॄणां **सामान्यस्यार्थस्य**[2] कृषिवाणिज्यादिना संभूय **त्थाने** सम्यग्वर्धने केनचित्कृते **सम एव विभागो** नार्जयितुरंशद्वयम्[3]

पित्र्ये द्रव्ये पुत्राणां विभागो दर्शितः, इदानीं पैतामहे पौत्राणां विशेषमाह—

**अनेकपितृकाणां तु पितृतो भागकल्पना ॥ १२० ॥**

यद्यपि **पैतामहे द्रव्ये** पौत्राणां जन्मना स्वत्वं पुत्रैरविशिष्टं, तथापि **पितृद्वारेणैव** पैतामहद्रव्ये[4] **विभागकल्पना,** न स्वरूपापेक्षया । भवति—यदाऽविभक्ता भ्रातरः पुत्रानुत्पाद्य दिवं गतास्तदैकस्य द्वौ पुत्रौ, त्रयोऽपरस्य चत्वार इति पुत्राणां वैषम्ये तत्र[2] द्वावेकं स्वपित्र्यमंशं[5] लभेते,

**टिप्प०—1** इदं **मेधातिथि–कल्पतर्वभिप्रेतम्** । 2 तत्र तेषां पित्र्ये कल्पना, न तेषां समो विभाग इत्याशयः ।

**पाठा०—१ करणं ख. २ साधारणस्यार्थस्य ग. घ. ३ भागद्वयम् ४ द्रव्यविभाग क. ५ पित्रंशं घ.**

योऽप्येकमंशं पित्र्यं, चत्वारोऽप्येकमेवांशं पित्र्यं लभन्त इति । तथा केषुचित्पुत्रेषु ध्रियमाणेषु केषुचित्पुत्रानुत्पाद्य विनष्टेष्वप्य[1]यमेव न्यायः । ध्रियमाणाः स्वानंशानेव लभन्ते, [1]नष्टानामपि पुत्राः पित्र्यानेवांशाँल्लभन्त इति वाचनिकी व्यवस्था ॥ १२० ॥

अधुना विभक्ते पितर्यविद्यमानभ्रातृके वा पौत्रस्य पैतामहे द्रव्ये विभागो नास्ति । [2]ध्रियमाणे[2] पितरि 'पितृतो भागकल्पना' ( व्य० १२० ) इत्युक्तत्वात् । किंतु वा स्वार्जितवत्पितुरिच्छयैवेत्याशङ्कित आह—

**भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ।**
**तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य [3]चैव हि ॥ १२१ ॥**

भूः शालिक्षेत्रादिका । निबन्ध एकस्य पर्ण[4]भरकस्येयन्ति पर्णानि, तथा एकस्य क्रमुकफलभरकस्येयन्ति क्रमुकफलानीत्याद्युक्तलक्षणः । द्रव्यं सुवर्णरजतादि यत्पितामहेन प्रतिग्रहविजयादिना लब्धं तत्र पितुः पुत्रस्य च [5]स्वाम्यं लोकप्रसिद्धमिति कृत्वा विभागोऽस्ति । हि यस्मात्तत्सदृशं समानम्, तस्मान्न पितुरिच्छयैव विभागो नापि पितुर्भागद्वयम् । अतश्च 'पितृतो भागकल्पना' ( व्य० १२० ) इत्येतत्स्वाम्ये समेऽपि वाचनिकम् । 'विभागं चेत्पिता कुर्यात्' ( व्य० ११४ ) इत्येतत्स्वार्जितविषयम् । तथा—'द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता' ( नारदः १३।१२ ) इत्येतदपि स्वार्जितविषयम् । 'जीवतोरस्वतन्त्रः स्याज्जरयापि समन्वितः' इत्येतदपि पारतन्त्र्यं मातापित्रर्जितद्रव्यविषयम् । तथा—'अनीशास्ते हि जीवतोः' इत्येतदपि । तथा सरजस्कायां मातरि सस्पृहे च पितरि विभागमनिच्छत्यपि पुत्रेच्छया पैतामहद्रव्यविभागो भवति । तथाऽविभक्तेन पित्रा पैतामहे द्रव्ये दीयमाने विक्रीयमाणे वा पौत्रस्य निषेधेऽप्यधिकारः, पित्रर्जिते न तु निषेधाधिकारः; तत्परतन्त्रत्वात् । अनुमतिस्तु कर्तव्या । यथा हि—पैतृके पैतामहे च स्वाम्यं यद्यपि जन्मनैव, तथापि पैतृके पितृपरतन्त्रत्वात् पितु[6]श्चार्जकत्वेन प्राधान्यात् पित्रा विनियुज्यमाने स्वार्जिते द्रव्ये पुत्रेणानुमतिः कर्तव्या । पैतामहे तु द्वयोः स्वाम्यमविशिष्टमिति निषेधाधि[7]कारोऽप्यस्तीति विशेषः । मनुरपि ( ९।२०९ ) 'पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात् । न तत्पुत्रैर्भजेत्सार्धमकामः स्वयमर्जितम् ॥' इति । यत्पितामहार्जितं केनाप्यपहृतं

टिप्प०—1 अत्राविभक्तधने भ्रातरि मृते तत्पुत्रः पितामहादनवाप्तविभागः पितृव्यात्तत्पुत्राद्वा निजपितृभागं गृह्णीयात् । एवं च तत्पुत्रः । तत्पौत्रस्तु न लभेतेति कात्यायनमतम् । 2 मृते पितरीति भावः ।

पाठा०—१ ष्ययमेव ख-ग. २ ध्रियमाणे तु पितरि ग. ३ चोभयोः ग, घ. ४ भारकस्य ख. ५ स्वाम्यमर्थसिद्धमिति. ६ पितुः स्वार्जकत्वेन ख. ७ कारोऽप्यस्तीति ख.

पितामहेनानुद्धृतं यदि पितोद्धरति तत्स्वार्जितमिव पुत्रैः सार्धमकामः विभजेदिति वदन् पितामहार्जितमकामोऽपि पुत्रेच्छया पुत्रैः सह वि दर्शयति ॥ १२१ ॥

विभागोत्तरकालमुत्पन्नस्य पुत्रस्य कथं विभागकल्पनेत्यत आह—

**विभक्तेषु सुतो जातः सवर्णायां विभागभाक्।**

**विभक्तेषु** पुत्रेषु पश्चात्**सवर्णायां** भार्यायामुत्पन्नो विभा विभज्यत इति विभागः । पित्रोर्विभागस्तं भजतीति विभागभाक्; तयोरंशं लभत इत्यर्थः । मातृभागं चासत्यां दुहितरि, 'मातुर्दुहितरः ( व्य० ११७ ) इत्युक्तत्वात् । असवर्णायामुत्पन्नस्तु स्वांशमेव पि मातृकं तु सर्वमेव । एतदेव मनुनोक्तम् ( ९।२१६ )—'ऊर्ध्वं विभागा पित्र्यमेव हरेद्धनम्' इति । पित्रोरिदं पित्र्यमिति व्याख्येयम्; 'अनीशः पित्रोर्भ्रातुर्भागे विभक्तजः' इति स्मरणात् । विभक्तयोर्मातापित्रोर्विभागे त्पूर्वमुत्पन्नो न स्वामी, विभक्तजश्च भ्रातुर्भागे न स्वामीत्यर्थः । तथा त्तरकालं पित्रा यत्किंचिदर्जितं तत्सर्वं विभक्तजस्यैव; 'पुत्रैः सह विभक्ते यत्स्वयमर्जितम् । विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः ॥' इति ये च विभक्ताः पित्रा सह संसृष्टाः पितुरूर्ध्वं तैः सार्धं विभक्तजो यथाह मनुः ( ९।२१६ )—'संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह' इ

पितुरूर्ध्वं पुत्रेषु विभक्तेषु पश्चादुत्पन्नस्य कथं विभागकल्पनेत्यत आह—

**दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात्॥**

तस्य पितरि प्रेते भ्रातृविभागसमयेऽस्पष्टगर्भायां मातरि भ्रातृविभागो मुत्पन्नस्यापि विभागः । तद्विभागः कुत इत्यत आह । **दृश्याद्** भ्रातृ द्धनात् । कीदृशात्? **आयव्ययविशोधितात्** । **आयः** प्रतिदिवसं प्रत्यब्दं वा यदुत्पद्यते, **व्ययः** पितृकृतर्णापाकरणं, ताभ्यामायव्ययाभ्यां धितं तत्तस्मादुद्धृत्य तद्भागो दातव्यः स्यात् । एतदुक्तं भवति—प्रा भागेषु तदुत्थमायं प्रवेश्य पितृकृतं चर्णमपनीयावशिष्टेभ्यः स्वेभ्यः स्वेभ्यो किंचित्किंचिदुद्धृत्य विभक्तजस्य भागः स्वभागसमः कर्तव्य इति । एतच्च समयेऽप्रजस्य भ्रातुर्भार्यायामस्पष्टगर्भायां विभागादूर्ध्वमुत्पन्नस्यापि वेदि स्पष्टगर्भायां तु प्रसवं प्रतीक्ष्य विभागः कर्तव्यः । यथाह वसिष्ठः ( —'अथ भ्रातॄणां दायविभागो याश्चानपत्याः स्त्रियस्तासामापुत्रलाभात् गृहीतगर्भाणामाप्रसवात्प्रतीक्षणमिति योजनीयम् ॥ १२२ ॥

---

**पाठा०—१ मातुर्भागं तु सर्वमेव ग. घ; मातृभागं** B. **२ कृत ३ भागेभ्यो यत्किंचिदुद्धृत्य ज. ४ समये भ्रातुर्भार्यामप्रजायामस्पष्ट स्वभागा ग., समये भ्रातृभार्यायामप्रजस्य स्पष्टगर्भायां विभागादूर्ध्व**

विभक्तजः पित्र्यं मातृकं च सर्वं धनं गृह्णातीत्युक्तं, तत्र यदि विभक्तः पिता वा विभक्ताय पुत्राय स्नेहवशादाभरणादिकं प्रयच्छति, तदा विभक्तजेन प्रतिषेधो न कर्तव्यः; नापि दत्तं प्रत्याहर्तव्यमित्याह—

**पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत् ।**

मातापितृभ्यां विभक्ताभ्यां पूर्वं विभक्तस्य **पुत्रस्य यद्दत्त**मलंकारादि, **तत्त**स्यैव पुत्रस्य, न विभक्तजस्य स्वं भवति । न्यायसाम्याद्विभागात्प्रागपि यस्य यद्दत्तं तस्यैव । तथा असति विभक्तजे विभक्तयोः पित्रोरंशं तदूर्ध्वं विभजतां यस्य यद्दत्तं तस्यैव, नान्यस्येति वेदितव्यम् ॥—

जीवद्विभागे स्वपुत्रसमांशित्वं पत्नीनामुक्तं[1], 'यदि कुर्यात्समानंशान्' (व्य० ११५) इत्यादिना । पितुरूर्ध्वं विभागेऽपि पत्नीनां[2] स्वपुत्रसमांशित्वं दर्शयितुमाह—

**पितुरूर्ध्वं विभजतां माताऽप्यंशं समं हरेत् ॥ १२३ ॥**

**पितुरूर्ध्वं** पितुः प्रयाणादूर्ध्वं[3] **विभजतां मातापि** स्वपुत्रांश**सममंशं** हरेत्,-यदि स्त्रीधनं न दत्तम्; दत्ते त्वर्धांशहारिणीति वक्ष्यते[4] ॥ १२३ ॥

पितरि प्रेते यद्यसंस्कृता भ्रातरः सन्ति, तदा तत्संस्कारे कोऽधिक्रियत इत्यत आह—

**असंस्कृतास्तु[5] संस्कार्या[6] भ्रातृभिः पूर्वसंस्कृतैः ।**

**पितुरूर्ध्वं विभजद्भिर्भ्रातृभिरसंस्कृता भ्रातरः** समुदायद्रव्येण **संस्कर्तव्याः** ॥—

असंस्कृतासु भगिनीषु विशेषमाह—

**भगिन्यश्च निजादंशाद्दत्त्वांशं तु तुरीयकम् ॥ १२४ ॥**

अस्यार्थः—**भगिन्यश्चा**संस्कृताः संस्कर्तव्या भ्रातृभिः । किं कृत्वा? **निजादंशा**च्चतुर्थ**मंशं दत्त्वा** । अनेन दुहितरोऽपि पितुरूर्ध्वमंशभागिन्य इति गम्यते । तत्र 'निजादंशात्' इति प्रत्येकं परिकल्पितादंशादुद्धृत्य चतुर्थांशो दातव्य इत्ययमर्थो[7] न भवति, किंतु यज्जातीया कन्या, तज्जातीयपुत्रभागाच्चतुर्थांशभागिनी सा कर्तव्या । एतदुक्तं भवति—यदि ब्राह्मणी सा कन्या तदा ब्राह्मणीपुत्रस्य यावानंशो भवति, तस्य चतुर्थांशस्तस्या भवति । तद्यथा—यदि कस्यचिद्ब्राह्मणस्यैका[8]

टिप्प०—1 यदा ब्राह्मणस्य सर्ववर्णा भार्या भवन्ति, तासां च प्रत्येकं कन्यकाः सन्ति, तत्र ब्राह्मणी या कन्यका सा ब्राह्मणस्य पुत्रस्य यावानंशो भवति ततश्चतुर्थोऽशं लभते; एवं ब्राह्मणस्येन पितुः क्षत्रियादिकन्यकाः क्षत्रियादिसुतांशभागग्राहिण्य इति अप० ।

पाठा०—१ तस्यैव क. ग. २ मातुः स्वपुत्र ख. ३ प्रायणा क. ग. ४ वक्ष्यति ग. ५ असंस्कृताश्च A. ६ संस्कार्याः ग. ७ इत्ययमर्थो क., इत्यर्थो ग. ८ कस्यचिद्ब्राह्मण्येवैका ख.

पत्नी पुत्रश्चैकः कन्या चैका, तत्र पित्र्यं सर्वमेव द्रव्यं द्विधा विभज्य तत्रै चतुर्धा विभज्य तुरीयमंशं कन्यायै दत्त्वा शेषं पुत्रो गृह्णीयात्; [अथ] द्वौ पुत्रौ एका च कन्या, तदा पितृधनं सर्वं त्रिधा विभज्य एकं भागं चतुर्धा तुरीयमंशं कन्यायै दत्त्वा शेषं द्वौ पुत्रौ विभज्य गृह्णीतः; अथ त्वेकः कन्ये, तदा पित्र्यं धनं त्रिधा विभज्य एकं भागं चतुर्धा विभज्य तत्र द्वाभ्यां कन्याभ्यां दत्त्वाऽवशिष्टं सर्वं पुत्रो गृह्णातीत्येवं समानजातीयेषु भ्रातृषु भगिनीषु च योजनीयम्। यदा तु ब्राह्मणीपुत्र एकः क्षत्रियाकन्या तत्र पितृधनं सप्तधा विभज्य क्षत्रियापुत्रभागांस्त्रींश्चतुर्धा विभज्य क्षत्रियाकन्यायै दत्त्वा शेषं ब्राह्मणीपुत्रो गृह्णाति। यदा तु द्वौ ब्राह्मणीपुत्रौ क्षत्रियाकन्या चैका, तत्र पित्र्यं धनमेकादशधा विभज्य तेषु त्रीनंशान् क्षत्रियाभागांश्चतुर्धा विभज्य चतुर्थमंशं क्षत्रियाकन्यायै दत्त्वा शेषं सर्वं ब्राह्मणीपुत्रौ विभज्य गृह्णीतः॥ एवं जातिवैषम्ये भ्रातॄणां भगिनीनां च संख्यावैषम्ये च सर्वत्रोहनीयम्। नच 'निजादंशाद्दत्त्वांशं तु तुरीयक'मिति शाविवक्षया संस्कारमात्रोपयोगि द्रव्यं दत्त्वेति व्याख्यानं युक्तम्। मनुविरोधात् (९।११८)—'स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः॥' इति। अस्यार्थः—भ्रातरो ब्राह्मणीप्रभृतिभ्यो भगिनीभ्यः स्वेभ्यः स्वजातिविहितेभ्योंऽशेभ्यः ऽशान्हरेद्विप्र' (मनुः ९।१५३) इत्यादिवक्ष्यमाणेभ्यः स्वात्स्वादंशात् दात्मीयाद्भागाच्चतुर्थं चतुर्थं भागं दद्युः। न चात्रात्मीयभागादुद्धृत्य देय इत्युच्यते, किंतु स्वजातिविहितादेकस्मादेकस्मादंशात्पृथक्पृथगेकस्यै कन्यायै चतुर्थोंऽशो देय इति जातिवैषम्ये संख्यावैषम्ये च विभागक्लृप्तिः 'पतिताः स्युरदित्सव' इत्यकरणे प्रत्यवायश्रवणादवश्यदातव्यता प्रतीयते। चतुर्थभागवचनमविवक्षितं संस्कारमात्रोपयोगिद्रव्यदानमेव विवक्षितमिति स्मृतिद्वयेऽपि चतुर्थांशदानाविवक्षायां प्रमाणाभावाददाने प्रत्यवायश्र यदपि कैश्चिदुच्यते—अंशदानविवक्षायां बहुभ्रातृकायाः बहुधनत्वं, बहु कस्य च निर्धनता प्राप्नोतीति, तदुक्तरीत्या परिहृतमेव। नह्यत्रात्मीयाद्भा चतुर्थांशस्य दानमुच्यते येन तथा स्यात्; अतोऽसहायमेधातिथिप्रभृतीनां नमेव चतुरस्रं, न भारुचेः। तस्मात्पितुरूर्ध्वं कन्याप्यंशभागिनी पूर्वं चित्पिता ददाति, तदेव लभते; विशेषवचनाभावादिति सर्वमनवद्यम्॥

पाठा०—१ अथ तु ग. घ. २ गृह्णीयात् एवं ग. ३ पित्र्यं ४ गृह्णीयात् ग. ५ गृह्णीयाताम् ग. ६ नच दत्त्वांशं तु ग. घ. ७ रोपयोगि ख. ८ बहुधनकत्वं घ. ९ वरिष्ठं, न भागुरेः ख.

एवं 'विभागं चेत्पिता कुर्यात्' (व्य०११४) इत्यादिना प्रबन्धेन समानजातीनां भ्रातॄणां परस्परं पित्रा च सह विभागक्लृप्तिरुक्ता; अधुना भिन्नजातीयानां भागमाह—

**चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः ।**
**क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः ॥ १२५ ॥**

'तिस्रो वर्णानुपूर्व्येण' (आ० १७) इति ब्राह्मणस्य चतस्रः, क्षत्रियस्य तिस्रः, वैश्यस्य द्वे, शूद्रस्यैकेति भार्या दर्शिताः । तत्र ब्राह्मणात्मजा ब्राह्मणोत्पन्ना वर्णशः—'वर्ण'शब्देन[1] ब्राह्मणादिर्वर्णाः[2] स्त्रिय उच्यन्ते । 'संख्यैकवचनाच्च वीप्सायाम्' (पा० ५।४।४३) इत्यधिकरणकारकादेकवचनाद्वीप्सायां शस् । अतश्च वर्णे ब्राह्मणोत्पन्नाः[3] यथाक्रमं चतुस्त्रिद्व्येकभागाः स्युर्भवेयुः । एतदुक्तं भवति—ब्राह्मणेन **ब्राह्मण्यामुत्पन्ना एकैकशश्चतुरश्चतुरो भागाँल्लभन्ते** । तेनैव क्षत्रियायामुत्पन्नाः प्रत्येकं **त्रींस्त्रीन् वैश्यायां द्वौ द्वौ शूद्रायामेकमेकमिति** । **क्षत्रजाः** क्षत्रियेणोत्पन्नाः, 'वर्णशः' इत्यनुवर्तते; यथाक्रमं; **त्रिद्व्येकभागाः** । क्षत्रियेण क्षत्रियायामुत्पन्नाः प्रत्येकं त्रींस्त्रीन्, वैश्यायां द्वौ द्वौ, शूद्रायामेकमेकम् । **विड्जाः** वैश्येनोत्पन्नाः । अत्रापि 'वर्णश' इत्यनुवर्तते, यथाक्रमं **द्व्येकभागिनः** । वैश्येन वैश्यायामुत्पन्नाः प्रत्येकं द्वौ द्वौ भागौ लभन्ते । शूद्रायामेकमेकम् । 'शूद्रस्यैकैव भार्या' इति भिन्नजातीयपुत्राभावात्तत्पुत्राणां पूर्वोक्त एव विभागः; यद्यपि 'चतुस्त्रिद्व्येकभागा' इत्यविशेषेणोक्तं, तथापि प्रतिग्रहप्राप्तभूव्यतिरिक्तविषयमिदं द्रष्टव्यम् । यतः स्मरन्ति—'न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै । यद्यप्येषा पिता दद्यान्मृते विप्रासुतो हरेत् ॥' इति । प्रतिग्रहग्रहणात्क्रयादिना लब्धा भूः क्षत्रियादिसुतानामपि भवत्येव । शूद्रापुत्रस्य विशेषप्रतिषेधाच्च । 'शूद्र्यां द्विजातिभिर्जातो न भूमेर्भागमर्हति' इति । यदि क्रयादिप्राप्ता भूः क्षत्रियादिसुतानां न भवेत्तदा शूद्रापुत्रस्य विशेषप्रतिषेधो नोपपद्यते । यत्पुनः (मनुः९।१५५)—'ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक् । यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत् ॥' इति, तदपि जीवता पित्रा यदि शूद्रापुत्राय किमपि दत्तं स्यात्तद्विषयम् । यदा तु प्रसाददानं नास्ति, तदैकांशभागित्यविरुद्धम् ॥१२५॥

अथ सर्वविभागशेषे किंचिदुच्यते—

**अन्योन्यापहृतं द्रव्यं[4] विभक्ते यत्तु[5] दृश्यते ।**
**तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः ॥ १२६ ॥**

परस्परापहृतं समुदायद्रव्यं विभागकाले चाज्ञातं[6] विभक्ते पितृधने यद्दृश्यते, तत्समैरंशैर्विभजेरन्नित्येवं स्थितिः शास्त्रमर्यादा । अत्र 'समैरंशैः' इति

टिप्प०—1 तत्र 'वर्ण'शब्दस्य नियतपुंस्त्वेनात्र स्त्रीपु लक्षणायां 'अपि'पदस्यैव स्त्रीकारात्-बा० ।

पाठा०—१ विड्जौ तु द्वयेकभागिनौ A. २ वर्णास्त्रय उच्यन्ते ग. घ. ३ त्पन्ना एकैकशश्चतुस्त्रि ग. ४ प्रत्तं ग. ५ यदि दृश्यते A. ६ वा ज्ञातं ख. च ज्ञातं ग.

वदतोद्धारविभागो निषिद्धः। विभजेरन्निति वदता येन दृश्यते तेनैव न ... दर्शितम्। एवं च वचनस्यार्थवत्त्वान्न समुदायद्रव्यापहारे दोषाभावपर... मनुना ज्येष्ठस्यैव समुदायद्रव्यापहारे दोषो दर्शितो न कनीयसाम् (९।२१३) '[1]यो ज्येष्ठो विनिकुर्वीत लोभाद्भ्रातॄन्यवीयसः। सोऽज्येष्ठः स्या... नियन्तव्यश्च राजभिः ॥' इति[2] वचनात्। नैतत्; यतः संभावित... पितृस्थानीयस्य ज्येष्ठस्यापि दोषं वदता ज्येष्ठपरतन्त्राणां कनीयसां पु... यानां दण्डापूपिकनीत्या सुतरां दोषो दर्शित एव। तथा चाविशेषेण... श्रूयते। गौतमः—'यो वै भागिनं भागान्नुदते चयते चैनं स यदि चैनं ... तेऽथ पुत्रमथ पौत्रं चयत' इति। यो भागिनं भागार्हं भागान्नुदते भाग... रोति भागं तस्मै न प्रयच्छति, स भागान्नुन्न एनं नोत्तारं[2] चयते नाशयति ... करोति; यदि तं न नाशयति, तदा तस्य पुत्रं पौत्रं वा नाशयतीति, ज्ये... मन्तरेणैव साधारणद्रव्यापहारिणो दोषः श्रुतः[3]। अथ साधारणं द्रव्यमा... स्वं भवतीति स्वत्वबुद्ध्या गृह्यमाणं न दोषमावहतीति मतम्। तदसत्, ... गृहीतेऽप्यवर्जनीयतया परस्वमपि गृहीतमेवेति निषेधानुप्रवेशाद्दोषमाव... यथा मौद्गे चरौ विपन्ने सदृशतया माषेषु गृह्यमाणेषु 'अयज्ञिया वै मा... निषेधो न प्रविशति, मुद्गावयवबुद्ध्या गृह्यमाणत्वादिति पूर्वपक्षिणोक्ते मु... गृह्यमाणेष्ववर्जनीयतया माषावयवा अपि गृह्यन्त एवेति निषेधः प्रवि... राद्धान्तिनोक्तम्। तस्माद्वचनतो न्यायतश्च साधारणद्रव्यापहारे दोषो... सिद्धम् ॥ १२६ ॥

द्व्यामुष्यायणस्य भागविशेषं दर्शयंस्तस्य स्वरूपमाह—

**अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः।**
**उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ १२...**

'अपुत्रां गुर्वनुज्ञातः' (आ० ६८) इत्याद्युक्तविधिना **अपुत्रेण** दे... **परक्षेत्रे** परभार्यायां गुरु**नियोगेनोत्पादितः पुत्रः उभयो**र्बीजिक्षेत्रि... **रिक्थी** रिक्थहारी **पिण्डदाता च धर्मत** इति। अस्यार्थः— नियुक्तो देवरादिः स्वयमप्यपुत्रोऽपुत्रस्य[4] क्षेत्रे स्वपरपुत्रार्थं प्रवृत्तो यं जन... द्विपितृको द्व्यामुष्यायणो द्वयोरपि रिक्थहारी पिण्डदाता च। यदा तु ... पुत्रवान् केवलं क्षेत्रिणः पुत्रार्थं प्रयतते[5], तदा तदुत्पन्नः क्षेत्रिण एव पुत्रो ...

**टिप्प०—1** 'मौद्गं चरुं निर्वपेत्' इति विहितमुद्गाभावे प्रतिनिधित्वेन माषा... न वेति संशयः। 'अयज्ञिया वै माषाश्चणकाः कोद्रवाः' इति श्रूयते। तेन ... माषजातिर्निषिध्यते; अतो मुद्गावयवबुद्ध्या गृह्यमाणेष्वपि माषेष्ववर्जनीयतया ... माषजातीयावयवा अपि गृह्यन्त एवेति निषेधशास्त्रप्रवेशोऽस्तीत्यस्याशयः।

**पाठा०—१** यो लोभाद्विनिकुर्वीत. **२** चोत्तारं क. **३** श्रूयते घ. **४** ...रस्य घ. **५** प्रवर्तते घ.

बीजिनः । स च न नियमेन बीजिनो रिक्थहारी पिण्डदो वेति [1] । यथोक्तं मनुना (९।५३)—'क्रियाभ्युपगमात्क्षेत्रं बीजार्थं यत्प्रदीयते । तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥' इति । क्रियाभ्युपगमादिति अत्रोत्पन्नमपत्यमावयोरुभयोरपि भवत्विति संविदङ्गीकरणाद्यत्क्षेत्रं [2] क्षेत्रस्वामिना बीजावपनार्थं [3] बीजिने दीयते तत्र तस्मिन्क्षेत्रे उत्पन्नस्यापत्यस्य बीजिक्षेत्रिणौ भागिनौ स्वामिनौ दृष्टौ महर्षिभिः । तथा (मनुः ९।५२)—'फलं त्वनभिसंधाय क्षेत्रिणां बीजिनां तथा । प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसी ॥' इति । फलं त्वनभिसंधायेति । अत्रोत्पन्नमपत्यमावयोरुभयोरस्त्वित्येवमनभिसंधाय परक्षेत्रे यदपत्यमुत्पाद्यते तदपत्यं क्षेत्रिण एव । यतो बीजाद्योनिर्बलीयसी; गवाश्वादिषु तथा दर्शनात् । अत्रापि नियोगो [4] वाग्दत्ताविषय एव; इतरस्य नियोगस्य मनुना निषिद्धत्वात् (९।५९,६०)—'देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया । प्रजेप्सिताऽधिगन्तव्या सन्तानस्य परिक्षये ॥ विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि । एकमुत्पादयेत्पुत्रं न द्वितीयं कथंचन ॥' इत्येवं नियोगमुपन्यस्य स्वयमेव निषेधति (९।६४,६८)—'नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः । अन्यस्मिन्हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥ नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् । न विवाहविधावुक्तं विधवावेदनं पुनः ॥ अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः । मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥ स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा । वर्णानां संकरं चक्रे कामोपहतचेतनः ॥ ततः प्रभृति यो मोहात्प्रमीतपतिकां स्त्रियम् । नियोजयत्यपत्यार्थे गर्हन्ते [5] तं हि साधवः ॥' इति ॥ नच विहितप्रतिषिद्धत्वाद्विकल्प इति मन्तव्यम्; नियोक्तॄणां निन्दाश्रवणात्, स्त्रीधर्मेषु व्यभिचारस्य बहुदोषश्रवणात्, संयमस्य प्रशस्तत्वाच्च । यथाह मनुरेव (५।१५७)—'कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः । न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु ॥' इति जीवनार्थं पुरुषान्तराश्रयणं प्रतिषिद्ध्य (मनुः ५।१५८।१६१)—'आसीतामरणात्क्षान्ता नियता ब्रह्मचारिणी । यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥ अनेकानि सहस्राणि कौमारब्रह्मचारिणाम् । दिवं गतानि विप्राणामकृत्वा कुलसंततिम् ॥ मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥ अपत्यलोभाया तु स्त्री भर्तारमतिवर्तते । सेह निन्दामवाप्नोति परलोकाच्च हीयते ॥' इति पुत्रार्थमपि पुरुषान्तराश्रयणं निषेधति । तस्माद्विहितप्रतिषिद्धत्वाद्विकल्प इति न युक्तम् ॥ एवं विवाहसंस्कृतानियोगे प्रतिषिद्धे कस्तर्हि धर्म्यो नियोग इत्यत आह (मनुः ९।६९।७०)—'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः ॥ यथाविध्यधिगम्यैनां [6] शुक्लवस्त्रां शुचिव्रताम् । मिथो भजेताप्रसवात्सकृत्सकृदृतावृतौ ॥' इति ।

---

पाठा०—१ पिण्डदाता च ग. २ करणेन यत्क्षेत्रं. ३ बीजवापनार्थं ग. ४ यथानियोगो. घ. ५ तं विगर्हन्ति–मनुः. ६ विध्यभिगम्यैनां ख.

यस्मै वाग्दत्ता कन्या स प्रतिग्रहमन्तरेणैव तस्याः पतिरित्यस्मादेव व
गम्यते । तस्मिन्प्रेते देवरस्तस्य ज्येष्ठः कनिष्ठो वा निजः सोदरो विन्दे
णयेत् । यथाविधि यथाशास्त्रमधिगम्य परिणीय अनेन विधानेन घृता
ङ्गियमादिना शुक्लवस्त्रां शुचिव्रतां मनोवाक्कायसंयतां मिथो रह
ग्रहणात्प्रत्यृत्वेकवारं गच्छेत् । अयं च विवाहो वाचनिको घृताभ्य
मवत्, नियुक्ताभिगमनाङ्गमिति न देवरस्य; भार्यात्वमापादयति । अत
मपत्यं क्षेत्रस्वामिन एव भवति, न देवरस्य संविदा तूभयोरपि ॥ १२७॥

समानासमानजातीयानां पुत्राणां विभागक्लृप्तिरुक्ता, अधुना मुख्यगौ
दायग्रहणव्यवस्थां दर्शयिष्यंस्तेषां स्वरूपं तावदाह—

**औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।**
**क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥ १२८ ॥**

उरसो जात **औरसः** पुत्रः, स च **धर्मपत्नीजः**—सवर्णा धर्मविवाहो
पत्नी, तस्यां जात औरसः पुत्रो मुख्यः । **तत्समः पुत्रिकासुतः** तत्सम
ससमः, पुत्रिकायाः सुतः पुत्रिकासुतः । अत **एवौरससमः** । यथाह
'अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् । अस्यां यो जायते पुत्रः स
भवेदिति ॥' इति । अथवा पुत्रिकैव सुतः पुत्रिकासुतः; सोऽप्यौरससम ए
वयवानामल्पत्वात्, मात्रवयवानां बाहुल्याच्च; यथाह वसिष्ठः (१७।
'तृतीयः पुत्रिकैव' इति । तृतीयः पुत्रः पुत्रिकैवेत्यर्थः । द्यामुष्यायणस्तु
स्यौरसादपकृष्टः[1]; अन्यक्षेत्रोत्पन्नत्वात् । '**क्षेत्रजः क्षेत्रजातस्तु सगो**
**रेण वा** । इतरेण **सपिण्डेन** देवरेण **वोत्पन्नः** पुत्रः **क्षेत्रजः** ॥ १२

**गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।**
**कानीनः कन्यकाजातो मातामहसुतो मतः ॥ १२**

**गूढजः पुत्रो** भर्तृगृहे **प्रच्छन्न उत्पन्नो** हीनाधिकजातीयपुरुषजत
रेण पुरुषविशेषजत्वनिश्चयाभावेऽपि सवर्णजत्वनिश्चये सति बोद्धव्यः ।
**नस्तु कन्यकायामुत्पन्नः** पूर्ववत्सवर्णात्स **मातामहस्य पुत्रः** ।
सा भवेत्तथा पितृगृह एव संस्थिता, अथोढा तदा वोढुरेव पुत्रः । यथा
( ९।१७२ )—'पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः[1] । तं कानीनं व
वोढुः[2] कन्यासमुद्भवम् ॥' इति ॥ १२९ ॥

**अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः ।**
**दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥ १३**

**पौनर्भवस्तु** पुत्रोऽ**क्षतायां क्षतायां वा** पुनर्भ्वां सवर्णादुत्प

---

टिप्प०—1 रहः अप्रकाशम्. 2 वोढुः कन्यापरिणेतुः.

---

पाठा०—१ स्यौरसान्निकृष्टो घ.

[मा]त्रा भर्त्रनुज्ञया प्रोषिते प्रेते वा भर्तरि पित्रा वोभाभ्यां वा सवर्णाय **यस्मै** [दी]यते, **स** तस्य **दत्तकः पुत्रः** । यथाह मनुः ( ९।१६८ )—'माता पिता [वा] दद्यातां यमद्भिः पुत्रमापदि । सदृशं[2] प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ॥' [इति]। आपद्ग्रहणादनापदि न देयः; दातुरयं प्रतिषेधः। तथा एकपुत्रो न देयः। ['न त्]वेवैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा' (१५।३) इति वसिष्ठस्मरणात् । तथाऽनेक-[पुत्र]सद्भावेऽपि ज्येष्ठो न देयः। 'ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः' [म]नुः ९।१०६ )—इति तस्यैव पुत्रकार्यकरणे मुख्यत्वात् । पुत्रप्रतिग्रहप्रकारश्च [पु]त्रं प्रतिग्रहीष्यन्बन्धूनाहूय राजनि चावेद्य निवेशनमध्ये व्याहृतिभिर्हुत्वा [अदू]रबान्धवं बन्धुसंनिकृष्ट एव प्रतिगृह्णीयात्' इति वसिष्ठेनोक्तः । 'अदूरबा-[न्धव]म्' इत्यत्यन्तदेशभाषाविप्रकृष्टस्य प्रतिषेधः[1] । एवं क्रीतस्वयंदत्तकृत्रिमेष्वपि [योज]नीयम्; समानन्यायत्वात् ॥ १३० ॥

**क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयंकृतः ।**
**दत्तात्मा तु स्वयंदत्तो गर्भे[2] विन्नः सहोढजः ॥ १३१ ॥**

**क्रीतस्तु पुत्रस्ताभ्यां** मातापितृभ्यां मात्रा पित्रा वा **विक्रीतः** पूर्ववत्, [एक]ं पुत्रं ज्येष्ठं च वर्जयित्वा आपदि सवर्ण इत्येव । यत्तु मनुनोक्तम् (९।१७४)-['क्री]णीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् । स क्रीतकः सुतस्तस्य सदृशोऽसदृशो-[ऽपि] वा ॥' इति, तद्गुणैः सदृशोऽसदृशो वेति व्याख्येयं, न जात्या; 'सजातीयेष्वयं [प्रो]क्तस्तनयेषु' (व्य०१३३) इत्युपसंहारात् । **कृत्रिमः स्यात्स्वयंकृतः** । कृत्रि-[मस्]तु पुत्रः स्वयं पुत्रार्थिना धनक्षेत्रप्रदर्शनादिप्रलोभनैः[3] पुत्रीकृतो मातापितृविहीनः [तत्स]द्भावे तत्परतन्त्रत्वात् । **दत्तात्मा तु** पुत्रो यो मातापितृविहीनस्ताभ्यां [त्यक्त]ो वा तवाहं पुत्रो भवामीति **स्वयंदत्तत्व**[3][4]मुपगतः । **सहोढजस्तु**[4] **गर्भे** [वि]न्नतो गर्भिण्यां परिणीतायां यः परिणीतः स वोढुः पुत्रः ॥ १३१ ॥

**उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः ।**

**अपविद्धो** मातापितृभ्या**मुत्सृष्टो यो गृह्यते, स** ग्रहीतुः पुत्रः सर्वत्र [सवर्]णे इत्येव ॥–

---

टिप्प०—1 'वा'शब्दान्मात्रभावे पितैव दद्यात् । पित्रभावे मातैव । उभयसत्त्वे [उ]भावपीति **मदनः**. 2 सदृशं कुलगुणादिभिर्न जात्येति **मेधातिथिः**, सदृशं [जा]त्येति **कुल्लूकः**. 3 स चोक्तो **मनुना** ( ९।१७७ )—'मातापितृविहीनो यस्त्यक्तो वा [स्या]दकारणात् । आत्मानं स्पर्शयेद्यस्तु **स्वयंदत्तस्तु** स स्मृतः ॥' इति । 2 सहोढोऽप्युक्तो [तेनै]व ( ९।१७३ )—'या गर्भिणी संस्क्रियते ज्ञाताऽज्ञातापि वा सती । वोढुः स [गर्भो] भवति सहोढ इति चोच्यते ॥' इति ।

---

**पाठा०—१ निषेधः घ. २ गर्भे भिन्नः ख. घ. ३ प्रलोभन ग [४] स्वयंदत्त उपनतः** B; **ग. घ.**

एवं मुख्यामुख्यपुत्राननुक्रम्यैतेषां दायग्रहणे क्रममाह—

**पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः ॥ १३२ ॥**

**एतेषां** पूर्वोक्तानां पुत्राणां द्वादशानां **पूर्वस्य पूर्वस्याभावे उत्तरः श्राद्धदोंऽशहरो** धनहरो वेदितव्यः। औरसपौत्रिकेयसमवाये औरसस्यैव धनग्रहणे प्राप्ते मनुरपवादमाह (९।१३४)—'पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते। समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः॥' इति। अन्येषामपि पूर्वस्मिन्पूर्वस्मिन्सत्यप्युत्तरेषां पुत्राणां चतुर्थांशभागित्वमुक्तं वसिष्ठेन। 'तस्मिंश्चेत्प्रतिगृहीते औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तकः' इति। 'दत्तक'ग्रहणं क्रीतकृत्रिमादीनां प्रदर्शनार्थम्; पुत्रीकरणाविशेषात्। तथा च कात्यायनः—'उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः। सवर्णा असवर्णास्तु ग्रासाच्छादनभाजनाः॥' इति। सवर्णा दत्तकक्षेत्रजादयस्ते सत्यौरसे चतुर्थांशहराः। असवर्णाः कानीनगूढोत्पन्नसहोढजपौनर्भवास्ते त्वौरसे सति न चतुर्थांशहराः, किंतु ग्रासाच्छादनभाजनाः। यदपि विष्णुवचनम्—'अप्रशस्ताः कानीनगूढोत्पन्नसहोढजाः। पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिनः॥' इदानीं तदप्यौरसे सति चतुर्थांशनिषेधपरमेव; औरसाद्यभावे तु कानीनादीनामपि पित्र्यधनग्रहणमस्त्येव। 'पूर्वाभावे परः परः' इति वचनात्॥ यदपि मनुना (९।१६३)—'एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः। शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम्॥' इति, तदपि दत्तकादीनामौरसप्रतिकूलत्वे निर्गुणत्वे च वेदितव्यम्। तत्र क्षेत्रजस्य विशेषो दर्शितस्तेनैव (मनुः ९।१६४)—'षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात्। औरसो विभजन्दायं पित्र्यं पञ्चममेव वा॥' इति प्रतिकूलत्वनिर्गुणत्वसमुच्चये षष्ठमंशम्, एकतरसद्भावे पञ्चममिति मन्तव्यम्॥ यदपि मनुना पुत्राणां षट्कद्वयमुपन्यस्य पूर्वषट्कस्य दायादबान्धवत्वमुक्तम्, उत्तरषट्कस्यादायादबान्धवत्वमुक्तम् (मनुः ९।१५९।१६०)—'औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट्॥ कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः॥' इति, तदपि स्वपितृसपिण्डसमानोदकानां संनिहितरिक्थहरान्तराभावे पूर्वषट्कस्य तद्रिक्थहरत्वम्, उत्तरषट्कस्य तु तन्नास्ति। बान्धवत्वं पुनः समानगोत्रत्वेन सपिण्डत्वेन चोदकप्रदानादिकार्यकरत्वं वर्गद्वयस्यापि सममेवेति ...

---

**टिप्प०**—1 तृतीयांशहरा इति—कल्पतरुः। 2 आपस्तम्बधर्मविवृतौ तु ... न्तरवाक्यं—'औरसः पुत्रिका बीजक्षेत्रजौ पुत्रिकासुतः। पौनर्भवश्च कानीनः ... गूढसंभवः॥ दत्तः क्रीतः स्वयंदत्तः कृत्रिमश्चापविद्धकः। यत्रकचोत्पादितश्च ... दश पञ्च च॥' इत्युक्तम्।

---

**पाठा०**—१ चतुर्थांश ग. घ.

म् ॥ ( मनुः ९।१४२ )—'गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः । गोत्ररि[1]क्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥' इत्यत्र 'दत्रिम'ग्रहणस्य पुत्रप्रतिनिधिप्रदर्शनार्थत्वात् । पितृधनहारित्वं तु पूर्वस्य पूर्वस्याभावे सर्वेषामविशिष्टम् । (मनुः ९।१८५ )—'न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः ।' इत्यौरसव्यतिरिक्तानां पुत्रप्रतिनिधीनां सर्वेषां रिक्थहारित्वप्रतिपादनपरत्वात् । औरसस्य ( मनुः ९।१३६ )—'एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ।' इत्यनेनैव कृत्स्नधनभाक्त्वस्योक्तत्वात् । 'दायाद'शब्दस्य 'दायादानपि दापयेत्' इत्यादौ पुत्रव्यतिरिक्तरिक्थभाग्विषयत्वेन प्रसिद्धत्वाच्च । वासिष्ठादिषु वर्गद्वयेऽपि कस्यचिद्व्यत्ययेन पाठो गुणवदगुणवद्विषयो वेदितव्यः । गौतमीये तु 'पौत्रिके ऽस्य दशमस्थाने पाठो विजातीयविषयः । तस्मात्स्थितमेतत्पूर्वपूर्वाभावे परः परोंऽशभागिति ॥ यत्तु ( ९।१८२ )—'भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् । सर्वे[1] ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥' इति, तदपि भ्रातृपुत्रस्य पुत्रीकरणसंभवेऽन्येषां पुत्रीकरणनिषेधार्थम्, न पुनः पुत्रत्वप्रतिपादनाय । 'तत्सुता गोत्रजा बन्धुः–' ( व्य० १३५) इत्यनेन विरोधात् ॥ १३२ ॥

इदानीमुक्तोपसंहारव्याजेन तत्रैव नियममाह—

## सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ।

**समानजातीयेष्वेव पुत्रेषु अयं** 'पूर्वाभावे परः पर' इत्युक्तो **विधिः**, न भिन्नजातीयेषु । तत्र च कानीनगूढोत्पन्नसहोढजपौनर्भवाणां सवर्णत्वं जनकद्वारेण, न स्वरूपेण[2]; तेषां वर्णजातिलक्षणाभावस्योक्तत्वात् । तथानुलोमजानां मूर्धावसिक्तादीनामौरसेष्वन्तर्भावात्तेषामप्यभावे क्षेत्रजादीनां दायहरत्वं बोद्धव्यम् । शूद्रापुत्रस्त्वौरसोऽपि कृत्स्नं भागमन्याभावेऽपि न लभते । यथाह मनुः (९।१५४) —'यद्यपि स्यात्तु सत्पुत्रो यद्यपुत्रोऽपि[3] वा भवेत् । नाधिकं दशमाद्द्याच्छूद्रापुत्राय धर्मतः ॥' इति । यदि सत्पुत्रो विद्यमानद्विजातिपुत्रो यद्यपुत्रोऽविद्यमानद्विजातिपुत्रो वा स्यात्तस्मिन्मृते क्षेत्रजादिर्वाऽन्यो वा सपिण्डः शूद्रापुत्राय तद्धनादृशमांशादधिकं न दद्यादित्यस्मादेव क्षत्रियावैश्यापुत्रयोः सवर्णापुत्राभावे कृत्स्नधनग्रहणं गम्यते ॥

टिप्प०—1 गोत्रेति गोत्ररिक्थे अनुगच्छतीति गोत्ररिक्थानुगः; प्रायस्तत्समनियत यावत् । दत्रिमः केवलः द्व्यामुष्यायणे गोत्राद्यनुवृत्तेः । पिण्डः श्राद्धमौर्ध्वदेहिकादीति मेधातिथिकुल्लूकभट्टादयः । पिण्डः सापिण्ड्यं, स्वधौर्ध्वदेहिकश्राद्धादीत्यपरे व्य.म. । 'दानप्रतिभुवि प्रेते' (मनुः ८।१६०) इति पूर्वार्धमस्य दानप्रतिभुवि तु पितरि मृते पुत्रैर्न ऋणं दापयेदिति तस्यार्थः ।

पाठा०—१ सर्वांस्तांस्ते. २ स्वरूपद्वारेण ग. ३ यद्यसत्पुत्रोऽपि वा भवेत्.

अधुना शूद्रधनविभागे विशेषमाह—

**जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत् ॥ १३३ ॥**
**मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम् ।**
**अभ्रातृको हरेत्सर्वं दुहितॄणां सुतादृते ॥ १३४ ॥**

**शूद्रेण दास्यामुत्पन्नः** पुत्रः **कामतः** पितुरिच्छया भागं लभते। पितु**रूर्ध्वं** तु यदि परिणीतापुत्राः सन्ति तदा ते **भ्रातरस्तं** दासीपुत्रं**मर्धभागिनं कुर्युः**, स्वभागादर्धं दद्युरित्यर्थः । अथ **परिणीतापुत्रा न** सन्ति तदा **कृत्स्नं** धनं **दासीपुत्रो गृह्णीयात्** यदि परिणीतादुहितरस्तत्पुत्रा वा न सन्ति। तत्सद्भावे त्वर्धभागिक एव दासीपुत्रः । अत्र च 'शूद्र'ग्रहणाद्विजातिना दास्यामुत्पन्नः पितुरिच्छयाऽप्यंशं न लभते नाप्यर्धं, दुहितर एव कृत्स्नम्। किंत्वानुकूल्ये जीवनमात्रं लभते ॥ १३३–१३४ ॥

मुख्यगौणसुता दायं गृह्णन्तीति निरूपितम्, तेषामभावे सर्वेषां दायहरक्रम उच्यते—

**पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।**
**तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः ॥ १३५ ॥**
**एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ।**
**स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः ॥ १३६ ॥**

पूर्वोक्ता द्वादशपुत्रा यस्य न सन्ति असावपुत्रः, तस्यापुत्रस्य स्वर्यातस्य परलोकं गतस्य धनभाक् धनग्राही एषां पत्न्यादीनामनुक्रान्तानां मध्ये पूर्वस्याभाव उत्तर उत्तरो धनभागिति संबन्धः । सर्वेषु मूर्धावसिक्तादिष्वनुलोमजेषु सूतादिषु प्रतिलोमजेषु वर्णेषु च ब्राह्मणादिषु अयं दायग्रहणविधिर्धनग्रहणक्रमो वेदितव्यः । तत्र प्रथमं पत्नी धनभाक् । पत्नी विवाहसंस्कृता 'पत्युर्नो यज्ञसंयोगे' (अ० ४।१ ३३) इति स्मरणात् । एकवचनं च जातिपरम्। ताश्च बह्वयश्चेत्सजातीया विजातीयाश्च तदा यथांशं विभज्य धनं गृह्णन्ति। मनुरपि पत्न्याः समग्रधनसंबन्धं वक्ति—'अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता । पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च ॥' इति । वृद्धविष्णुरपि— 'अपुत्रधनं पत्न्यभिगामि, तदभावे दुहितृगामि, तदभावे पितृगामि, तदभावे मातृगामि' इति । कात्यायनोऽपि—'पत्नी पत्युर्धनहरी या स्यादव्यभिचारिणी।

पाठा०—१ विभागेऽपि ग. २ धनं गृह्णीयात् ग. घ. ३ कृत्स्नं धनं दूरत एव क. ४ बन्धुशिष्याः सब्रह्म ख. ५ दिष्वनुलोमजेषु सूतादिषु प्रतिलोमजेषु ब्राह्मणादिषु अयं ग. ६ भाक् विवाह ग. घ. ७ यथा ख. ८ धनग्रहणं घ.

तदभावे तु दुहिता यद्यनूढा भवेत्तदा ॥' इति । तथा 'अपुत्रस्याथ[1] कुलजा पत्नी
दुहितरोऽपि वा । तदभावे पिता माता भ्रातापुत्राश्च कीर्तिताः ॥' इति । वृद्ध-
मनुरपि ( वृद्ध. २५।४८ )—'कुल्येषु विद्यमानेषु पितृभ्रातृसनाभिषु । असुतस्य
प्रमीतस्य पत्नी तद्भागहारिणी ॥' एतद्विरुद्धानीव[2] वाक्यानि लक्ष्यन्ते ( ना० १३।-
२५-२६ )—'भ्रातृणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा । विभजेरन्धनं तस्य
शेषास्ते स्त्रीधनं विना ॥ भरणं चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात् । रक्षन्ति
शय्यां भर्तुश्चेदाच्छिद्युरितरासु तु ॥' इति पत्नीसद्भावेऽपि भ्रातृणां धनग्रहणं
स्त्रीणां च भरणमात्रं नारदेनोक्तम् । मनुना तु ( ९।१८५ )—'पिता हरेदपुत्रस्य
रिक्थं भ्रातर एव वा' इत्यपुत्रस्य धनं पितुर्भ्रातुर्वेति दर्शितम् । तथा ( मनुः ९।-
२१७ )—'अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् । मातर्यपि च वृत्तायां पितु-
र्माता हरेद्धनम् ॥' इति मातुः पितामह्याश्च धनसंबन्धो दर्शितः । शङ्खेनापि—
'स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नी'
इति भ्रातृणां पित्रोर्ज्येष्ठायाश्च पत्न्याः क्रमेण धनसंबन्धो दर्शितः । कात्यायने-
नापि—'विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत् । भ्राता वा जननी वाऽथ
माता वा तत्पितुः क्रमात् ॥' इत्येवमादीनां विरुद्धार्थानां वाक्यानां धारेश्वरेण
व्यवस्था दर्शिता—'पत्नी गृह्णीयात्' इत्येतद्वचनजातं विभक्तभ्रातृस्त्रीविषयम् ।
सा च यदि नियोगार्थिनी भवति । कुत एतत् नियोगसव्यपेक्षायाः पत्न्या धनग्रहणं
न स्वतन्त्रायां इति । 'पिता हरेदपुत्रस्य' ( मनुः ९।१८५ ) इत्यादिवचनात्तत्र
व्यवस्थाकारणं वक्तव्यम् । नान्यद्व्यवस्थाकारणमस्ति इति गौतमवचनाच्च ( २९।-
६ ) 'पिण्डगोत्रर्षिसंबन्धा रिक्थं भजेरन् स्त्री वाऽनपत्यस्य बीजं लिप्सेत'
इति । अस्यार्थः—पिण्डगोत्रर्षिसंबन्धा अनपत्यस्य रिक्थं भजेरन्स्त्री वा रिक्थं
भजेत् यदि बीजं लिप्सेतेति । मनुरपि ( ९।१४६ )—धनं यो बिभृयाद्भ्रातुर्मृतस्य
स्त्रियमेव वा । सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम् ॥' इति । अनेनैतद्दर्श-
यति विभक्तधनेऽपि भ्रातर्युपरतेऽपत्यद्वारेणैव पत्न्या धनसंबन्धो नान्यथेति ।
तथाऽविभक्तधनेऽपि ( मनुः ९।१२० )—'कनीयाञ्ज्येष्ठभार्यायां पुत्रमुत्पादये-
द्यदि । समस्तत्र विभागः स्यादिति धर्मो व्यवस्थितः ॥' इति । तथा वसिष्ठोऽपि
( १७।४८ ) 'रिक्थलोभान्नास्ति नियोगः' इति रिक्थलोभान्नियोगं प्रतिषेधयन्
नियोगद्वारक एव पत्न्याः धनसंबन्धो नान्यथेति दर्शयति । नियोगाभावेऽपि
पत्न्या भरणमात्रमेव नारदवचनात् 'भरणं चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात्'
इति । योगीश्वरेणापि किल वक्ष्यते (व्य० १४२)—'अपुत्रा योषितश्चैषां भर्तव्याः
साधुवृत्तयः । निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥' इति । अपि च,
यज्ञार्थं धनस्य यथार्थत्वात्स्त्रीणां च यज्ञेऽनधिकाराद्धनग्रहणमयुक्तम् । यथा च
केनापि स्मृतम्—'यज्ञार्थं द्रव्यमुत्पन्नं तत्रानधिकृतास्तु ये । अरिक्थभाजस्ते सर्वे
ग्रासाच्छादनभाजनाः ॥ यज्ञार्थं विहितं वित्तं तस्मात्तद्विनियोजयेत् । स्थानेषु धर्म-

पाठा०—१ स्यार्यकुलजा क. ख. २ विरुद्धानि च वाक्यानीह ग.

जुष्टेषु न स्त्रीमूर्खविधर्मिषु ॥' इति,–तदनुपपन्नम्; 'पत्नी दुहितरः' (व्य०
इत्यत्र नियोगस्याप्रतीतेरप्रस्तुतत्वाच्च । अपि चेदमत्र वक्तव्यम्,–पत्न्याः
नियोगो वा निमित्तं तदुत्पन्नमपत्यं वा । तत्र नियोगस्यैव निमित्तत्वे
पुत्राया अपि धनसंबन्धः प्राप्नोति । उत्पन्नस्य च पुत्रस्य धनसंबन्धो न
अथ तदपत्यस्यैव निमित्तत्वं, तथा सति पुत्रस्यैव धनसंबन्धात्पत्नीति नारब्ध

अथ स्त्रीणां पतिद्वारको धनसंबन्धः पुत्रद्वारको वा नान्यथेति मतम्,
प्यसत्; (मनुः ९।१९४)—'अध्यग्न्यध्यावाहनिकं दत्तं च प्रीति
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥' इत्यादिविरोधात् । किंच,
पुत्राभावे 'पत्नी दुहितरः' इत्यारब्धम् । तत्र नियुक्ताया धनसंबन्धं वद
जस्यैव धनसंबन्धं उक्तो भवति । स च प्रागेवाभिहित इति 'अपुत्रप्रकरणे
नारब्धव्यम् । अथ पिण्डगोत्रर्षिसंबन्धा रिक्थं भजेरन्स्त्री वाऽनपत्य
लिप्सेत' (गौ० २९।५) इति गौतमवचनान्नियुक्ताया धनसंबन्ध इति,
प्यसत्,–नहि यदि बीजं लिप्सेत तदाऽनपत्यस्य स्त्री धनं गृह्णीयादिति
ऽस्मात्प्रतीयते । किंतु 'अनपत्यस्य धनं पिण्डगोत्रर्षिसंबन्धा भजेरन्स्त्री
स्त्री बीजं वा लिप्सेत संयता वा भवेत्' इति तस्या धर्मान्तरोपदेशः; 'वा'
पक्षान्तरवचनत्वेन यद्यर्थाप्रतीतेः । अपि च संयताया एव धनग्रहणं
नियुक्तायाः स्मृतिलोकनिन्दितायाः । 'अपुत्रा शयनं भर्तुः पालय
स्थिता । पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च ॥' इति संयताया ए
ग्रहणमुक्तम् ॥

तथा नियोगश्च निन्दितो मनुना (९।६४)—'नान्यस्मिन्विधवा नारी
क्तव्या द्विजातिभिः । अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥' इ
यत्तु वसिष्ठवचनम् (१७।६५) 'रिक्थलोभान्नास्ति नियोगः' इति, त
संसृष्टिनि वा भर्तरि प्रेते तस्या धनसंबन्धो नास्तीति स्वापत्यस्य धन
नियोगो न कर्तव्य इति व्याख्येयम् । यदपि नारदवचनम् (१३।२६)
चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात्' इति, तदपि 'संसृष्टानां[3] तु यो भाग
स इष्यते' इति संसृष्टानां[3] प्रस्तुतत्वात्तत्स्त्रीणामनपत्यानां भरणमात्रप्र
परम् । नच 'भ्रातॄणामप्रजाः प्रेयात्' (ना० १३।२४) इत्येतस्य संसृष्टि
'संसृष्टानां[3] तु यो भाग' (ना० १३।२४) इत्यनेन पौनरुक्त्यमाशङ्क
यतः पूर्वोक्तविवरणेन स्त्रीधनस्याविभाज्यत्वं तत्स्त्रीणां च भरणमात्रं वि
यदपि 'अपुत्रा योषितश्चैषाम्' (व्य० १४०) इत्यादिवचनं, तत् क्लीबा
षयमिति वक्ष्यते[4] । यत्तु 'द्विजातिधनस्य यज्ञार्थत्वात्स्त्रीणां च यज्ञेऽनधि
ग्रहणमयुक्त'मिति,–तदसत्; सर्वस्य द्रव्यजातस्य यज्ञार्थत्वे दानहोमादि
अथ यज्ञशब्दस्य धर्मोपलक्षणत्वाद्दानहोमादीनामपि धर्मत्वात्तदर्थत्वमि

पाठा०—१ संबन्धो युक्तो घ. २ सा बीजं वा घ. ३ संसृष्टिनां
४ वक्ष्यति घ.

णम् । एवं तर्ह्यर्थकामयोर्धनसाध्ययोरसिद्धिरेव स्यात् । तथा सति 'धर्मार्थका-मान्स्वे काले यथाशक्ति न हापयेत्' (आ० ११५) । तथा 'न पूर्वाह्णमध्यन्दिनापरा-ह्णानफलान्कुर्याद्यथाशक्ति धर्मार्थकामेभ्यः' (गौ० ९।२४)। तथा 'न तथैतानि शक्यन्ते संनियन्तुमसेवया' (मनुः २।९६) इत्यादियाज्ञवल्क्यगौतममनुवचन-विरोधः । अपि च धनस्य यज्ञार्थत्वे 'हिरण्यं[1] धार्यम्' इति हिरण्यसाधारणस्य धर्मार्थतानिराकरणेन पुरुषार्थत्वमुक्तं तत्प्रत्युद्धृतं स्यात् । किंच यज्ञशब्दस्य धर्मो-पलक्षणपरत्वे स्त्रीणामपि पूर्तधर्माधिकाराद्धनग्रहणं युक्ततरम् । यत्तु पारतन्त्र्यवचनं 'न स्त्री स्वातन्त्र्यमर्हति' (मनुः ९।३) इत्यादि तदस्तु पारतन्त्र्यं, धनस्वीकारे तु को विरोधः ॥ कथं तर्हि 'यज्ञार्थं द्रव्यमुत्पन्नम्' इत्यादिवचनम्? उच्यते—'यज्ञार्थमेवार्जितं यद्धनं तद्यज्ञ एव नियोक्तव्यं पुत्रादिभिरपी'त्येवं परं तत् ।—'यज्ञार्थं लब्धमददद्भासः काकोऽपि वा भवेत्' (आ० १२७) इति दोषश्रवणस्य चादिष्वविशेषात्[1] । यदपि कात्यायनेनोक्तम्—'अदायिकं[2] राजगामि योषिद्भृ-त्यौर्ध्वदेहिकम् । अपास्य श्रोत्रियद्रव्यं श्रोत्रियेभ्यस्तदर्पयेत् ॥' इति । अदायिकं दायादरहितं यद्धनं तद्राजगामि राज्ञो भवति, योषिद्भृत्यौर्ध्वदेहिकमपास्य, स्त्रीणामशनाच्छादनोपयुक्तं और्ध्वदेहिकं धनिनः श्राद्धाद्युपयुक्तं चापरस्य परि-शिष्टं राजगामि भवतीति संबन्धः । अस्यापवादं[3] उत्तरार्धे । श्रोत्रियद्रव्यं च योषि-द्भृत्यौर्ध्वदेहिकमपास्य 'श्रोत्रियायोपपादये'दिति, तदप्यवरुद्धस्त्रीविषयम्; योषिद्भृ-त्यपात् । नारदवचनं च (१३।५२)—'अन्यत्र ब्राह्मणात्किंतु राजा धर्मपरा-यणः । तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः ॥' इत्यवरुद्धस्त्रीविषयमेव । स्त्रीशब्दग्रहणात् । इह तु 'पत्नी'शब्दादूढायाः संयताया धनग्रहणमविरुद्धम् । तस्माद्विभक्तासंसृष्टिन्यपुत्रे स्वर्याते पत्नी धनं प्रथमं गृह्णातीत्ययमर्थः सिद्धो भवति । विभागस्योक्तत्वात्संसृष्टिनां तु वक्ष्यमाणत्वात् । एतेनाल्पधनविषयत्वं श्रीकरादि-[4]भिरुक्तं निरस्तं वेदितव्यम् । तथा ह्यौरसेषु पुत्रेषु सत्स्वपि जीवद्विभागे अजीव-द्विभागे च पत्न्याः पुत्रसमांशग्रहणमुक्तम् (व्य० ११५)—'यदि कुर्यात्समानं-शान् पत्न्यः कार्याः समांशिकाः' इति । तथा—'पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत्' इति च, तथासत्यपुत्रस्य स्वर्यातस्य धनं पत्नी भरणादतिरिक्तं न लभत इति व्यामोहमात्रम् । अथ[5] 'पत्न्यः कार्याः समांशिका' (व्य० ११५) इत्यत्र 'माताप्यंशं समं हरेत्' (व्य० १२३) इत्यत्र च जीवनोपयुक्तमेव धनं[6] स्त्री हर-तीति मतं,—तदसत्; 'अंश'शब्दस्य 'सम'शब्दस्य चानर्थक्यप्रसङ्गात् । स्यान्म-तम्—बहुधने जीवनोपयुक्तं धनं गृह्णाति अल्पे तु पुत्रांशसमांशं गृह्णातीति । तच्च विधिवैषम्यप्रसङ्गात् । तथा हि 'पत्न्यः कार्याः समांशिकाः' 'माताप्यंशं समं

टिप्प०—1 तैत्तिरीयब्राह्मणे श्रूयते (२।२।४)—'तस्मात् सुवर्णं हिरण्यं धार्यम्, दुर्वर्णोऽस्य भ्रातृव्यो भवति' इति ।

पाठा०—१ दिष्टविशेषात् घ. २ आदायकं घ. ३ ऽपवादः । श्रोत्रिय द्रव्यं. घ. ४ श्रीकारादिभिः घ. ५ तथा पत्न्यः घ. ६ स्त्रीधनमिति मतं घ.

हरेत्' इति च बहुधने जीवनमात्रोपयुक्तं वाक्यान्तरमपेक्ष्य प्रतिपादयति, धने तु पुत्रांशसममंशं प्रतिपादयेतीति । यथा चातुर्मास्येषु 'द्वयोः प्रणयन्ति' पूर्वपक्षिणा सौमिकप्रणयनातिदेशे हेतुत्वेन प्राप्ताया उत्तरवेद्या 'न वैश्वदेवे वेदिमुपकिरन्ति 'न शुनासीरीये' इत्युत्तरवेदिप्रतिषेधे दर्शिते राद्धान्तैकदेशि सौमिकप्रणयनातिदेशप्राप्ताया उत्तरवेद्याः प्रथमोत्तमयोः पर्वणोरयं प्रतिषेधः कि पात्रे वपन्तीति प्राकरणिकेन वचनेन प्राप्ताया उत्तरवेद्याः प्रतिषेधोऽयमि पुनः पूर्वपक्षिणा 'उपात्र वपन्ति' इति प्रथमोत्तमयोः पर्वणोः प्रतिषेधमपेक्ष्य कीमुत्तरवेदिं प्रापयति । मध्यमयोस्तु निरपेक्षमेव नित्यवदुत्तरवेदिं प्रापयति' ७।३।२३-२५) इति विधिवैषम्यं दर्शितम् । राद्धान्तेऽपि विधिवैषम्यभयात् त्तमयोः पर्वणोरुत्तरवेदिप्रतिषेधो नित्यानुवादो 'द्वयोः प्रणन्ति' इत्याद्यर्था लोचनया 'उपात्र वपन्ति' इति मध्यमयोरेव वरुणप्रघाससाकमेधपर्वणोरु विधत्त इति दर्शितम् । यदपि मतम् (मनुः ९।१८५)—'पिता हरेदपुत्रस्य भ्रातर एव वा' इति मनुस्मरणात्, तथा—'स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नी' इति शङ्खस्मरणाच्च अपुत्रस्य धन गामीति प्राप्तं, 'भरणं चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात्' (ना० १३।२६) दिवचनाच्च भरणोपयुक्तं धनं पत्नी लभत इत्यपि स्थितम् । एवं स्थिते अपुत्रे स्वर्याते भरणोपयुक्तं पत्नी गृह्णाति, शेषं च भ्रातरः । यदा तु पत्नीभ त्रोपयुक्तमेव द्रव्यमस्ति ततो न्यूनं वा तदा किं पत्न्येव गृह्णात्युत भ्रातरो विरोधे पूर्वबलीयस्त्वज्ञापनार्थं 'पत्नी दुहितर' इत्यारब्धमिति, तदप्यत्र भ चार्यो न मृष्यति । यतः ( मनुः ९।१८५ )—'पिता हरेदपुत्रस्य रिक्थं एव वा' इति विकल्पस्मरणान्नेदं क्रमपरं वचनम्, अपि तु धनग्रहणेऽधिका र्शनमात्रपरम् । तच्चासत्यपि पत्न्यादिगणे घटत इति व्याचचक्षे । शङ्खवच संसृष्टभ्रातृविषयमिति । अपि चाल्पविषयत्वमस्माद्वचनात्प्रकरणाद्वा नावग 'धनभागुत्तरोत्तरः' ( व्य० १३६ ) इत्यस्य च 'पत्नी दुहितर' इति वि वाक्यान्तरमपेक्ष्याल्पधनविषयत्वम्, पित्रादिषु तु धनमात्रविषयत्वमिति विधिवैषम्यं तदवस्थमेवेति यत्किंचिदेतत् । यत्तु हारीतवचनम्—विधवा नस्था चेन्नारी भवति कर्कशा । आयुषः क्षपणार्थं तु दातव्यं जीवनं इति,—तदपि शङ्कितव्यभिचारायाः सकलधनग्रहणनिषेधपरम् । वचनादनाशङ्कितव्यभिचारायाः सकलधनग्रहणं गम्यते । एतदेवाभि शङ्खेन 'ज्येष्ठा वा पत्नी' इति । ज्येष्ठा गुणज्येष्ठा अनाशङ्कितव्यभिचा सकलं धनं गृहीत्वाऽन्यां कर्कशामपि मातृवत्पालयतीति सर्वमनवद्यम् ।

**टिप्प०**—1 द्वयोर्वरुणप्रघाससाकमेधपर्वणोः. 2 अत्र चातुर्मास्येषु वेदिमुपकिरन्तीत्याशयः ।

**पाठा०**—१ तथा ख. २ तूपात्त ख. तूपात्र घ. ३ प्रतिपादयति ग. ४ हरेतां घ. ५ अपुत्रधनं घ. ६ श्रवणात् घ. ७ धिकारमात्रप्रदर्शन ८ संसृष्टविषयं घ. ९ वचनादशङ्कित ख.

पुत्रस्य स्वर्यातस्य विभक्तस्यासंसृष्टिनो धनं परिणीता स्त्री संयता सकलमेव गृह्णातीति स्थितम् ।

तदभावे दुहितरः । 'दुहितर' इति बहुवचनं समानजातीयानामसमानजातीयानां च समविषमांशप्राप्त्यर्थम् । तथा च कात्यायनः—'पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणी । तदभावे तु दुहिता यद्यनूढा भवेत्तदा ॥' इति । बृहस्पतिः (२५।५५-५६)—'भर्तुर्धनहरी पत्नी तां विना दुहिता स्मृता । अङ्गादङ्गात्संभवति पुत्रवद्दुहिता नृणाम् ॥ तस्मात्पितृधनं त्वन्यः कथं गृह्णीत मानवः ॥' इति । तत्र चोढानूढासमवायेऽनूढैव गृह्णाति । 'तदभावे तु दुहिता यद्यनूढा भवेत्तदा' इति विशेषस्मरणात् । तथा प्रतिष्ठिताप्रतिष्ठितानां समवाये अप्रतिष्ठितैव तदभावे प्रतिष्ठिता; 'स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च' (गौ. २९।६) इति गौतमवचनस्य पितृधनेऽपि समानत्वात् । न चैतत्पुत्रिकाविषयमिति मन्तव्यम् । 'तत्समः पुत्रिकासुतः' इति पुत्रिकायास्तत्सुतस्य चौरससमत्वेन पुत्रप्रकरणेऽभिधानात् । 'च'शब्दाद्दुहित्रभावे दौहित्रो धनभाक् । यथाह विष्णुः—'अपुत्रपौत्रसंताने दौहित्रा धनमाप्नुयुः । पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रिका मताः ॥' इति । मनुरपि (९।१३६)—'अकृता वा कृता वाऽपि यं विन्देत्सदृशात्सुतम् । पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥' इति ॥

तदभावे पितरौ मातापितरौ धनभाजौ । यद्यपि युगपदधिकरणवचनतायां द्वन्द्वस्मरणात् तदपवादत्वादेकशेषस्य धनग्रहणे पित्रोः क्रमो न प्रतीयते, तथापि विग्रहवाक्ये 'मातृ'शब्दस्य पूर्वनिपातादेकशेषाभावपक्षे च मातापितराविति 'मातृ'शब्दस्य पूर्वं श्रवणात् पाठक्रमादेवार्थक्रमावगमाद्धनसंबन्धेऽपि क्रमापेक्षायां,

टिप्प०—1 अप्रतिष्ठिता अनपत्या निर्धना वा. 2 स्त्रीपदं पितुरप्युपलक्षकमिति ...दायविदः. 3 अकृतेति । अकृता वा कृता वेति पुत्रिकाया एव द्वैविध्यं, तत्र 'यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरं' इत्यभिधाय कन्यादानकाले वरानुमत्या या क्रियते सा कृता, अभिसंधिमात्रकृता वाग्व्यवहारेण न कृता अकृता इति कुल्लूकः । 4 व्यवहारमयूखेऽपि–दौहित्राभावे पिता तदभावे माता । तथा च कात्यायनः—'अपुत्रस्याप्य...स्य पत्नी दुहितरोऽपि वा । तदभावे पिता माता भ्राता पुत्राः प्रकीर्तिताः' ॥ विष्णुश्च—'अपुत्रधनं पत्न्यभिगामि, तदभावे दुहितृगामि, तदभावे दौहित्रगामि, तदभावे पितृगामि, तदभावे मातृगामि, तदभावे भ्रातृगामि, तदभावे भ्रातृपुत्रगामि, तदभावे सकुल्यगामि' इति । यत्तु विज्ञानेश्वरः—द्वन्द्वापवादके पितराविल्येकशेषे क्रमानपेक्षितावपि तदर्थबोधके विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातात् अपवाद्यद्वन्द्वात्क्रमानुसारात् ...पुत्रान्तरसाधारण्याज् मातुस्त्वसाधारण्याच्चादौ मातुस्तदभावे पितुर्धनग्रहणमूचे ...तद्वचोविरोधादपास्तम् । विग्रहवाक्ये मातृशब्दस्य पूर्वनिपात एकशेषस्य द्वन्द्ववैकल्पिकत्वेन तदपवादत्वे साधारण्यासाधारण्ययोः क्रमनियामकत्वे मानाभावाच्च.

पाठा०—१ अक्षता वा क्षता वापि ग.

प्रतीतक्रमानुरोधेनैव प्रथमं माता धनभाक्, तदभावे पितेति गम्यते। पिता पुत्रान्तरेष्वपि साधारणः; माता तु न साधारणीति प्रत्यासत्त्यति 'अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्' ( मनुः ९।१८७ ) इति वच तुरेव प्रथमं धनग्रहणं युक्तम्। नच सपिण्डेष्वेव प्रत्यासत्तिर्नियामिका, समानोदकादिष्वप्यविशेषेण धनग्रहणे प्राप्ते प्रत्यासत्तिरेव नियामिके वचनादवगम्यत इति। मातापित्रोर्मातुरेव प्रत्यासत्त्यतिशयाद्धनग्रहणं युक्तं तदभावे पिता[1] धनभाक्।

पित्रभावे भ्रातरो धनभाजः। तथा च ( मनुः ९।१८५ )—'पिता हरे त्रस्य रिक्थं भ्रातर एव वा' इति। यत्पुनर्धारेश्वरेणोक्तम् ( ९।२१७ )- पत्यस्य पुत्रस्य माता दायमवाप्नुयात्। मातर्यपि च वृत्तायां पितुर्माता हरेद् इति मनुवचनाज्जीवत्यपि पितरि मातरि वृत्तायां पितुर्माता पितामही धनं पिता। यतः पितृगृहीतं धनं विजातीयेष्वपि पुत्रेषु गच्छति, पितामहीगृ सजातीयेष्वेव गच्छतीति पितामह्येव गृह्णातीति। एतदप्याचार्यो नानुम विजातीयपुत्राणामपि धनग्रहणस्योक्तत्वात्, 'चतुस्त्रिद्व्येकभागाः स्युः' १२५ ) इत्यादिनेति। यत्पुनः ( मनुः ९।१८९ )—'अहार्यं ब्राह्मणद्रव्यं नित्यमिति स्थितिः' इति मनुस्मरणं तन्नृपाभिप्रायं, नतु पुत्राभिप्रायम्। भ्रा सोदराः प्रथमं गृह्णीयुः भिन्नोदराणां मात्रा विप्रकर्षात्। 'अनन्तरः सपि स्तस्य तस्य धनं भवेत्' ( मनुः ९।१८७ ) इति स्मरणात्।

सोदराणामभावे भिन्नोदरा धनभाजः, भ्रातॄणामप्यभावे तत्पुत्राः पि धनभाजः। भ्रातृभ्रातृपुत्रसमवाये भ्रातृपुत्राणामनधिकारः; भ्रात्रभावे भ्रा त्राणामधिकारवचनात्; यदा त्वपुत्रे भ्रातरि स्वर्याते तद्भ्रातॄणामविशेषे संबन्धे जाते भ्रातृधनविभागात्प्रागेव यदि कश्चिद्भ्राता मृतस्तदा तत्पुत्राणां ऽधिकारे प्राप्ते तेषां भ्रातॄणां च विभज्य धनग्रहणे 'पितृतो भागकल्पना' ( १२० ) इति युक्तम्॥

भ्रातृपुत्राणामप्यभावे गोत्रजा धनभाजः। गोत्रजाः पितामही स समानोदकाश्च। तत्र पितामही प्रथमं धनभाक्। 'मातर्यपि च वृत्तायां पि धनं हरेत्' ( मनुः ९।२१७ )—इति मात्रनन्तरं पितामह्या धनग्रहणं

---

**टिप्प०—1** तथा च **विष्णुकात्यायनौ**—( वि० १७।४।७ ) 'प्रागुक्त पत्न्यभिगामि, तदभावे दुहितृगामि, तदभावे दौहित्रगामि, तदभावे पितृगामि, मातृगामि' इति। 'अपुत्रस्याथ कुलजा पत्नी दुहितरोऽपि वा। तदभावे पिता माता पुत्राश्च कीर्तिताः॥' इति। 2 अत्र केचन-सोदराभावे भिन्नोदरास्तदभावे तो इत्याहुस्तन्न। 3 आचार्यशब्देनात्र विश्वरूपाचार्योऽभिप्रेतः। 4 भ्रातृपदस्य सोदरे भिन्नोदरे च गौण्या वृत्तिद्वयविरोधात्। केचित्तु 'भ्रातर' इत्यत्र 'भ्रातृपुत्रौ स्वसृदुहि इत्यनुशासनात् भ्रातरश्च स्वसारश्च भ्रातर इति विरूपैकशेषेण भ्रात्रभावे भगिन्य हुस्तन्न। विरूपैकशेषे मानाभावात्।

पित्रादीनां भ्रातृसुतपर्यन्तानां बद्धक्रमत्वेन मध्येऽनुप्रवेशाभावात्, 'पितुर्माता धनं हरेत्' इत्यस्य वचनस्य धनग्रहणाधिकारप्राप्तिमात्रपरत्वादुत्कर्षे तत्सुतानन्तरं पितामही गृह्णातीत्यविरोधः ॥ पितामह्याश्चाभावे समानगोत्रजाः[1] सपिण्डाः पितामहादयो धनभाजः; भिन्नगोत्राणां सपिण्डानां 'बन्धु'शब्देन ग्रहणात् । तत्र पितृसन्तानाभावे पितामही पितामहः पितृव्यास्तत्पुत्राश्च क्रमेण धनभाजः । पितामहसन्तानाभावे प्रपितामही प्रपितामहस्तत्पुत्रास्तत्सूनवश्चेत्येवमासप्तमात्[2] समानगोत्राणां सपिण्डानां धनग्रहणं वेदितव्यम् । तेषामभावे समानोदकानां धनम् । ते च सपिण्डानामुपरि सप्त वेदितव्याः । जन्मनामज्ञानावधिका वा । यदाह बृहन्मनुः—'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु निवर्तताचतुर्दशात् ॥ जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यते ॥' इति ।

गोत्रजाभावे बन्धवो धनभाजः । बन्धवश्च त्रिविधाः—आत्मबन्धवः, पितृबन्धवः, मातृबन्धवश्चेति । यथोक्तम्—'आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः । आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥ पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः । पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥ मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः । मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥' इति ॥ तत्र चान्तरङ्गत्वात्प्रथममात्मबन्धवो धनभाजस्तदभावे पितृबन्धवस्तदभावे मातृबन्धव इति क्रमो वेदितव्यः । बन्धूनामभावे आचार्यः, तदभावे शिष्यः—'पुत्राभावे यः प्रत्यासन्नः सपिण्डः, तदभावे आचार्यः, आचार्याभावेऽन्तेवासी' इत्यापस्तम्बस्मरणात् ॥

शिष्याभावे सब्रह्मचारी धनभाक् । येन सहैकस्मादाचार्यादुपनयनाध्ययनतदर्थज्ञानप्राप्तिः, स सब्रह्मचारी । तदभावे ब्राह्मणद्रव्यं यः कश्चित् श्रोत्रियो गृह्णीयात् । 'श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्' ( २८।४१ ) इति गौतमस्मरणात् ।

टिप्प०—1 तदभावे भगिनी; 'अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्' इति मनूक्तेः । 'बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा । यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेत् ॥' इति बृहस्पत्युक्तेः । तस्या अपि भ्रातृगोत्रोत्पन्नत्वेन गोत्रजत्वाविशेषाच्च । सगोत्रा परं नास्ति न च सात्र धनग्रहणप्रयोजकत्वेनोक्ता इति व्यवहारमयूखः । 2 सप्तमपर्यन्तमित्यापेत्याशयः । 3 मनुस्मृतौ 'तदभावे सकुल्यः स्यादाचार्यः शिष्य एव वा' इत्यत्र सकुल्यशब्देन सगोत्रसमानोदकानां मातुलादीनां बन्धुत्रयस्य ग्रहणम् । योगीश्वरवचनेऽपि बन्धुपदेन मातुललक्षणमन्यथा मातुलादीनामग्रहणमेव प्रसज्येतेति तत्पुत्राणां धनाधिकारः । अतः प्रत्यासन्नानां तेषां स नेति महदनौचित्यमापद्येत । 4 ननु पत्न्यादीनां सर्वेषां मृतपितानामेव धनभाक्त्वं बान्धवानामपि तथैवास्तु, अतः कथं पितुर्मातुश्च बान्धवानां सम्बन्धः, 'पितुः पितृष्वसुः पुत्राः' इत्यादि तु संज्ञासंज्ञिसंबन्धमात्रार्थं न धनसंवन्धार्थमिति चेदुच्यते,—विनाप्येतद्वचनं पितृमातुलपितृव्यादिष्विव पितृमातृबान्धवेष्वपि योगेनैव शब्दप्रवृत्तिसंभवे संज्ञासंज्ञिसंबन्धबोधनानर्थक्यापत्तेः । तेन बन्धूनुद्दिश्य धनसंबन्धविधौ पितृमातृबन्धुप्रापणेनैव वचोऽर्थवत्ता । बन्धूद्देशेनाशौचादिविधावप्येवमेवेति दिक् ।

तदभावे ब्राह्मणमात्रम् । यथाऽऽह मनुः (९।१८८)—'सर्वेषामभा
ब्राह्मणा रिक्थभागिनः । त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते ॥'
न कदाचिदपि ब्राह्मणद्रव्यं राजा गृह्णीयात्; 'अहार्यं ब्राह्मणद्रव्यं रा
मिति स्थितिः' (९।१८९) इति मनुवचनात् । नारदेनाप्युक्तम्—'ब्रा
तन्नाशे दायादश्चेन्न कश्चन । ब्राह्मणायैव दातव्यमेनस्वी स्यान्नृपोऽन्य'
इति ॥ क्षत्रियादिधनं सब्रह्मचारिपर्यन्तानामभावे राजा हरेत् । न ब्रा
यथाऽऽह मनुः (९।१८९)—'इतरेषां तु वर्णानां सर्वाभावे
इति ॥ १३५-१३६ ॥

टिप्प०—1 **वीरमित्रोदये** तु—अत्रायं मृतपुंधनाधिकारक्रमः । प्र
पुत्रः, तदभावे पौत्रः, तदभावे प्रपौत्रः । मृतपितृकपौत्रमृतपितृपितामहकप्रपौत्रयो
सह युगपदधिकारः । प्रपौत्रपर्यन्ताभावे पत्नी । सा च प्राप्तभर्तृदाया भर्तृकुले
पितृकुलं वा समाश्रिता सती शरीररक्षार्थं भर्तृदायं भुञ्जीत । तथा भर्तुरुपकारा
कथंचिद्दानादिकमपि कुर्वीत । नतु स्त्रीधनवत्स्वच्छन्दं विनियुञ्जीत । तदभावे
तत्र प्रथमं कुमारी, तदभावे वाग्दत्ता तदभावे चोढा । सा च पुत्रवती संभावि
द्वे युगपदेवाधिकारिण्यौ । वन्ध्या विधवा च पुत्रहीना नाधिकारिणी । तद
दौहित्रः । तदभावे पिता, तदभावे भ्राता । तत्रापि प्रथमं सोदरः, तदभावे वै
मृतस्य भ्रातृसंसृष्टत्वे तु सोदरमात्रविषये प्रथमं संसृष्टसोदर एवाधिकारी, तदभा
सृष्टसोदरः । एवं वैमात्रेयमात्रविषये प्रथमं संसृष्टवैमात्रेयः, तदभावे चासंसृष्ट
यदा तु संसृष्टो वैमात्रेयः सोदरश्च संसृष्टः, तदा तावुभौ तुल्यवदधिकारिणौ । त
मभावे भ्रातुः पुत्रः । तत्रापि प्रथमं सोदरभ्रातृपुत्रः, तदभावे वैमात्रेयभ्रा
संसर्गे तु सोदरभ्रातृपुत्रमात्रविषये प्रथमं संसृष्टसोदरभ्रातृपुत्रः, तदभावे चासं
भ्रातृपुत्रः । वैमात्रेयभ्रातृपुत्रमात्रविषये प्रथमं संसृष्टवैमात्रेयभ्रातृपुत्रः । तदभा
सृष्टवैमात्रेयभ्रातृपुत्रः । यदा तु सोदरभ्रातृपुत्रोऽसंसृष्टो वैमात्रेयभ्रातृपुत्रश्च संसृ
द्वौ भ्रातृवत्तुल्याधिकारिणौ । भ्रातृपुत्राभावे तु भ्रातृपौत्रः । तत्रापि भ्रातुः सोदर
क्रमः संसर्गासंसर्गक्रमश्च बोध्यः । तदभावे पितृदौहित्रः; स च सोदरभगिनीपुत्र
भावे वैमात्रेयभगिनीपुत्रश्च । तदभावे पितुः सहोदरः, तदभावे पितुर्वैमात्रेयः
भावे पितृसोदरपुत्रपितृवैमात्रेयपुत्रपितृसोदरपौत्रपितृवैमात्रेयपौत्राणां क्रमेणाधि
तदभावे पितामहदौहित्रः । तत्रापि पितृसोदरभगिनीपुत्रः वैमात्रेयभगिनीपुत्रश्च
माणप्रपितामहदौहित्राधिकारेऽप्येवम् । तदभावे पितामहः । तदभावे पितामही
भावे पितामहसोदरभ्रातृवैमात्रेयभ्रातृतत्पुत्रपौत्रप्रपितामहदौहित्राः क्रमेणाधिका
एतावत्पर्यन्तानां धनिभोग्यपिण्डदातॄणां त्वभावे धनिदेयपिण्डभोक्तॄणां मातुल
धिकारस्तदभावे धनिमातृष्वस्रीयस्याधिकारः । तदभावे मातुलपुत्रपौत्राणां क्रमेणा
तदभावे चाधस्तनसकुल्यानां धनिभोग्यलेपदातॄणां प्रतिप्रणप्तृप्रभृतिपुरुषत्रयाणां
धिकारः । तदभावे पुनरूर्ध्वतनसकुल्यानां धनिदेयलेपभोक्तॄणां वृद्धप्रपितामहादि
वामासत्तिक्रमेणाधिकारः । तदभावे समानोदकानामधिकारः । तेषामभावे

**जारं चौरेत्यभिवदन्दाप्यः पञ्चशतं दमम् ।**
**उपजीव्य धनं मुञ्चंस्तदेवाष्टगुणीकृतम् ॥ ३०१ ॥**

किंच, स्ववंशकलङ्कभयाज्जारं पारदारिकं 'चौर! निर्गच्छे'त्यभिवदन् पञ्च-पणानां पञ्च शतानि यस्मिन्दमे स तथोक्तस्तं दमं दाप्यः । यः पुनर्जारद्धनमुपजीव्य उत्कोचरूपेण गृहीत्वा जारं मुञ्चत्यसौ यावद्गृहीतं तावदष्टगुणीकृतं दण्डं दाप्यः ॥ ३०१ ॥

**राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकारिणम् ।**
**तन्मन्त्रस्य च भेत्तारं छित्त्वा जिह्वां प्रवासयेत् ॥ ३०२ ॥**

किंच, राज्ञोऽनिष्टस्यानभिमतस्यामित्रस्तोत्रादेः[1] प्रकर्षेण भूयो भूयो वक्तारं तस्यैव राज्ञ आक्रोशकारिणं निन्दाकरणशीलं तदीयस्य च मन्त्रस्य राष्ट्रविवृद्धिहेतोः परराष्ट्रापक्षयकरस्य वा भेत्तारं अमित्रकर्णेषु जपन्तं तस्य जिह्वामुत्कृत्य स्वराष्ट्रान्निष्कासयेत् । कोशापहरणादौ पुनर्वध एव । (मनुः ९।२७५) —'राज्ञः कोशापहर्तॄंश्च प्रतिकूलेषु च स्थितान् । घातयेद्विविधैर्दण्डैररीणां चोपकारकान्[2] ॥' इति मनुस्मरणात् । विविधैः सर्वस्वापहाराङ्गच्छेदवधरूपैरित्यर्थः । सर्वस्वापहारेऽपि यद्यस्य जीवनोपकरणं तन्नापहर्तव्यम् चौर्योपकरणं विना । यथाह नारदः—( १७।१०,११ ) 'आयुधान्यायुधीयानां वाह्यादी-न्वाह्यजीविनाम् । वेश्यास्त्रीणामलंकारान्वाद्यातोद्यादि तद्विदाम् ॥ यच्च यस्योपकरणं येन जीवन्ति कारुकाः । सर्वस्वहरणेऽप्येतन्न राजा हर्तुमर्हति ॥' इति । ब्राह्मणे पुनः 'न शारीरो ब्राह्मणे दण्डः'[3] ( गौ० १२।४६ ) इति निषेधाद्वधस्थाने शिरोमुण्डनादिकं कर्तव्यम्—'ब्राह्मणस्य वधो मौण्ड्यं पुरान्निर्वासनाङ्कने । ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन तु ॥' इति मनुस्मरणात् ॥ ३०२ ॥

**मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा ।**
**राजयानासनारोढुर्दण्ड उत्तमसाहसः[4] ॥ ३०३ ॥**

किंच, मृतशरीरसंबन्धिनो वस्त्रपुष्पादेर्विक्रेतुः गुरोः पित्राचार्यादेस्ताडयितुः तथा राजानुमतिं विना तद्यानं गजाश्वादि आसनं सिंहासनादि आरोहतश्चोत्तमसाहसो दण्डः ॥ ३०३ ॥

**द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा ।**
**विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः ॥ ३०४ ॥**

किंच, यः पुनः क्रोधादिना परस्य नेत्रद्वयं भिनत्ति । यश्च ज्योतिःशास्त्रवित् गुर्वादिहितेच्छुव्यतिरिक्तो[5] राज्ञो द्विष्टमनिष्टं 'संवत्सरान्ते तव राज्यभ्रंशो भविष्यति' इत्येवमादिरूपमादेशं करोति । तथा च यः शूद्रो भोजनार्थं

---

पाठा०—१ मित्रस्तवादेः घ. २ चोपजापकान् घ. ३ न शारीरो दण्डः ख. ४ मध्यमसाहसः A. ५ हितेप्सु ख.

**यज्ञोपवीतादीनि** ब्राह्मणलिङ्गानि **धारयति** तेषामष्टशतो **दमः।** पणशतानि यस्मिन्दमे स तथोक्तः। 'श्राद्धभोजनार्थं पुनः शूद्रस्य विप्रवेषस्तप्तशलाकया यज्ञोपवीतवद्वपुष्यालिखेत्' इति स्मृत्यन्तरोक्तं द्रष्टव्यम्। यज्ञोपवीतादिब्राह्मणलिङ्गधारिणो वध एव।—'द्विजातिलिङ्गिनः शूद्राः' इति स्मरणात्॥ ३०४॥

रागलोभादिनाऽन्यथा व्यवहारदर्शने दण्डमाह—

**दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु।**
**सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम्॥ ३०५॥**

**दुर्दृष्टान्**स्मृत्याचारप्राप्तधर्मोल्लङ्घनेन रागलोभादिभिरसम्यग्विचारितत्वेन मानान् **व्यवहारान्पुनः स्वयं राजा** सम्यग्विचार्य निश्चितदोषान् **सभ्याः सजयिनः** प्रत्येकं **विवादपदे** यो दमः पराजितस्य तद्द्विगुणं **दाप्याः**। अप्राप्तजेतृदण्डविधिपरत्वाद्वचनस्य रागाल्लोभादित्यादिना श्लोकेनापुनरुक्त्यम्। यदा पुनः साक्षिदोषेण व्यवहारस्य दुर्दृष्टत्वं ज्ञातं तदा साक्षिण एव दण्ड्याः, न जयी नापि सभ्याः। यदा तु राजानुमत्या व्यवहारस्य दुर्दृष्टत्वं तदा सर्व एव राजसहिताः सभ्यादयो दण्डनीयाः।—'पादो गच्छति कर्तारं पादः साक्षिणमृच्छति। पादः सभासदः सर्वान्पादो राजानमृच्छति॥' (८।१८) इति वचनात्। एतच्च प्रत्येकं राजादीनां दोषप्रतिपादनपरं, न पुनरेकैकस्यैव पादविभागाय। यथोक्तम्—'कर्तृसमवायिफलजननस्वभावत्वादपूर्वस्य' इति।

न्यायतो निर्णीतव्यवहारस्य प्रत्यावर्तयितुर्दण्डमाह—

**यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः।**
**तमायान्तं पुनर्जित्वा दापयेद्द्विगुणं दमम्॥ ३०६॥**

**यः** पुनर्न्यायमार्गेण **पराजितोऽपि** औद्धत्यात् **'नाहं पराजितः'** इति **मन्यते तमायान्तं** कूटलेख्याद्युपन्यासेन पुनर्धर्माधिकारिणमागतं धर्मेण **पुनः** पराजयं नीत्वा **द्विगुणं दण्डं दापयेत्**॥ नारदेनाप्युक्तम्—'तीरितं चानुशिष्टं च मन्येत विधर्मतः। द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत्॥' इति। तीरितं साक्षिलेख्यादिनिर्णीतमनुद्धृतदण्डम्। अनुशिष्टमुद्धृतदण्डम्। दण्डपर्यन्तं नीतमिति यावत्। यत्पुनर्मनुवचनम् (९।२३३)—'तीरितं चानुशिष्टं च यत्र क्वचन विद्यते। कृतं तद्धर्मतो ज्ञेयं न तत्प्राज्ञो निवर्तयेत्॥' इति, तदर्थिप्रत्यार्थिनोरन्यतरवचनाद्व्यवहारस्याधर्मतो वृत्तत्वाशङ्कायां द्विगुणदण्डप्रतिज्ञापूर्वकं व्यवहारं प्रवर्तयेत्, न पुनर्धर्मतो वृत्तत्वनिश्चयेऽपि रागलोभादिना प्रवर्तयितव्य इत्येवंपरम्। यत्पुनर्नृपान्तरेणापि न्यायापेतं कार्यं तदपि सम्यक्परीक्षणेन धर्म्ये पथि स्थापनीयम्। 'न्यायापेतं यदन्येन राज्ञाज्ञानकृतं भवेत्। तदप्यन्यायविहितं पुनर्न्याये निवेशयेत्॥' इति स्मरणात्।

पाठा०—१ सम्यग्दृष्ट्वा तु दुर्दृष्टान्व्य A. २ द्विगुणं पृथक् A. ३ सहिताः घ. ४ दुर्दृष्टता तदा ख. ५ रेकैकस्यैव ख.

अन्यायगृहीतदण्डधनस्य गतिमाह—

**राज्ञाऽन्यायेन यो दण्डो गृहीतो वरुणाय तम् ।**
**निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम् ॥ ३०७ ॥**[2]

अन्यायेन यो दण्डो राज्ञा लोभादिना गृहीतस्तं त्रिंशद्गुणीकृतं वरुणायेदमिति कल्प्य ब्राह्मणेभ्यः स्वयं दद्यात् । यस्माद्दण्डरूपेण यावद्गृहीतमन्यायेन तावत्स्वामिने प्रतिदेयम्, इतरथापहारदोषप्रसङ्गात् । अन्यायदण्डग्रहणे पूर्वस्वामिनः स्वत्वच्छेदाभावाच्चेति ॥ ३०७ ॥

इति श्रीमत्पद्मनाभभट्टोपाध्यायात्मजस्य श्रीमत्परमहंसपरिव्राजकाचार्यविज्ञानेश्वरभट्टारकस्य कृतौ ऋजुमिताक्षराख्यायां याज्ञवल्कीयधर्मशास्त्रविवृतौ द्वितीयोऽध्यायो व्यवहाराख्यः संपूर्णः ॥

अथास्मिन्नध्याये प्रकरणानुक्रमणिका कथ्यते । आद्यं साधारणव्यवहारमातृकाप्रकरणम् १ । असाधारणव्यवहारमातृकाप्रकरणम् २ । ऋणादानम् ३ । उपनिधिप्रकरणम् ४ । साक्षिप्रकरणम् ५ । लेख्यप्रकरणम् ६ । दिव्यप्रकरणम् ७ । दायविभागः ८ । सीमाविवादः ९ । स्वामिपालविवादः १० । अस्वामिविक्रयः ११ । दत्ताप्रदानिकम् १२ । क्रीतानुशयः १३ । अभ्युपेत्याशुश्रूषा १४ । संविद्व्यतिक्रमः १५ । वेतनादानम् १६ । द्यूतसमाह्वयाख्यम् १७ । वाक्पारुष्यम् १८ । दण्डपारुष्यम् १९ । साहसम् २० । विक्रियासंप्रदानम् २१ । संभूयसमुत्थानम् २२ । स्तेयप्रकरणम् २३ । स्त्रीसंग्रहणम् २४ । प्रकीर्णकम् २५ ।

इति पञ्चविंशतिप्रकरणानि ॥

उत्तमोपपदस्येयं शिष्यस्य कृतिरात्मनः ।
धर्मशास्त्रस्य विवृतिर्विज्ञानेश्वरयोगिनः ॥ १ ॥

---

पाठा०—१ अन्यायेन तु यो दण्डो घ. २ राजभिर्दत्तदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ एवमुक्तदण्डानां विशुद्धिः पापकर्मिणाम् । स्वधर्मस्थापनाद्राजा प्रजाभ्यो धर्ममश्नुते ॥ यत्र दण्डविधिर्नोक्तः सर्वैरेव महात्मभिः । देशकालादि संचिन्त्य तत्र दण्डो विधीयते ॥

# अथ प्रायश्चित्ताध्यायः ३

## अथाशौचप्रकरणम् १

गृहस्थाश्रमिणां नित्यनैमित्तिका धर्मा उक्ताः । अभिषेकादिगुणयुक्त विशेषस्य गुणधर्माश्च प्रदर्शिताः । अधुना तदधिकारसंकोचहेतुभूता दनमुखेन तेषामपवादाः प्रतिपाद्यन्ते । 'आशौच'शब्देन च कालस्नान पिण्डोदकदानादिविधेः अध्ययनादिपर्युदासस्य च निमित्तभूतः पुरुषग नातिशयः कथ्यते, न पुनः कर्मानधिकारमात्रम् । 'अशुद्धा बान्ध ( मनुः ५।५८ ) इत्यादावशुद्धत्वाभिधानात् । 'अशुद्ध'शब्दस्य च वृद्ध ऽनाहिताग्निदीक्षितादावनधिकारिमात्रे प्रयोगाभावात् वृद्धव्यवहारव्यु न्धनत्वाच्च शब्दार्थावगतेः । किंच यद्याशौचिनां दानादिनिषेधदर्शना त्वमाशौचशब्दाभिधेयं कल्प्यते तर्हि उदकदानादिविधिदर्शनात् तद्योग्य शौचशब्दाभिधेयं स्यात् तत्रानेकार्थकल्पनादोषप्रसङ्ग इत्युपेक्षणीयोऽयं

तत्राशौचिभिः सपिण्डाद्यैर्यत्कर्तव्यं तत्तावदाह—

> ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः ।
> आश्मशानादनुव्रज्य इतरो ज्ञातिभिर्वृतः ॥ १ ॥
> यमसूक्तं तथा गाथा जपद्भिर्लौकिकाग्निना ।
> स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् ॥ २ ॥

ऊने अपरिपूर्णे द्वे वर्षे यस्यासावूनद्विवर्षस्तं प्रेतं **निखनेत्** भूमाव निदध्यान्न पुनर्दहेदित्यर्थः । नच 'सकृत्प्रासिंचन्त्युदकम्' (प्रा. ४) इत्यादि द्देशेन विहितमुदकदानाद्यौर्ध्वदेहिकं कुर्यात् । अयं च गन्धमाल्यानुपलेप लंकृत्य शुचौ भूमौ श्मशानादन्यत्रास्थिनिचयरहितायां बहिर्ग्रामान्निख यथाऽऽह मनुः ( ५।६८-६९ )—'ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धव अलंकृत्य शुचौ भूमावस्थिसंचयनादृते ॥ नास्य कार्योऽग्निसंस्कारो नापि कक्रिया । अरण्ये काष्ठवत्त्यक्त्वा क्षिपेयुस्त्र्यहमेव तु ॥' इति । 'अरण्ये क्त्वा' इत्यस्यायमर्थः—यथाऽरण्ये काष्ठं त्यक्त्वोदासीनास्तद्विषये भवन्ति वार्षिकमपि खातायां भूमौ परित्यज्य तद्विषये श्राद्धाद्यौर्ध्वदेहिकेषु उदा तव्यमित्याचारादिप्राप्तश्राद्धाद्यभावोऽनेन दृष्टान्तेन सूच्यते । स च घृते **यमगाथाः** पठद्भिर्निधातव्यः । 'ऊनद्विवार्षिकं प्रेतं घृताक्तं निखने गाथा गायमानो यमसूक्तमनुस्मरन् ॥' इति यमस्मरणात् ॥ **ततस्त** र्षिकादितरपूर्णद्विवर्षो यो मृतोऽसौ **श्मशानपर्यन्तं ज्ञातिभिः** सपि

टिप्प०—1 अवटः=गर्तः । 2 अत्रादिपुराणे विशेषः—'पूर्वामुखस्तु ब्राह्मणो बान्धवैर्गृहात् । उत्तराभिमुखो राजा वैश्यः पश्चान्मुखस्तथा ॥ दक्षि शूद्रो निर्हर्तव्यः स्वबान्धवैः ।' इति ।

पाठा०—१ अत्राशुद्धशब्दस्य च व्यवहारेणाहिताग्नि ख. २ नमनुव्राज्य. A. ३ मृतः. A. ४ नास्य ङ. ५ शवश्च ङ. ६ गायन्नि

दकैश्च ज्येष्ठः पुरःसरैरनुव्रज्योऽनुगन्तव्यः । अस्मादेव वचनादूनद्विवर्षस्यानुगमनमनियतमिति गम्यते ॥ अनुगम्य च 'परेयिवांसम्' (ऋ० ७, अ. ६, । ४, ५, ६) इत्यादि यमसूक्तं यमदैवत्या गाथाश्च जपद्भिर्लौकिकेनासंस्कृतेऽग्निना दग्धव्यो यदि जातारणिर्नास्ति । तत्सद्भावे तु तन्मथितेन दग्धव्यो लौकिकेन । तस्याग्निसंपाद्यकार्यमात्रार्थत्वेनोत्पत्तेः । लौकिकाग्निश्च चण्डालादिव्यतिरिक्तो ग्राह्यः; 'चण्डालाग्निरमेध्याग्निः सूतिकाग्निश्च कर्हिचित् । पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचिताः ॥' इति देवलस्मरणात् ॥ लौगाक्षिणा चात्र विशेष उक्तः—'तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च । सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम् ॥' इति । अयमर्थः—'चौलकर्मानन्तरकाले नियमेनाभ्युदकदानं कार्यम् । अन्यत्रापि नामकरणादूर्ध्वं अकृतचूडेऽपीच्छया प्रेताभ्युदयकार्यतया द्वयं अभ्युदकदानात्मकं तूष्णीं कार्यं, न नियमेनेति विकल्पः । मनुनाप्यत्र विशेषो दर्शितः (५।७०)—'नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया । जातदन्तस्य वा कुर्यान्नाम्नि वाऽपि कृते सति ॥' इति । 'उदकग्रहणं' साहचर्यादग्निसंस्कारस्याप्युपलक्षणार्थम् । 'नात्रिवर्षस्य' इति वचनात् । कुलधर्मापेक्षया चूडोर्ध्वेऽपि वर्षत्रयादूर्ध्वमभ्युदकदानादिनियमोऽवगम्यते । लौगाक्षिवचनाद्वर्षत्रयादर्वागपि कृतचूडस्य तयोर्नियम इति विवेचनीयम् । **उपेतश्चेद्य**द्युपनीतस्तर्हि **आहिता**[2]**ग्न्यावृता** आहिताग्नेर्दाहप्रक्रियया स्वगृह्यादिप्रसिद्धया लौकिकाग्निनैव दग्धव्यः । **अर्थवत्**प्रयोजनवत् । अयमर्थः—यद्यस्य कृतं दाहद्वारं कार्यरूपं प्रयोजनं संभवति । भूमिजोषणप्रोक्षणादि तदुपादेयम् । यत्पुनर्लुप्तप्रयोजनं प्रयोजनादि तन्निवर्तते । तथा लौकिकाग्निविधानेनोपनीतस्य अनाहिताग्नेर्गृह्या[3]ग्ना दाहविधानेन च अपहृतप्रयोजनत्वादाहवनीयादेरपि निवृत्तिरिति ॥ अभ्युदकविधानं च वृद्धयाज्ञवल्क्येनोक्तम्—'आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः । अनाहिताग्निरेकेन लौकिकेनापरो जनः ॥' इति । नच शूद्रेण श्मशानं प्रति अग्निकाष्ठादिनयनं कार्यम्; 'यस्यानयति शूद्रोऽग्निं तृणं काष्ठं हवींषि च । प्रेतत्वं हि सदा तस्य स चाधर्मेण लिप्यते ॥' इति यमस्मरणात् ॥ तथा दाहश्च स्नानाद्यनन्तरं कार्यः—'प्रेतं दहेच्छुभैर्गन्धैः स्नापितं स्रग्विभूषितम्' इति स्मरणात् । प्रचेतसाऽप्युक्तम्—स्नानं प्रेतस्य पुत्राद्यैर्वस्त्राद्यैः पूजनं तथा । नग्नदेहं दहेन्नैव किंचिद्देयं परित्यजेत् ॥' इति; किंचिद्देयमिति शववस्त्रैकदेशं श्मशानवास्यर्थं परित्यजेदित्यर्थः ॥ तथा प्रेतनिर्हरणेऽपि मनुना विशेषो दर्शितः (५।१०४)—'न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण हारयेत् । अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता ॥' अत्र च स्वेषु तिष्ठत्सु इत्यविवक्षितम् । अस्वर्ग्यत्वादिदोषश्रवणात् ॥—'दक्षिणेन मृतं शूद्रं परद्वारेण निर्हरेत् । पश्चिमोत्तर-

---

पाठा०—१ उदकदानात्मकं क. २ आहिताग्नेर्दानप्रक्रियया ङ. ३ आहिताग्नेः स्वगृह्याग्निना ङ.

पूर्वैस्तु यथासंख्यं द्विजातयः ॥' तथा हारीतोऽपि—'न ग्रामाभिमुखं प्रे इति ॥ यदा तु प्रोषितमरणे शरीरं न लभ्यते तदास्थिभिः प्रतिकृतिं मप्यलाभे पर्णशरैः शौनकादिगृह्योक्तमार्गेण प्रतिकृतिं कृत्वा संस्कार आशौचं चात्र दशाहादिकमेव । 'आहिताग्निश्चेत्प्रवसन्म्रियेत पुनः संस्का शववदाशौचम्' (४।३७) इति वसिष्ठस्मरणात् ॥ अनाहिताग्निस्तु 'सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना । असौ स्वर्गाय लोकाय स्वाहे बान्धवैः ॥ एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ॥' इति वचनात् ॥ यमर्थः—'नामकरणादर्वाङ्निखननमेव, न चोदकदानादि । तत ऊर्ध्वं वैकल्पिकमभ्युदकदानम् । ततः परं यावदुपनयनं तूष्णीमेवाभ्युदकदानं वर्षत्रयात्प्रागपि कृतचूडस्य । उपनयनादूर्ध्वं पुनराहिताग्न्यावृता दा सर्वमौर्ध्वदेहिकं कार्यम् । अयं तु विशेषः—उपनीतस्य लौकिकाग्निना दाहः अनाहिताग्नेर्गृह्याग्निना दाहो यथासंभवं पात्रयोजनं च कार्यम् ॥ १-२॥

संस्कारानन्तरं किं कर्तव्यमित्यत आह—

**सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयन्त्यपः ।**
**अप नः शोशुचदघमनेन पितृदिङ्मुखाः ॥ ३ ॥**

**सप्तमा**द्दिवसादर्वाग्**दशम**दिवसाद्**वा ज्ञातयः** समानगोत्राः सपिण्डा नोदकाश्च **'अप नः शोशुचदघम्'** (ऋ.सं. १।७।५) इत्यनेन मन्त्रे **णामुखाः अपः अभ्युपयन्ति** । अभ्युपगमनेन तत्प्रयोजनभूतोदक शिष्टमभ्युपगमनं लक्ष्यते; 'एवं मातामहाचार्य–' (प्रा० ४) इत्यनन्तर नस्यातिदेशदर्शनात् । एतच्चायुग्मासु तिथिषु कार्यम् । 'प्रथमतृतीयपञ्च वमेषूदकक्रिया' (१४।४०) इति गौतमस्मरणात् ॥ एतच्च स्नानानन्तरं 'शरीरमग्नौ संयोज्यानवेक्षमाणा अपोऽभ्युपयन्ति' इति शातातपस्मरणात् प्रचेतसाप्यत्र विशेषो दर्शितः—'प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य येयुरुदकान्ते प्रसिञ्चेयुरपसव्ययज्ञोपवीतवाससो दक्षिणाभिमुखा प्राङ् ङ्मुखाः प्रत्यङ्मुखाश्च राजन्यवैश्ययोः' इति । स्मृत्यन्तरे तु यावन्त्याशौ तावदुदकदानस्यावृत्तिरुक्ता । यथाह विष्णुः (१९।१३)—'यावदाशौ त्प्रेतस्योदकं पिण्डं च दद्युः' इति ॥ तथा च प्रचेतसाप्युक्तम्—'दिने लीन्पूर्णान्प्रदद्यात्प्रेतकारणात् । तावद्वृद्धिश्च कर्तव्या यावत्पिण्डः समा इति । प्रतिदिनमञ्जलीनां वृद्धिः कार्या, यावद्दशमः पिण्डः समाप्यत इ यद्यप्यनयोर्गुरुलघुकल्पयोरन्यतरानुष्ठानेनापि शास्त्रार्थः सिद्धस्तथापि बहु हत्वेन गुरुतरकल्पे प्रवृत्त्यनुपपत्तेः प्रेतस्योपकारातिशयो भविष्यतीति यम् । अन्यथा गुरुतरकल्पाम्नायस्यानर्थक्यप्रसङ्गात् ॥ वसिष्ठेनापि वि हितः (४।१२)—'सव्योत्तराभ्यां पाणिभ्यामुदकक्रियां कुर्वीरन्' इति

पाठा०—१ प्राङ्मुखाश्च ख. २ कल्पनीयस्या क.

वक्ष्यमाणसकृत्प्रसेकस्य नामगोत्रादिभिर्गुणैर्विशिष्टस्योदकदानस्या[1]समानगोत्रेषु मातामहादिष्वतिदेशमाह—

**एवं मातामहाचार्यप्रेतानामुदकक्रिया[2] ।**
**कामोदकं सखिप्रत्तास्वस्रीयश्वशुरर्त्विजाम्[3] ॥ ४ ॥**

यथा सगोत्रसपिण्डानां प्रेतानामुदकं दीयते तथा **मातामहानामाचार्याणां** प्रेतानां नित्य**मुदकक्रिया कार्या** । **सखा** मित्रं, **प्रत्ताः** परिणीता दुहितृभगिन्यादयः, **स्वस्रीयो** भागिनेयः, **श्वशुरः** प्रसिद्धः, **ऋत्विजो** याजकाः, एषां सख्यादिनां प्रेतानां **कामोदकं कार्यम्** । काम इच्छा, कामेनोदकदानं कामोदकं, प्रेताभ्युदयकामनायां सत्यामुदकं देयम्; असत्यां न देयमिति अकरणे प्रत्यवायो नास्तीत्यर्थः ॥ ४ ॥

उदकदाने गुणविधिमाह—

**सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः ।**

तच्चोदकदानमित्थं कर्तव्यम्—सपिण्डाः समानोदकाश्च मौनिनो भूत्वा प्रेतस्य नामगोत्रे उच्चार्य 'अमुकनामा प्रेतोऽमुकगोत्रस्तृप्यतु' इति **सकृदेवोदकं प्रसिञ्चेयुः** त्रिर्वा; 'त्रिः प्रसेकं[4] कुर्युः प्रेतस्तृप्यतु' इति प्रचेतःस्मरणात् ॥ प्रतिदिनमञ्जलिवृद्धिस्तु प्रतिपादितैव । तथा अयमपि विशेषस्तेनैवोक्तः—'नदीकूलं ततो गत्वा शौचं कृत्वा यथार्थवत् । वस्त्रं संशोधयेदादौ ततः स्नानं समाचरेत् ॥ ...लस्तु ततः स्नात्वा शुचिः प्रयतमानसः । पाषाणं तत आधाय[5] विप्रे दद्याद्दशाञ्जलीन् ॥ द्वादश क्षत्रिये दद्याद्वैश्ये पञ्चदश स्मृताः । त्रिंशच्छूद्राय दातव्या• ...ः संप्रविशेद्गृहम् । ततः स्नानं पुनः कार्यं गृहशौचं च कारयेत् ॥' इति ॥

सपिण्डानां मध्ये केषांचिदुदकदानप्रतिषेधमाह—

**न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा ॥ ५ ॥**

ज्ञातित्वे सत्यपि **ब्रह्मचारिणः** समावर्तनपर्यन्तं, **पतिताश्च** प्रच्युतद्विजातिकर्माधिकाराः, **उदकादिदानं न कुर्युः** ॥ ब्रह्मचर्योत्तरकालं पूर्वमृतानां सपिण्डानां उदकदानमाशौचं च कुर्यादेव । यथाह मनुः (५।८८)—'आदिष्टी[1] नोदकं कुर्यादाव्रतस्य समापनात् । समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत्[6] ॥' इति । आदिष्टी 'ब्रह्मचार्यसि अपोशान कर्म कुरु दिवा मा स्वाप्सीः' ( आश्व० १।२२।- ) इत्यादिव्रतादेशयोगाद्ब्रह्मचार्युच्यते । एतच्च पित्रादिव्यतिरेकेणेति वक्ष्यति । 'आचार्यपित्रुपाध्यायान्' ( प्रा० १५ ) इति । अत्राचार्यः पुनरेवं मन्यते—आदिष्टीति प्रक्रान्तप्रायश्चित्तः कथ्यते, तस्यैवायमुदकदानादिनिषेधः प्रायश्चित्तव्रतस्य समाप्त्युत्तरकालमुदकदानाशौचविधिरिति । तथा क्लीबादीनां चोदक-

टिप्प०—1 आदिष्टी ब्रह्मचारी, आ व्रतस्य समापनात् आ समावर्तनादिति भावः ।

पाठा०—१ स्य समान ङ. २ प्रेतानां चोदकक्रिया. A. ३ प्रत्तस्वस्रीय ङ. ४ प्रत्येकं कुर्युः ख. ५ आदाय. ६ त्रिरात्रेणैव शुद्ध्यति.

दायित्वं निषिद्धम्; 'क्लीबाद्या नोदकं कुर्युः स्तेना व्रात्या विधर्मिणः। गर्भभर्तृद्रुह-श्चैव सुराप्यश्चैव योषितः ॥' इति वृद्धमनुस्मरणात् ॥ ५ ॥

एवमुदकदाने कर्तृविशेषप्रतिषेधमुक्त्वा संप्रदानविशेषेण प्रतिषेधमाह—

**पाखण्ड्यनाश्रिताः स्तेना भर्तृघ्न्यः कामगादिकाः।**
**सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः ॥ ६ ॥**

नरशिरःकपालादिश्रुतिबाह्यलिङ्गधारणं पाखण्डम्, तद्विद्यते येषां ते पाखण्डि-नः; **अनाश्रिताः** अधिकारे सत्यप्यकृताश्रमविशेषपरिग्रहाः। **स्तेनाः** ब्राह्मणो-त्तमद्रव्यहारिणः, **भर्तृघ्न्यः** प्रतिघातिन्यः, **कामगाः** कुलटाः, 'आदि'शब्देन गर्भब्राह्मणघातिन्यो गृह्यन्ते। **सुराप्यो** यासां या सुरा प्रतिषिद्धा तत्पाः। **आत्मत्यागिन्यः** विषाग्न्युदकोद्बन्धनाद्यैरात्मानं यास्त्यजन्ति। एते पाखण्ड्यादयः 'त्रिरात्रं दशरात्रं वा' (प्रा० १८) इति वक्ष्यमाणस्याशौचस्योदकदानादेश्च च भाजना न भवन्ति। भाजयन्तीति भाजनाः, सपिण्डादीनामाशौचनि-**मित्तभूता न भवन्ति;** अतस्तन्मरणे सपिण्डैरुदकदानादि न कार्यमिति प्रति-पादनपरं वचनम्। अत्र च 'सुराप्य' इत्यादिषु लिङ्गमविवक्षितम्।-'लिङ्गं देशः कालोऽयं कर्मणः फलम्। मीमांसाकुशलाः प्राहुरनुपादेयपञ्चकम्॥' इत्यनु-पादेयगतत्वात्। एतच्च बुद्धिपूर्वविषयम्; यथाह गौतमः (१४।१२)-'प्रायो-ऽनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छताम्' इति। प्रायो महाप्रस्थानम्, अनाशकमनशनम्, गिरिशिखरादवपातः प्रपतनम्। अत्र चेच्छतामिति ग्रह-णोपादानात्प्रमादकृते दोषो नास्तीत्यवगन्तव्यम्; 'अथ कश्चित्प्रमादेन म्रियेता-ग्न्युदकादिभिः। तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया' इति स्मर-णात् ॥ तथा मृत्युविशेषादपि आशौचादिनिषेधः—'चाण्डालादुदकात्सर्पाद्ब्राह्मणा-द्वैद्युतादपि। दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मिणाम् ॥ उदकं पिण्डदानं च प्रेतेभ्यो यत्प्रदीयते। नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति ॥' इति। एतदपी-च्छापूर्वमात्महननविषयम्। गौतमवचनेनेच्छापूर्वकमेवोदकेन हतस्याशौचादिनिषे-धस्योक्तत्वात्। अत्रापि 'चाण्डालादुदकात्सर्पात्' इति तत्साहचर्यदर्शनादिच्छावि-षयत्वनिश्चयः। अतो दर्पादिना चाण्डालादीन्हन्तुं गतो यस्तैर्मारितस्तस्य 'सर्वत एवात्मानं गोपायेत्' इति विध्यतिक्रमनिमित्तः पिण्डदानादिनिषेधः। एवं दुष्टदंष्ट्र्यादिग्रहणार्थमाभिमुख्येन दर्पाद्गच्छतो मरणेऽप्ययं निषेध इति द्रष्टव्-यम्। अयं चाशौचप्रतिषेधो दशाहादिकालावच्छिन्नस्य; 'हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम्' (प्रा० २१) इति सद्यःशौचस्य वक्ष्यमाणत्वात्। तथा ब्रह्मदण्डहता-मप्येषां न कार्यम्; 'नाशौचं नोदकं नाश्रु न दाहाद्यन्त्यकर्म च। ब्रह्मदण्डहतानां च न कुर्यात्कटधारणम् ॥' इति यमस्मरणात्। ब्रह्मदण्डहता ब्राह्मणशापहताः।

टिप्प०—1 ब्रह्मदण्डः ब्रह्मशापः। 2 कटः शवखट्वा।

पाठा०—१ पाषण्डाना A., V. २ आत्मघातिन्यो A. ३ विवक्षितम् ... एतच्च बुद्धिपूर्वविषयम् क. ग.

वहनसाधने खट्वादि 'कट'शब्देनोच्यते। न चाहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैतद् श्रुतिविहिताग्नियज्ञपात्रादिप्रतिपत्तिलोपप्रसङ्गात्। अयं स्मार्तो दाहादिधो विप्रादिहताहिताग्निविषयं नास्कन्दतीत्याशङ्कनीयम्। यतश्चण्डालादिहताग्निसंबन्धिनामग्नियज्ञपात्राणां स्मृत्यन्तरे प्रतिपत्त्यन्तरं विधीयते—'वैतानं क्षिपेदप्सु आवसथ्यं चतुष्पथे। पात्राणि तु दहेदग्नौ यजमाने वृथा मृते॥' (मदग्निः) इति। तथा तच्छरीरस्यापि प्रतिपत्त्यन्तरमुक्तम्; 'आत्मनस्त्यानां नास्ति पतितानां तथा क्रिया। तेषामपि तथा गङ्गातोये संस्थापनं हितम्॥' स्मरणात्। तस्मादविशेषेण सर्वेषां दहनादिनिषेधः। अतः स्नेहादिना निषेधातिप्रायश्चित्तं कर्तव्यम्; 'कृत्वाऽग्निमुदकं स्नानं स्पर्शनं वहनं कथाम्। रज्जुच्छेदातं च तप्तकृच्छ्रेण शुद्ध्यति॥' इति स्मरणात्। एतच्च प्रत्येकं बुद्धिपूर्वके वेदित[1]। अबुद्धिपूर्वकमरणे तु 'एषामन्यतमं प्रेतं यो वहेत दहेत वा। कटोदकक्रियां कृच्छ्रं सान्तपनं चरेत्॥' इति संवर्तोक्तं द्रष्टव्यम्॥ यः पुनः 'तच्छवं स्पृष्टमश्रु वा पातितं यदि। पूर्वोक्तानामकारी चेदेकरात्रमभोजनम्॥' इति श्रुपातयोरुपवास उक्तः॥ असौ कृच्छ्रेष्वशक्तश्च तथा बन्धनच्छेदने दहने वा भैक्षाहारस्त्रिषवणं च' इति सुमन्तुना भैक्षाशित्वमुक्तं,—तदप्यशक्तस्यैव। न्यान्यपि तद्विषयाणि स्मृतिवाक्यानि व्यवस्थापनीयानि। अयं च दाहादिषेधो नित्यकर्मानुष्ठानासमर्थजीर्णवानप्रस्थादिव्यतिरिक्तविषयः; तेषामभ्यनुज्ञानात्। 'वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः। आत्मानं घातयेद्यस्तु ग्न्यनशनाम्बुभिः॥ तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः। तृतीये तूदकं चतुर्थे श्राद्धमाचरेत्॥' इति स्मरणात्॥

एवं येन येनोपाधिना आत्महननं शास्त्रतोऽभ्यनुज्ञायते तत्तद्व्यतिरिक्तमार्गेणाहनने श्राद्धाद्यौर्ध्वदेहिकेषु निषिद्धेषु किं पुनस्तेषां कार्यमित्यपेक्षायां वृद्धयाज्ञल्क्यछागलेयाभ्यामुक्तम्—'नारायणबलिः कार्यो लोकगर्हाभयान्नरैः। तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः। तस्मात्तेभ्योऽपि दातव्यमन्नमेव दक्षिणम्॥' इति। व्यासेनाप्युक्तम्—'नारायणं समुद्दिश्य शिवं वा प्रदीयते। तस्य शुद्धिकरं कर्म तद्भवेन्नैतदन्यथा॥' एवं इति। एवं नारायणबलिः तस्य शुद्ध्यापादनद्वारेण श्राद्धादिसंप्रदानत्वयोग्यतां जनयतीति और्ध्वदेहिमपि सर्वं कार्यमेव। अत एव षट्त्रिंशन्मतेऽपि और्ध्वदेहिकस्याभ्यनुज्ञा दृश्यते—ब्राह्मणहतानां च पतितानां तथैव च। ऊर्ध्वं संवत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकम्॥' इति। एवं संवत्सरादूर्ध्वमेव नारायणबलिं कृत्वौर्ध्वदेहिकं कार्यम्॥

नारायणबलिश्चेत्थं कार्यः—कस्यांचिच्छुक्लैकादश्यां विष्णुं वैवस्वतं यमं च पवदभ्यर्च्य तत्समीपे मधुघृतप्लुतांस्तिलमिश्रान्दश पिण्डान्विष्णुरूपिणं प्रेतमनुस्मरन् प्रेतनामगोत्रे उच्चार्य दक्षिणाग्रेषु दर्भेषु दक्षिणाभिमुखो दत्वा गन्धा-

---

पाठा०—१ पूर्वैव वेदितव्यम् ख.

दिभिरभ्यर्च्य पिण्डप्रवाहणान्तं कृत्वा नद्यां क्षिपेत्, न पत्न्यादिभ्यो
ततस्तस्यामेव रात्र्यामयुग्मान्ब्राह्मणानामन्त्र्योपोषितः श्वोभूते मध्याह्ने
धनं कृत्वा एकोद्दिष्टविधिना ब्राह्मणपादप्रक्षालनादितृप्तिप्रश्नान्तं कृत्वा
यज्ञावृतोल्लेखनाद्यवनेजनान्तं तूष्णीं कृत्वा विष्णवे ब्रह्मणे शिवाय
परिवारसहिताय चतुरः पिण्डान्दत्वा नामगोत्रसहितं तं प्रेतं संस्मृत्य
संकीर्त्य पञ्चमं पिण्डं दद्यात्। ततो विप्रानाचान्तान्दक्षिणाभिस्तोषयित्वा
चैकं गुणवत्तमं प्रेतबुद्ध्या संस्मरन् गोभूहिरण्यादिभिरतिशयेन सं
पवित्रपाणिभिर्विप्रैः प्रेताय तिलादिसहितमुदकं दापयित्वा स्वजनैः सार्धं

सर्पहते त्वयं विशेषः–संवत्सरं यावत्पुराणोक्तविधिना पञ्चम्यां
विधाय पूर्णे संवत्सरे नारायणबलिं कृत्वा सौवर्णं नागं दद्यात्, गां च
ततः सर्वमौर्ध्वदेहिकं कुर्यात् ॥

नारायणबलिस्वरूपं च वैष्णवेऽभिहितं यथा—'एकादशीं समा
पक्षस्य वै तिथिम्। विष्णुं समर्चयेद्देवं यमं वैवस्वतं तथा॥ दश
घृताभ्यक्तान्दर्भेषु मधुसंयुतान्। तिलमिश्रान्प्रदद्याद्वै संयतो दक्षिणामुख
बुद्धौ समासाद्य नद्यम्भसि ततः क्षिपेत्। नामगोत्रग्रहं तत्र पुष्पैरभ्यर्च्य
धूपदीपप्रदानं च भक्ष्यं भोज्यं तथा परम्। निमन्त्रयेत विप्रान्वै
नवापि वा॥ विद्यातपःसमृद्धान्वै कुलोत्पन्नान्समाहितान्। अपरेऽहनि
मध्याह्ने समुपोषितः॥ विष्णोरभ्यर्चनं कृत्वा विप्रांस्तानुपवेशयेत्। उदङ्मुखा
ज्येष्ठं पितृरूपमनुस्मरन्॥ मनो निवेश्य विष्णौ वै सर्वं कुर्याद
आवाहनादि यत्प्रोक्तं देवपूर्वं तदाचरेत्॥ तृप्तान्ज्ञात्वा ततो विप्रान्
यथाविधि। हविष्यव्यञ्जनेनैव तिलादिसहितेन च॥ पञ्च पिण्डा
दैवं[2] रूपमनुस्मरन्। प्रथमं विष्णवे दद्याद्ब्रह्मणे च शिवाय च।
सा[3]नुचराय चतुर्थं पिण्डमुत्सृजेत्। मृतं संकीर्त्य मनसा गोत्रपूर्वमतः
विष्णोर्नाम गृहीत्वैवं पञ्चमं पूर्ववत्क्षिपेत्। वि[4]प्रानाचम्य विधिवद
समर्चयेत्॥ एकं वि[5]द्वत्तमं विप्रं हिरण्येन समर्चयेत्। गवा वस्त्रेण भूम्या
तं मनसा स्मरन्॥ ततस्तिलाम्भो विप्रास्तु हस्तैर्दर्भसमन्वितैः। क्षिपेयुर
नाम बुद्धौ निवेश्य च॥ हविर्गन्धतिलाम्भस्तु तस्मै दद्युः समाहिताः।
जनैः सार्धं पश्चाद्भुञ्जीत वाग्यतः॥ एवं विष्णुमते स्थित्वा यो दद्यादा
समुद्धरति तं क्षिप्रं नात्र कार्या विचारणा॥' सर्पदंशनिमित्तं सौवर्ण
प्रतिकृतिरूपेण भविष्यत्पुराणे सुमन्तुनाभिहितम्—'सुवर्णभारनि
कृत्वा तथैव गाम्। व्यासाय दत्त्वा विधिवत्पितुरानृण्यमाप्नुयात्॥' इति

पाठा०—१ अर्चयेद्देवेशं क. २ देवरूपं क. ग. ३ सानु
क. ङ. ४ विप्रेणाचम्य क. ५ वृद्धतमं.

एवमुदकदानं सापवादमभिधायानन्तरं किं कार्यमित्यत आह—

**कृतोदकान्समुत्तीर्णान्मृदुशाद्वलसंस्थितान् ।**
**स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥ ७ ॥**

कृतमुदकदानं यैस्तान्**कृतोदकान्** स्नातान्**सम्यगुदकादुत्तीर्णान्मृदुशाद्वले** नवोद्गततृणप्रचयावृते भूभागे **सम्यक्स्थितान्** पुत्रादीन्कुलवृद्धाः **पुरातनैरितिहासैर्वक्ष्यमाणैरपवदेयुः** शोकनिरसनसमर्थैर्वचोभिर्बोधयेयुः ॥ ७ ॥

शोकनिरसनसमर्थेतिहासस्वरूपमाह[1]—

**मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् ।**
**करोति यः स संमूढो जलबुद्बुदसंनिभे ॥ ८ ॥**

'मनुष्य'शब्देन जरायुजाण्डजादिचतुर्विधभूतजातं लक्ष्यते; तस्य भावो मानुष्यं; तत्र संसरणधर्मित्वेन कदलीस्तम्भवदन्तःसाररहिते जलबुद्बुदवदचिरनश्वरे संसारे सारस्य स्थिरस्य मार्गणमन्वेषणं यः करोति स संमूढः अत्यन्तनष्टचित्तः तस्मात्संसारस्वरूपवेदिभिर्भवद्भिरित्थं न कार्यम् ॥ ८ ॥

**पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः ।**
**कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥ ९ ॥**

किंच, जन्मान्तरात्**मीयशरीरजनितैः कर्मबीजैः** स्वफलोपभोगार्थं **पञ्चधा** पृथिव्यादिपञ्चभूतात्मकतया पञ्चप्रकारं **संभृतो** निर्मितः **कायः स यदि** फलोपभोगनिवृत्तौ **पञ्चत्वमागतः** पुनः पृथिव्यादिरूपतां प्राप्त**स्तत्र** भवतां **किमर्था परिदेवना?** निष्प्रयोजनत्वान्नानुशोचनं कर्तव्यम्; वस्तुस्थितत्वात्। नहि केनचिद्वस्तुस्थितिरतिक्रमितुं शक्यते ॥ ९ ॥

**गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।**
**फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ॥ १० ॥**

अपि च, नेदमाश्चर्यं मरणं नाम; यतः **पृथिव्यादीनि** महान्त्यपि भूतानि **नाशं गच्छन्ति,** तथा **समुद्रा अपि** जरामरणविरहिणः, **अमरा अपि** प्रलयसमये अवसानं **गच्छन्ति,** कथमिवास्थिरतया **फेनसंनिभो** मरणधर्मा **भूतसंघो विनाशं न यास्यति?** उचितमेव हि मरणधर्मिणः प्रायणम् । अतो निष्प्रयोजनः शोकसमावेशः ॥ १० ॥

---

**टिप्प०**—1 शोकनिरसने 'संयोगोऽभिमतो येषां वियोगः कथमप्रियः । संयोगो हि वियोगेन ग्रस्त एवाभिजायते । किन्तु खल्वसि मूढस्त्वं शोच्यः किमनुशोचसि ॥ यदा तामनुशोचन्तः शोच्या यास्यन्ति तां गतिम् । अदर्शनादापतितः पुनश्चादर्शनं गतः ॥ त्वाऽसौ वेद न त्वन्तमतः किमनुशोचसि । नायमत्यन्तसंवासः कस्यचित्केनचित्सह । अपि स्वेन शरीरेण, किमुतान्यैः पृथग्जनैः ॥' इति चात्रोह्यम् ।

अनिष्टापादकत्वादप्यनुशोचनं न कार्यमित्याह—

**श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।**
**अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः॥**

यस्मादनुशोचद्भिर्बान्धवैर्वदननयननिर्गमितं **श्लेष्माश्रु** वा यस्मा... कामोऽपि **प्रेतो भुङ्क्ते, तस्मान्न रोदितव्यं;** किंतु प्रेतहितैषुभिः स्व... **नुसारेण** श्राद्धादि**क्रियाः कार्याः** ॥ ११ ॥

**इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः।**
**विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः॥ १...**
**आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान्।**
**प्रविशेयुः समालभ्य कृत्वाऽश्मनि पदं शनैः॥ १...**

**एवं** कुलवृद्धवचांसि **सम्यगाकर्ण्य** त्यक्तशोकाः सन्तो बाला... **कृत्वा गृहं गच्छेयुः** । गत्वा च **वेश्मनो द्वारि** स्थित्वा **नियता...** मनस्काः **निम्बपत्राणि विदश्य** दशनैः खण्डयित्वा **आचमनं** च... **ऽग्न्युदकगोमयगौरसर्षपानालभ्य,** 'आदि'ग्रहणात् 'दूर्वाप्रवाल... च 'इति शङ्खोक्तौ दूर्वाङ्कुरवृषभावपि स्पृष्ट्वा **अश्मनि च पदं** निधा... **रद्धतं वेश्मनि प्रविशेयुः** ॥ १२—१३ ॥

अतिदेशमाह—

**प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि।**
**इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात्॥ १...**

यदेतत्पूर्वोक्तं निम्बपत्रदशनादि **वेश्मप्रवेशनान्तं कर्म,** तन्न केवलं... नामपि तु परेषामपि धर्मार्थं **प्रेतालंकारनिर्हरणादिकं कुर्वतां** भव... 'प्रवेशनादिकं' इत्यत्र 'आदि'शब्दोऽमाङ्गलिकत्वात्प्रतिलोमक्रमाभिप्रायः... च धर्मार्थनिर्हरणादौ प्रवृत्तानां तत्क्षणाच्छुद्धिमिच्छतां असपिण्डानां स्ना... यामाभ्यामेव शुद्धिः। यथाह पराशरः—'अनाथं ब्राह्मणं प्रेतं ये वहन्ति... तयः। पदे पदे यज्ञफलमानुपूर्व्या लभन्ति ते॥ न तेषामशुभं किंचित्... शुभकर्मिणि। जलावगाहनात्तेषां सद्यः शौचं विधीयते॥' इति॥ ... निर्हरणे तु मनूक्तो विशेषः (५।१०१।१०२)—'असपिण्डं द्विजं प्रे... निर्हृत्य बन्धुवत्। विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान्। य... तेषां तु दशाहेनैव शुध्यति। अनदन्नन्नमह्नैव न चेत्तस्मिन्गृहे वसेत्॥' अत्रेयं व्यवस्था—यः स्नेहादिना शवनिर्हरणं कृत्वा तदीयमेवान्नमश्नाति...

पाठा०—१ 'प्रयतः' A. २ 'आचम्याथाग्निमुदकं' A. ३ तत्क्ष... ङ., तत्क्षणाच्छुद्धिरन्येषां A.

वसति, तस्य दशाहेनैव शुद्धिः। यस्तु केवलं तद्गृहे वसति, न पुनस्तदन्नमश्नाति, त्रिरात्रम्; यः पुनर्निर्हरणमात्रं करोति, न तद्गृहे वसति, न च तदन्नमश्नाति, एकाह इति-एतत्सजातीयविषयम्; विजातीयविषये पुनर्यज्जातीयं प्रेतं निर्हरति जातिप्रयुक्तमाशौचं कार्यम्; यथाह गौतमः (१४।१९)—'अवरश्चेद्वर्णः पूर्वं उपस्पृशेत्पूर्वो वाऽवरं तत्र तच्छवोक्तमाशौचम्' इति। उपस्पर्शनं निर्हरणम्। विप्रस्य शूद्रनिर्हरणे मासमाशौचम्; शूद्रस्य तु विप्रनिर्हरणे दशरात्रमित्येवं शवआशौचं कर्तव्यमित्यर्थः ॥ १४ ॥

ब्रह्मचारिणं प्रत्याह—

**आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती।**
**संकटान्नं च नाश्नीयान्न च तैः सह संवसेत् ॥ १५ ॥**

**आचार्य** उक्तलक्षणः, माता च पिता च **पितरौ, उपाध्यायः** पूर्वोक्तः, तान्निर्हृत्यापि **व्रती** ब्रह्मचारी **व्रत्येव,** न पुनरस्य व्रतभ्रंशः। 'कट'शब्देनाशवं लक्ष्यते, तत्सहचरितमन्नं **सकटान्नं** तद्ब्रह्मचारी नाश्नीयात्; **न चाशौचिभिः सह संवसेत्**। एवं वदता आचार्यादिव्यतिरिक्तप्रेतनिर्हरणे ब्रह्मचारिणो व्रतलोप इत्यर्थादुक्तं भवति। अत एव वसिष्ठेनोक्तम्—'ब्रह्मचारिणः शवकर्मिणो व्रतान्निवृत्तिरन्यत्र मातापित्रोः' इति ॥ १५ ॥

आशौचिनां नियमविशेषमाह—

**क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् क्षितौ।**
**पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् ॥ १६ ॥**

क्रीतमयाचितलब्धं वा अशनं येषां ते क्रीतलब्धाशनाः, भवेयुरिति शेषः। क्रीतलब्धाशननियमात्तदलाभेऽनशनमर्थात्सिद्धं भवति। अत एव वसिष्ठः—'गृहान्वर्जित्वा अधप्रस्तरे त्र्यहमनश्नन्त आसीरन् क्रीतोत्पन्नेन वा वर्तेरन्' इति। अधप्रस्तर आशौचिनां शयनासनार्थस्तृणमयः प्रस्तरः। ते च सपिण्डा भूमावेव पृथक्पृथक् शयीरन्, न खट्वादौ॥ मनुनाऽप्यत्र विशेषो दर्शितः (५।७३)—'अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम्। मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ ॥' इति। तथा गौतमेनापि विशेष उक्तः (१४।३०)—'अधःशय्यासनिनो ब्रह्मचारिणः शवकर्मिणः' इति। तथा पिण्डपितृयज्ञप्रक्रियया प्राचीनावीतित्वादिरूपया प्रेताय दिनत्रयं पिण्डरूपमन्नं तूष्णीं क्षितौ देयम्। यथाह मरीचिः—'प्रेतपिण्डं बहिर्दद्याद्दर्भमन्त्रविवर्जितम्। प्रागुदीच्यां चरुं कृत्वा स्नातः प्रयतमानसः ॥' इति। दर्भमन्त्रविवर्जितत्वमनुपनीतविषयम्। 'असंस्कृतानां भूमौ पिण्डं दद्यात्संस्कृतानां कुशेषु' इति प्रचेतःस्मरणात्। तथा कर्तृनियमश्च गृह्यपरिशिष्टादिज्ञेयः—'असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्। प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत् ॥' इति। तथा द्रव्यविनियमश्च शुनःपुच्छेन

पाठा०—१स कटान्नं ∆. २ पृथक्पृथक्. ख. ∆. ३ रिणः सर्वं इति क.

दर्शितः—'शालिना सक्तुभिर्वाऽपि शाकैर्वाऽप्यथ निर्वपेत् । प्रथमेऽहनि तदेव स्याद्दशाहिकम् ॥ तूष्णीं प्रसेकं पुष्पं च दीपं धूपं तथैव च ॥' इति । श्च पाषाणे देयः । 'भूमौ माल्यं पिण्डं पानीयमुपले वा दद्युः' इति शङ्ख नच 'दद्युः' इति बहुवचनेनोदकदानवत्सर्वैः पिण्डदानं कार्यमित्याशङ्कनीयं पुत्रेणैव कार्यम् । तदभावे प्रत्यासन्नेन सपिण्डानामन्यतमेन, तदभावे मातृस ण्डादिना कार्यम्; 'पुत्राभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युः ऋत्विगाचार्याः' इति गौतमस्मरणात् । पुत्रबहुत्वे पुनर्ज्येष्ठेनैव कार्यम् । ' मतिं कृत्वा ज्येष्ठेनैव तु यत्कृतम् । द्रव्येण वाविभक्तेन सर्वैरेव कृतं भ इति मरीचिस्मरणात् । पिण्डसंख्यानियमश्च—ब्राह्मणस्य दश पिण्डाः, द्वादशैवेति । एवमाशौचदिवससंख्यया विष्णुनाऽभिहितम्—'यावदाशौचं स्योदकं पिण्डमेकं च दद्युः' इति । तथा स्मृत्यन्तरेऽपि—'नवभिर्दिवसैर्द पिण्डान्समाहितः । दशमं पिण्डमुत्सृज्य रात्रिशेषे शुचिर्भवेत् ॥' इति वचनमपरेद्युः क्रियमाणश्राद्धार्थब्राह्मणनिमन्त्रणाभिप्रायेण । योगीश्वरेण तु त्र्यहदानमभिहितम्[1] । अनयोश्च गुरुलघुकल्पयोरुदकदानविषयोक्ता विज्ञेया । अत्रापरः शातातपीयो विशेषः—'आशौचस्य तु ह्रासेऽपि पिण्डा दशैव तु' इति ॥ त्रिरात्राशौचिनां पुनः पारस्करेण विशेषो दर्शितः—'प्रथमे देयास्त्रयः पिण्डाः समाहितैः । द्वितीये चतुरो दद्यादस्थिसंचयनं तथा ॥ दद्यात्तृतीयेऽह्नि वस्त्रादि क्षालयेत्तथा ॥' इति ॥ १६ ॥

**जलमेकाहमाकाशे स्थाप्यं क्षीरं च मृन्मये ।**

किंच, **जलं क्षीरं च मृन्मये** पात्रद्वये पृथक् **पृथगाकाशे** शिक्या **काहं स्थापनीयम्** । अत्र विशेषानुपादानात्प्रथमेऽहनि कार्यम् । तथा पार चनात् । 'प्रेतात्र स्नाहि' इत्युदकं स्थाप्यं 'पिब चेदम्' इति क्षीरम् ॥ तथास्थि च प्रथमादिदिनेषु कार्यम्; तथाह संवर्तः—'प्रथमेऽह्नि तृतीये वा सप्तमे तथा । अस्थिसंचयनं कार्यं दिने तद्गोत्रजैः सह ॥' इति । क्वचिद्द्वितीये त्वस्थि इत्युक्तम् । वैष्णवे तु 'चतुर्थे दिवसेऽस्थिसंचयनं कुर्यात् तेषां च गङ्गाम्भसि इति । अतोऽन्यतमस्मिन्दिने स्वगृह्योक्तविधिनाऽस्थिसंचयनं कार्यम् । अङ्गिर विशेषो दर्शितः—'अस्थिसंचयने यागो देवानां परिकीर्तितः । प्रेतीभूतं त पः शुचिर्न करोति चेत् ॥ देवतानां तु यजनं तं शपन्त्यथ देवताः ॥' श्चात्र श्मशानवासिन्यः तत्र पूर्वदग्धाः[1] 'श्मशानवासिनो देवाः शवानां परि इति तेनैवोक्तम् । अतस्तान्देवानचिरमृतं च प्रेतमुद्दिश्य धूपदीपादिभिः पि 'चान्नेन तत्र पूजा कार्येत्युक्तं भवति ॥ तथा वपनं च दशमेऽहनि कार्यम्; ऽहनि संप्राप्ते स्नानं ग्रामाद्बहिर्भवेत् । तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि

टिप्प०—1 याज्ञवल्क्यमते तु त्रिरात्रमेव पिण्डदानम्, अन्ये तु यावदाशौचं पिण्डो देय इत्याहुः– यथाह विष्णुः–'यादाशौचं प्रेतस्योदकं पिण्डमेकं च दद्युः'

पाठा०—१ भूतपूर्वदग्धाः ङ.

देवलस्मरणात् ॥ तथा स्मृत्यन्तरेऽपि—'द्वितीयेऽहनि कर्तव्यं क्षुरकर्म प्रयतः। तृतीये पञ्चमे वाऽपि सप्तमे वाऽऽप्रदानतः ॥' इति श्राद्धप्रदानादर्वागनियम यावत्। वपनं च केषामित्याकाङ्क्षायामापस्तम्बेनोक्तम्—'अनुभाविनां च वपनम्' इति। अयमर्थः—शावं दुःखमनुभवन्तीत्यनुभाविनः सपिण्डाः, तेषां विशेषेण वपनमुताल्पवयसामित्यपेक्षायामिदमेवोपतिष्ठते—'अनुभाविनां च परिवपनम्'इति। अनु पश्चाद्भवन्तीत्यनुभाविनोऽल्पवयसस्तेषां वपनमिति। अनुभाविनः पुत्रा इति केचिन्मन्यन्ते; 'गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ। आधानकाले सोमे च वपनं सप्तसु स्मृतम् ॥' इति नियमदर्शनात् ॥

अशुचित्वेन सकलश्रौतस्मार्तकर्माधिकारनिवृत्तौ प्रसक्तायां केषुचिदभ्यनुज्ञार्थमाह—

**वैतानौपासनाः कार्याः क्रियाश्च श्रुतिचोदनात् ॥ १७ ॥**

वितानोऽग्नीनां विस्तारस्तत्र भवा **वैतानाः** त्रेताग्निसाध्या अग्निहोत्रदर्शपूर्णमासाद्याः क्रिया उच्यन्ते। प्रतिदिनमुपास्यत इत्युपासनो गृह्याग्निस्तत्र भवा औपासनाः सायंप्रातर्होमक्रिया उच्यन्ते। ता वैतानौपासना वैदिक्यः क्रियाः कार्याः। कथं वैदिकत्वमिति चेत्,—**श्रुतिचोदनात्**। तथा हि—'यावज्जीवमग्निहोत्रं जुहुयात्' इत्यादिश्रुतिभिरग्निहोत्रादीनां चोदना स्पष्टैव। तथा 'अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठात्' इति श्रुत्यौपासनहोमोऽपि चोद्यते। अत्र च श्रौतत्वविशेषणोपादानात्स्मार्तक्रियाणां दानादीनामननुष्ठानं गम्यते। अत एव वैयाघ्रपदेनोक्तम्—'स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके। श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात् ॥' इति श्रौतानां च कार्यत्वाभिधानं नित्यनैमित्तिकाभिप्रायेण; यथाह पैठीनसिः—'नित्यानि विनिवर्तेरन्वैतानवर्जं शालाग्नौ चैके' इति। 'नित्यानि विनिवर्तेरन्' इत्यविशेषेण आवश्यकानां नित्यनैमित्तिकानां निवृत्तौ प्रसक्तायां 'वैतानवर्जम्' इत्यग्नित्रयसाध्यावश्यकानां पर्युदासः; 'शालाग्नौ चैके' इति शालाग्नौ भवानामप्यावश्यकानां पाक्षिकः पर्युदास उक्तः। अतस्तेष्वाशौचं नास्त्येव। अन्येषां पुनः शौचाभावादननुष्ठानम्। मनुनाप्यनेनैवाभिप्रायेणोक्तम् (५।८४)—'प्रत्यूहेन्नाग्निषु क्रिया' इति। अग्निषु क्रिया न प्रत्यूहेदिति अग्निसाध्यानां पञ्चमहायज्ञादीनां निवृत्तिः। अत एव संवर्तः—'होमं तत्र प्रकुर्वीत शुष्कान्नेन फलेन वा। पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः ॥' इति वैश्वदेवस्याग्निसाध्यत्वेऽपि वचनान्निवृत्तिः। 'विप्रो दशाहमासीत वैश्वदेवविवर्जितः' इति तेनैवोक्तत्वात् ॥ 'सूतके कर्मणां त्यागः संध्यादीनां विधीयते'

टिप्प०—1 वितानस्त्रेता, तत्संबन्धिन्यो वैतानाः। अत्र केचिद्व्याचक्षते—विताने भवा वैतानाः, उपासने गृह्ये भवा औपासनाः, वैतानाश्चौपासनाश्च वैतानोपासनाः क्रिया इति,–तदेतद्व्याख्यानमरमणीयम्; तथात्वे वैतान्यौपासन्य इति शब्दापत्तेः, न पुनर्वैतानोपासना इति ज्ञेयम्।

पाठा०—१ गुरौ मृते क. २ वैतानो A. ३ चोदनाः A. ४ बध्यते क.

इति यद्यपि संध्याया विनिवृत्तिः श्रूयते, तथाप्यञ्जलिप्रक्षेपादिकं कार्यं 'सूतके सावित्र्या चाञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन्नमस्कुर्यात्' पैठीनसिस्मरणात् । यद्यपि 'वैतानौपासनाः कार्याः' इति सामान्येनोक्तं, तथा-न्येन कारयितव्यम् । 'अन्य एतानि कुर्युः' इति पैठीनसिस्मरणात् । तथा नाप्युक्तम्—'सूतके मृतके चैव अशक्तौ श्राद्धभोजने । प्रवासादिनिमित्ते हावयेन्न तु हापयेत् ॥' इति । तथा स्मार्तत्वेऽपि पिण्डपितृयज्ञश्रवणाकर्मो-ज्यादिकश्च नित्यहोमः कार्य एव; 'सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत् ॥' इति जातूकर्ण्यस्मरणात् । साङ्गे कर्मण्यन्यकर्तृत्वं, तथापि स्वद्रव्यत्यागात्मकं प्रधानं स्वयं कुर्यात्; तस्या-न्यनिष्पाद्यत्वात् । अत एवोक्तम्—'श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात्' इति; यत्पुनः—'दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते' इति होमप्रतिषेधः स काम्याभिप्रायो वैश्वदेवाभिप्रायो वा व्यवस्थापनीयः । तथा सूतकान्नभोजन-मपि न कार्यम्; 'उभयत्र दशाहानि कुलस्यान्नं न भुज्यते' इति यमस्मरणात् । उभयत्र जननमरणयोः । 'दशाहानि' इत्याशौचकालोपलक्षणम् । कुलस्य तद्‌-युक्तस्य संबन्ध्यन्नं असकुल्यैर्न भोक्तव्यं, सकुल्यानां पुनर्न दोषः; 'सूतके कुलस्यान्नमदोषं मनुरब्रवीत्' इति तेनैवोक्तत्वात् । अयं च निषेधो दातृभोक्त्रो-न्यतरेण जनने मरणे वा ज्ञाते सति वेदितव्यः; 'उभाभ्यामपरिज्ञाते सूतके नैव दोषकृत् । एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेत् ॥ इति षट्त्रिंशन्मते दर्शनात् । तथा विवाहादिषु सूतकोत्पत्तेः प्राक् ब्राह्मणार्थं पृथक्कृतमन्नं भोज्य-मेव; 'विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । पूर्वसंकल्पितार्थेषु न दोषः परि-कीर्तितः' ॥' इति बृहस्पतिस्मरणात् । तथापरोऽपि विशेषः षट्त्रिंशन्मते दर्शितः—'विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ॥ भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके । अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः ॥' इति । तथाशौचपरिग्रहत्वेऽपि केषुचिद्द्रव्येषु दोषा-भावः । यथाह मरीचिः—'लवणे मधुमांसे च पुष्पमूलफलेषु च । शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयस्सु च ॥ तिलौषधाजिने चैव पक्वापक्वे स्वयंग्रहः । पण्येषु चैव सर्वेषु नाशौचं मृतसूतके ॥' इति । पक्वं भक्ष्यजातं मोदकादि, अपक्वं तण्डुलादि, 'स्वयंग्रह' इति स्वयमेव स्वाम्यनुज्ञातो गृह्णीयादित्यर्थः । पक्वापक्वाभ्यनुज्ञानमन्नसत्रप्रवृत्तविषयम्; 'अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम् । भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु पयः पिबेत् ॥' इत्यङ्गिरःस्मरणात् । अत्र 'पक्व'शब्दो भक्ष्यव्यतिरिक्तौदनादिविषयः ॥ शवसंसर्गनिमित्ताशौचे त्वयं विशेष उक्तः—'आशौचं यस्य संसर्गादापतेद्गृहमेधिनः । क्रियास्तस्य न लुप्यन्ते गृह्याणां च न तद्भवेत् ॥' इति,—तदाशौचं केवलं गृहमेधिन एव; न पुनस्तदुद्-भवानां भार्यादीनां तद्द्रव्याणां च भवेदित्यर्थः । अतिक्रान्ताशौचेऽप्यदत्ते

पाठा०—१ अनुज्ञातमन्नं ख.

...न्तरे दर्शितः—'अतिक्रान्ते दशाहे तु पश्चाज्जानाति चेद्गृही । त्रिरात्रं ...कं तस्य न तद्व्यस्य कर्हिचित् ॥' ( मनुः ५।७६ )इति ॥ १७ ॥

एवमाशौचिनो विधिप्रतिषेधरूपान्धर्मानभिधायाधुना आशौचनिमित्तं काल-...मं चाह—

**त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते ।**
**ऊनद्विवर्ष उभयोः सूतकं मातुरेव हि ॥ १८ ॥**

शवनिमित्तं **शावम्** । 'सूतक'शब्देन च जननवाचिना तन्निमित्तमाशौचं ...यते। एवं च वदता जननमरणयोराशौचनिमित्तत्वमुक्तं भवति । तच्च जनन-...मुत्पन्नज्ञातमेव निमित्तम् । 'निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च' (मनुः ५।७७ )इत्यादिलिङ्गदर्शनात् । तथा ( मनुः ५।७५ )—'विगतं तु विदे-...स्थं शृणुयाद्यो ह्यनिर्दशम् । यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥' इत्यादि-...वाक्यारम्भसामर्थ्याच्च । उत्पत्तिमात्रापेक्षत्वे ह्याशौचस्य दशाहाद्याशौचकालनिय-...मस्तत्प्रभृतिका एवेति अनिर्दशज्ञातिमरणश्रवणे दशरात्रशेषमेवाशौचमर्थात्सि-...ध्यतीति 'यच्छेषं दशरात्रस्य' इत्यनारम्भणीयं स्यात् । तस्माज्ज्ञातमेव जननं ...मरणं च निमित्तम् । तच्चोभयनिमित्तमप्याशौचं **त्रिरात्रं दशरात्रं चेष्यते** मन्वादिभिः ॥ अत्राशौचप्रकरणे अहर्ग्रहणं रात्रिग्रहणं चाहोरात्रोपलक्षणार्थम् । मन्वादिभिः 'इष्यते' इति वचनं तदुक्तसपिण्डसमानोदकरूपविषयभेदप्रदर्शनार्थम् ॥ यथा हि (मनुः ५।५९ )—'दशाहं शावमाशौचं सपिण्डेषु विधीयते ।', 'जनने-...ऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छताम् ॥' ( मनुः ५।६१ ) 'जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते' । ( मनुः ५।७१ ) 'शवस्पृशो विशुद्ध्यन्ति त्र्यहात्तूदकदा-यिनः ॥'[1] ( मनुः ५।६४ ) इत्येतैर्वाक्यैस्त्रिरात्रदशरात्रयोः समानोदकसपिण्ड-विषयत्वेन व्यवस्था कृता। अतः सपिण्डानां सप्तमपुरुषावधिकानामविशेषेण दश-रात्रम्, समानोदकानां त्रिरात्रमिति ॥ यत्पुनः स्मृत्यन्तरवचनम्—'चतुर्थे दशरात्रं स्यात्षण्णिशाः पुंसि पञ्चमे । षष्ठे चतुरहाच्छुद्धिः सप्तमे त्वहरेव तु ॥' इति, ...विगीतत्वान्नादरणीयम् । यद्यप्यविगीतं तथापि मधुपर्काङ्गपश्वालम्भनवल्लोक-विद्विष्टत्वान्नानुष्ठेयम् । 'अस्वर्ग्यं[2] लोकविद्विष्टं धर्म्यमप्याचरेन्न तु' (आ० १५६) इति मनुस्मरणात् । नच सप्तमे प्रत्यासन्ने सपिण्ड एकाहो विप्रकृष्टाष्टमादिषु समानोदकेषु त्र्यहमिति युक्तम् । एवमविशेषेण सपिण्डानामाशौचे प्राप्ते क्वचि-न्नियमार्थमाह । ऊनद्विवर्षे संस्थिते उभयोरेव मातापित्रोर्दशरात्रमाशौचं न सर्वेषां सपिण्डानाम् । तेषां तु वक्ष्यति 'आ दन्तजन्मनः सद्यः' ( प्रा० २३ ) इति । तथा च पैङ्ग्यः—'गर्भस्थे प्रेते मातुर्दशाहं, जात उभयोः, कृते नाम्नि सोदराणां च' इति । अथवा अयमर्थः—**ऊनद्विवर्षे संस्थिते उभयोर्**मातापि-

टिप्प०—1 उदकदायिनः=समानोदकाः; तल्लक्षणं चोक्तं **मनुना**—'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु जन्मनाम्नोरवेदने ॥' इति । एवंसंज्ञका-...नामस्माकं च संतानजन्मेति यावज्ज्ञानभावस्तावत्समानोदकत्वमित्याशयः । 2 इदं वचनं पूर्वमाचाराध्याये आलोचनीयम्.

त्रोरेव अस्पृश्यत्वलक्षणमाशौचं न सपिण्डानाम् । तथा स्मृत्यन्तरे—'ऊने प्रेते मातापित्रोरेव नेतरेषाम्' इति अस्पृश्यत्वलक्षणमभिप्रेतम् । इतरस्य कर्मण्यनधिकारलक्षणस्य सपिण्डेष्वपि 'आ दन्तजन्मनः सद्यः' (प्रा० इत्यादिभिर्विहितत्वात् । अत्र दृष्टान्तः—**सूतकं मातुरेव** हीति । यथा जननिमित्तमस्पृश्यत्वलक्षणमाशौचं मातुरेव केवलं तथोनद्विवर्षोपरमे मातापि त्रोरेवास्पृश्यत्वमिति । ऊनद्विवर्षे सपिण्डानामस्पृश्यत्वं प्रतिषेधताऽन्यत्रास्पृश्य त्वमभ्यनुज्ञातं भवति । तथा च देवलः—'स्वाशौचकालाद्विज्ञेयं स्पर्शनं त्रिभागतः । शूद्रविट्क्षत्रविप्राणां यथाशास्त्रं प्रचोदितम् ॥' इति । एतच्चानुगमन प्रयाणनिमित्ते अतिक्रान्ताशौचे च त्रिरात्रादौ वेदितव्यम् । उपनीतविषये तेनैवोक्तम्—'दशाहादित्रिभागेन कृते संचयने क्रमात् । अङ्गस्पर्शनमिच्छन्ति वर्णानां तत्त्वदर्शिनः ॥ त्रिचतुःपञ्चदशभिः स्पृश्या वर्णाः क्रमेण तु । भोज्यान्नो दशभिर्विप्रः शेषा द्वित्रिषड्उत्तरैः ॥' इति । द्व्युत्तरैर्दशभिः त्र्युत्तरैर्द्वादशभिः षडु त्तरैः पञ्चदशभिरिति द्रष्टव्यम् ॥ १८ ॥

जननिमित्तमस्पृश्यत्वलक्षणमाशौचमाह—

**पित्रोस्तु सूतकं मातुस्तदसृग्दर्शनाद्ध्रुवम् ।**
**तदहर्न प्रदुष्येत पूर्वेषां जन्मकारणात् ॥ १९ ॥**

**सूतकं** जननिमित्तमस्पृश्यत्वलक्षणमाशौचं **पित्रोर्**मातापित्रोरेव, न सपिण्डानाम् । **तच्चास्पृश्यत्वं मातुर्ध्रुवं** दशाहपर्यन्तं स्थिरमित्यर्थः । **तदसृग्दर्शनात्** तस्याः संबन्धित्वेनासृजो दर्शनात् । अत एव वसिष्ठः (४ —'नाशौचं विद्यते पुंसः संसर्गं चेन्न गच्छति । रजस्तत्राशुचि ज्ञेयं तच्च न विद्यते ॥' इति । पितुस्तु ध्रुवं न भवति स्नानमात्रेणास्पृश्यत्वं निवर्तते । यथाऽऽह संवर्तः—'जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते । माता शुध्येद्द शाहेन स्नानात्तु स्पर्शनं पितुः ॥' इति । 'माता शुध्येद्दशाहेन' इत्येतच्च व्यव हारयोग्यतामात्रम् । अदृष्टार्थेषु पुनः कर्मसु पैठीनसिना विशेष उक्तः—'सूतिकां पुत्रवतीं विंशतिरात्रेण कर्माणि कारयेत् । मासेन स्त्रीजननीम्' इति । अङ्गिरसा च सपिण्डानामस्पृश्यत्वाभावः स्पष्टीकृतः—'सूतके सूतिकावर्ज्यं संस्पर्शो न निषिद्ध्यते । संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते ॥' इति । यस्मिन्नहनि कुमारजननं तदहर्न प्रदुष्येत । तन्निमित्तदानाद्यधिकारापहारकृन्न भवति । यस्मात्तस्मिन्नहनि पूर्वेषां पित्रादीनां पुत्ररूपेण जन्म उत्पत्तिस्तस्मात्तदहर्न दुष्येत । तथा च वृद्धयाज्ञवल्क्येनोक्तम्—'कुमारजन्मदिवसे विप्रैः कार्यः प्रति ग्रहः । हिरण्यभूगवाश्वाजवासःशय्यासनादिषु ॥ तत्र सर्वं प्रतिग्राह्यं कृतान्नं तु न भक्षयेत् । भक्षयित्वा तु तन्मोहाद्द्विजश्चान्द्रायणं चरेत् ॥' इति ॥ व्यासेन विशेष उक्तः—'सूतिकावासनिलया जन्मदा नाम देवताः । तासां यागनिमित्तं तु शुचिर्जन्मनि·कीर्तिता ॥ प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा । त्रिष्वेते

सूतकं पुत्रजन्मनि ॥' मार्कण्डेयेनाप्युक्तम्—'रक्षणीया तथा षष्ठी निशा विशेषतः। रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः॥ पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः। रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके ॥' इति ॥ १९ ॥

आशौचमध्ये पुनर्जनने मरणे वा जाते 'प्रतिनिमित्तं नैमित्तिकमावर्तते' इति पुनर्दशाहाद्याशौचप्राप्तौ तदपवादमाह—

## अन्तरा जन्ममरणे शेषाहोभिर्विशुद्ध्यति।

वर्णापेक्षया वयोवस्थापेक्षया वा यस्य यावानाशौचकालस्तदन्तरा तत्समस्य न्यूनस्य वाऽऽशौचस्य निमित्तभूते **जनने मरणे** वा जाते **पूर्वाशौचावशिष्टैरेवाहोभिर्विशुद्ध्यति** । न पुनः पश्चादुत्पन्नजननादिनिमित्तं पृथगाशौचं कार्यम् । यदा पुनरल्पाद्वर्तमानाशौचाद्दीर्घकालमाशौचमन्तरा तदा न पूर्वशेषेण शुद्धिः । यथाऽऽहोशनाः—'स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि । न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुद्ध्यति ॥' इति । ...ऽप्याह—'अवृद्धिमदाशौचं पश्चिमेन समापयेत्' इति । अत्र 'चान्तरा जन्ममरणे' इति यद्यप्यविशेषेणाभिहितं, तथापि न सूतकान्तर्वर्तिनः शावस्य पूर्वाशौचशेषेण शुद्धिः । यथाहाङ्गिराः—'सूतके मृतकं चेत्स्यान्मृतके त्वथ सूतकम् । तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकम् ॥' इति । तथा षट्त्रिंशन्मते—'शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् । शावेन शुद्ध्यते सूतिर्न सूतिः शावशोधिनी ॥' इति । तस्मान्न सूतकान्तःपातिनः शावाशौचस्य पूर्वशेषेण शुद्धिः, किंतु शावान्तःपातिन एव सूतकस्य । तथा सजातीयान्तःपातित्वेऽपि शावस्य क्वचित्पूर्वशेषेण शुद्धेरपवादः स्मृत्यन्तरे दर्शितः—'मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता । पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम् ॥' इति । अयमर्थः—मातरि पूर्वं मृतायां तन्निमित्ताशौचमध्ये यदि पितुरुपरमः तदा न पूर्वशेषेण शुद्धिः, किंतु पितुः प्रायणनिमित्ताशौचकालेनैव शुद्धिः कार्या । पितुः प्रयाणनिमित्ताशौचमध्ये मातरि स्वर्यातायामपि न पूर्वशेषमात्राच्छुद्धिः किंतु पूर्वाशौचं समाप्योपरि पक्षिणीं क्षिपेत् इति ॥ तथाऽऽशौचसन्निपातकालविशेषकृतोऽप्यपवादो गौतमेनोक्तः (१४।७,८)—'रात्रिशेषे सति द्वाभ्यां प्रभाते तिसृभिः' इति । अयमर्थः—रात्रिमात्रावशिष्टे पूर्वाशौचे यद्याशौचान्तरं निपतेत्तर्हि पूर्वाशौचं समाप्यानन्तरं द्वाभ्यां रात्रिभ्यां शुद्धिः । प्रभाते पुनस्तस्या रात्रेः पश्चिमे यामे जननाद्याशौचान्तरसन्निपाते सति तिसृभी रात्रिभिः शुद्धिः,

टिप्प०—1 समसंख्याकदिनापनोद्याशौचपरमेतद्वचनम् । यदाह बौधायनः—जननमरणयोः संनिपाते समानो दशरात्रोऽथो यदि दशरात्राः संनिपतेयुः आद्यं दशरात्रमाशौचमानवमाद्दिवसात्' इति ।

पाठा०—१ अहोवृद्धिमत् ख. २ शावस्य ख.

या० २९

न पुनस्तच्छेषमात्रेण । शातातपेनाप्युक्तम्—'रात्रिशेषे द्व्यहाच्छुद्धिर्
शुचिर्द्व्यहात्' इति। प्रेतक्रिया पुनः–'सूतकसन्निपातेऽपि न निवर्तते' इति
कम्—'अन्तर्दशाहे जननात्पश्चात्स्यान्मरणं यदि । प्रेतमुद्दिश्य कर्तव्यं पि
स्वबन्धुभिः ॥ प्रारब्धे प्रेतपिण्डे तु मध्ये चेज्जननं भवेत् । तथैवाशौचपिण्डा
शेषान्दद्याद्यथाविधि ॥' इति । तथा शावाशौचयोः सन्निपातेऽपि प्रेत
कार्यम्; तुल्यन्यायत्वात् । तथा जातकर्मादिकमपि पुत्रजन्मनिमित्तकमाशौच
सन्निपातेऽपि कार्यमेव । यथाह प्रजापतिः–'आशौचे तु समुत्पन्ने पुत्रजन्म
भवेत् । कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति ॥' इति ॥

पूर्णप्रसवकालजननाशौचमभिधायाधुना अप्राप्तकालगर्भनिःसरणनिमित्त
चमाह—

## गर्भस्रावे मासतुल्या निशाः शुद्धेस्तु कारणम् ॥ २०

स्रवतिर्यद्यपि लोके द्रवद्रव्यकर्तृके परिस्यन्दे प्रयुज्यते,तथाऽप्यत्र द्रवाद्रवद्रव्य
रणरूपेऽधःपतने वर्तते । कुतः? द्रवत्वस्य प्रथममास एव संभवात्तत्र च 'मास
निशाः' इति बहुवचनानुपपत्तेः । **गर्भस्रावे** यावन्तो गर्भग्रहणमासास्त
**संख्याका निशाः शुद्धेः कारणम्** । एतच्च स्त्रिया एव; 'गर्भस्रावे मास
रात्रयः स्त्रीणां, स्नानमात्रमेव पुरुषस्य' इति वृद्धवसिष्ठस्मरणात् । यत्पुनर
'त्र्यहं च' (१४।१८) इति त्रिरात्रमुक्तं,–तन्मासत्रयादर्वाग्वेदितव्यम्; 'गर्भ
यथामासमचिरे तूत्तमे त्रयः । राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव तु ॥
तु शूद्रस्य शुद्धिरेषा प्रकीर्तिता ॥' इति मरीचिस्मरणात् । अचिरे मासत्रय
गर्भस्रावे उत्तमे ब्राह्मणजातौ त्रिरात्रमित्यर्थः । एतच्च षण्मासपर्यन्ते[1] द्रष्ट
सप्तमादिषु पुनः परिपूर्णमेव प्रसवाशौचं कार्यम्; तत्र परिपूर्णाङ्गगर्भस्य
निर्गमदर्शनात् । तत्र च लोके 'प्रसव'शब्दप्रयोगात्, 'षण्मासाभ्य
यावद्गर्भस्रावो भवेद्यदा । तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥
ऊर्ध्वं स्वजात्युक्तं तासामाशौचमिष्यते । सद्यःशौचं सपिण्डानां गर्भस्य
सति ॥' इति स्मरणात् ॥ एतच्च सपिण्डानां सद्यःशौचविधानं द्रवभूतगर्भ
वेदितव्यम् । यत्पुनर्वसिष्ठवचनम् (४।३४)—'ऊनद्विवार्षिके प्रेते
पतने च सपिण्डानां त्रिरात्रम्' इति,–तत्पञ्चमषष्ठयोः कठिनगर्भपतनवि
'आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः । अत ऊर्ध्वं[2] प्रसूतिः स्या
सूतकं भवेत् ॥ स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्जनम् । पाते
थामासं पित्रादीनां दिनत्रयम् ॥' इति मरीचिस्मरणात् ॥ सप्तममासा
मृतजनने जातमृते वा सपिण्डानां जनननिमित्तं परिपूर्णमाशौचम्; 'जा
मृतजाते वा सपिण्डानां दशाहम्' इति हारीतस्मरणात्, 'अतः सूतके
त्थानाशौचं सूतकवत्' इति पारस्करवचनाच्च । आ उत्थानादासूतिकाया
नाद्दशाहमिति यावत् । सूतकवदिति शिशूपरमनिमित्तोदकदानरहितमित्य

पाठा०—१ पर्यंतं ङ. २ अत ऊर्ध्वं प्रसवो दशाहं घ.

...मनुरपि—'दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः। शावाशौचं न कर्तव्यं ...शौचं विधीयते ॥' इति। तथा च स्मृत्यन्तरोऽपि—'अन्तर्दशाहोपरतस्य ...काहोभिरेवाशौचम्' इति। एवमादिवचननिचयपर्यालोचनया सपिण्डानां ...निमित्ताशौचसंकोचो नास्तीति गम्यते। यत्पुनर्वृद्धविष्णुवचनम्—'जाते ...मृतजाते वा कुलस्य सद्यःशौचम्' इति,–तच्छिशूपरमनिमित्तस्याशौचस्य ...शुद्धिप्रतिपादनपरं न प्रसवनिमित्तस्य। तथा च पारस्करः—'गर्भे यदि ...तिः स्याद्दशाहं सूतकं भवेत्।' सपिण्डानां प्रसवनिमित्तस्य विद्यमानत्वात्।— ...जातो यदि प्रेयात्सद्य एव विशुद्ध्यति' इति प्रेताशौचाभिप्रायम्। तथा च ...लोकम्—'प्राङ्नामकरणात्सद्यःशौचम्' इति। यत्पुनः कात्यायनवचनम्— ...निवृत्ते दशाहे तु पञ्चत्वं यदि गच्छति। सद्य एव विशुद्धिः स्यान्न प्रेतं नोदक- ...या ॥' इति,–तदपि वैष्णवेन समानार्थम्। यदा तु 'न प्रेतं नैव सूतक'मिति ...तदा सूतकमस्पृश्यत्वं नैव पित्रादीनां भवतीत्यर्थः। अथवाऽयमर्थः—अन्तर्द- ...शाहे यदि शिशूपरमस्तदा न प्रेताशौचम्। यदि तत्र सपिण्डजननं तदा सूतक- ...ति नैव कार्यं, किंतु पूर्वाशौचेनैव शुद्धिरिति। यत्तु बृहन्मनुवचनम्—'जीवञ्जातो ...दि ततो मृतः सूतक एव तु। सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम् ॥ ...ति। यच्च बृहत्प्रचेतोवचनम्—'मुहूर्तं जीवितो बालः पञ्चत्वं यदि गच्छति। ...तुः शुद्धिर्दशाहेन सद्यः शुद्धास्तु गोत्रिणः ॥' इति, तत्रेयं व्यवस्था—जनना- ...न्तरं नाभिवर्धनात्प्राङ् मृतौ पित्रादीनां जनननिमित्तमाशौचं दिनत्रयम्। सद्यः- ...त्वं त्वग्निहोत्राद्यर्थम्; 'अग्निहोत्रार्थं स्नानोपस्पर्शनात्तत्कालं शौचम्' इति शङ्ख- ...स्मरणात्। नाभिवर्धनोत्तरकालं तु शिशुप्रायणेऽपि जनननिमित्तं संपूर्णमाशौचं ...पिण्डानाम्। 'यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम्। छिन्ने नाले ततः ...त्सूतकं तु विधीयते ॥' इति जैमिनिस्मरणात्।

मनुनाऽप्ययमर्थो दर्शितः (५।६६)—'रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशु- ...ध्यति। रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला ॥' इति पूर्वभागस्यार्थो दर्शितः। ...रस्य त्वयमर्थः—रजसि निःसरणादुपरते निवृत्ते रजस्वला स्त्री स्नानेन साध्वी ...दिकर्मयोग्या भवति। स्पर्शनादिविषये पुनरनुपरतेऽपि रजसि चतुर्थेऽहनि ...नाच्छुद्धा भवति। तदुक्तं वृद्धमनुना—'चतुर्थेऽहनि संशुद्धा भवति व्याव- ...रिकी' इति। तथा स्मृत्यन्तरम्—'शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री ...स्वला। दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति ॥ 'पञ्चमेऽहनि' इति ...जोनिवृत्तिकालोपलक्षणार्थम्। यदा रजोदर्शनादारभ्य पुनः सप्तदश ...दिनाभ्यन्तरे रजोदर्शनं तदा अशुचित्वं नास्त्येव; अष्टादशे त्वेकाहाच्छुद्धिः, ...विंशे द्व्यहात्, तत उत्तरेषु त्र्यहाच्छुद्धिः। यथाहात्रिः—'रजस्वला यदि ...ता पुनरेव रजस्वला। अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥ एकोनविंशते- ...रर्वागेकाहं स्यात्ततो द्व्यहम्। विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् ॥' इति।—

पाठा०—१ सूतकाहोभिः ख. २ सद्यः शौचास्तु घ.

यत्तु 'चतुर्दशदिनादर्वागशुचित्वं न विद्यते' इति स्मृत्यन्तरं, तत्र स्नानप्र मभिप्रेतमतो न विरोधः। अयं चाशुचित्वप्रतिषेधो यस्या विंशतिदिनोत्तर प्रायशो रजोदर्शनं तद्विषयः। यस्याः पुनरारूढयौवनायाः प्रागेवाष्टादश त्प्राचुर्येण रजोनिर्गमस्तस्यास्त्रिरात्रमेवाशौचम्। तया च यावत्त्रिरात्रं स्नाना तया स्थातव्यम्; 'रजस्वला त्रिरात्रमशुचिर्भवति सा च नाञ्जीत नाभ्य नाप्सु स्नायादधः शयीत न दिवा स्वप्यात् न ग्रहान्निरीक्षेत नाग्निं स्पृशेत् याच्च रज्जुं सृजेत् नच दन्तान्धावयेत् न हरेन्नच किंचिदाचरेत् अखर्वेण पिबेदञ्जलिना वा पात्रेण लोहितायसेन वेति विज्ञायते' (४-७) इति स्मरणात्।

आङ्गिरसेऽपि विशेषः—'हस्तेऽश्नीयान्मृन्मये वा हविर्भुक् क्षितिशायि रजस्वला चतुर्थेऽह्नि स्नात्वा शुद्धिमवाप्नुयात्॥' इति। पराशरेऽपि विशे 'स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला। पात्रान्तरिततोयेन स्नानं कृत्वा चरेत्॥ सिक्तगात्रा भवेदद्भिः साङ्गोपाङ्गा कथंचन। न वस्त्रपीडनं कुर्या द्वासश्च धारयेत्॥' इति। उशनसाऽप्यत्र विशेषो दर्शितः—'ज्वराभिभू नारी रजसा च परिप्लुता। कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्म चतुर्थेऽहनि संप्राप्ते स्पृशेदन्याऽशुचिस्त्रियम्। सा सचेलावगाह्यापः स्नात्वा पुनः स्पृशेत्। दशद्वादशकृत्वो वा आचमेच्च पुनः पुनः॥ अन्त्ये वाससां त्यागस्ततः शुद्धा भवेच्च सा। दद्याच्छक्त्या ततो दानं पुण्याहेन द्ध्यति॥' इति।

अयं चातुरमात्रे स्नानप्रकारोऽनुसरणीयः। 'आतुरे स्नान उत्पन्ने दश ह्यनातुरः। स्नात्वा स्नात्वा स्पृशेदेनं ततः शुध्येत्स आतुरः॥' (७।१० पराशरस्मरणात्। यदा तु रजस्वलायाः सूतिकाया वा मृतिर्भवति तदा प्रकारः—'सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिकाः। कुम्भे सलिल पञ्चगव्यं तथैव च॥ पुण्यर्ग्भिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः। तेनैव यित्वा तु दाहं कुर्याद्यथाविधि॥' रजस्वलायास्तु—'पञ्चभिः स्नापयि गव्यैः प्रेतां रजस्वलाम्। वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम्॥' एतच्च रजोदर्शनपुत्रजन्मादि; यद्युदयोत्तरकालमुत्पन्नं तदा तद्दिवसप्रभृ होरात्रगणना कार्या। यदा तु रजन्यां रजोदर्शनपुत्रजन्मादि जातं तदा त्प्राक् जननाद्युत्पत्तौ पूर्वदिवसैकदेशाव्यापित्वेऽपि आशौचस्य तत्पूर्वदिवस गणना कार्येत्येकः कल्पः। रात्रिं त्रेधा विभज्याद्ये भागद्वये जननादौ जा दिनं ग्राह्यमिति द्वितीयः। प्रागुदयादित्यपरः। यथाह कश्यपः—'उदिते सूर्ये नारीणां दृश्यते रजः। जननं वा विपत्तिर्वा यस्याहस्तस्य शर्वरी॥ त्रावधिः कालः सूतकादौ विधीयते। रात्रिं कुर्यात्त्रिभागां तु द्वौ भागौ तु॥ उत्तरांशः प्रभातेन युज्यते ऋतुसूतके। रात्रावेव समुत्पन्ने मृते

---

पाठा०—१ आशौचपूर्वदिनं घ.

